ओ३म्

# सामवेदभाष्यम्

## उत्तरार्धम्

कण्ववंशोद्भवेन

तुलसीराम स्वामिना प्रणीतम्

संस्कृतभाषया देशभाषया च

सरलीकृतम्

यज्ञ तेनच

ठस्थे "स्वामि मेशीन यन्त्रालये" मुद्रयित्वा प्रकाशितम्

( मुद्रणाद्यधिकाराः स्वायत्तीकृताः )

THE

# SAMA VEDA BHASHYAM

A

COMMENTARY ON SAMA VEDA SANHITA

IN SANSKRIT AND HINDI

By

**TULSI RAM SWAMI EDITOR VED PRAKASH**

MEERUT.

मूल्यम् ५)

फाल्गुने १९६५

ओ३म्

# सामवेदसंहितायाम्

## तृतीय उत्तरार्चिकः

—*—

इह खलूत्तरार्चिके प्रायश्छन्दआर्चिकाम्नाता अपि बह्वयऋचः समाम्नाता दृश्यन्ते । तत्र कारणम्—छन्दआर्चिके सामोद्भवो यथा स्यात्तथा कृत्वा एकैकशो हि समाम्नाताः । अत्र तु स्तोमनिष्पत्तये सूक्तानि द्वयृचतृचरूपाणि समाम्नायन्ते । स्तोमशब्देन उत्पत्तिषु सोमयागेषु प्रयुज्यमानास्त्रिवृत्पञ्चदशादयोऽभिधीयन्ते । येषां स्वरूपं ताण्ड्यमहाब्राह्मणस्य द्वितीयतृतीययोरध्याययोर्निरूपितमस्ति । यद्धि पूर्वमस्माभिर्द्वितीयाऽध्यायस्य पञ्चमदशतेर्दशम्यामृचि ( १६४ ) उदाहृतं ब्राह्मणवचनेभ्यः ॥ "पञ्चदशान्याज्यानि, सप्तदशानि पृष्ठानि" इत्यादितन्त्रान्तरोक्तेषु आज्येषु पृष्ठेषु च तेते स्तोमा उपयुक्ताः सन्ति । एवं स्तोमनिष्पादकानि तृचादिसूक्तानि उत्तरार्चिकग्रन्थे समाम्नातानि ॥

भाषार्थः—इस उत्तरार्चिक में बहुत सी छन्दआर्चिक की ऋचायें पुनर्वार आई हुई भी देखी जाती हैं, इस का कारण यह भी है कि छन्दआर्चिक में गानग्रन्थ के साम सिद्ध होने के लिये एक २ ऋचा आई थी, परन्तु यहां उत्तरार्चिक में स्तोमों की सिद्धि के लिये दो ऋचाओं के द्व्यृच वा प्रगाथ और तीन ऋचाओं के तृच आदि सूक्तों के प्रकार से कहने की आवश्यकता थी, जिन स्तोमों का विस्तारपूर्वक वर्णन ताण्ड्यमहाब्राह्मण के दूसरे तीसरे अध्यायों में है और जिस में से लेकर थोड़ा सा वर्णन हम पूर्व छन्दआर्चिक अध्याय २ दशति

पांच ५ ऋचा १०वीं (१६४) पृष्ठ २७७ में लिख आये हैं। "पन्द्रह आज्य और सत्रह पृष्ठ होते हैं" इत्यादि अन्य ग्रन्थों में कहे आज्यों और पृष्ठों में वे वे स्तोम काम में आते हैं। इस प्रकार के स्तोमों की सिद्धि के लिये यह उत्तरार्चिक का क्रम है॥

## अथ प्रथमप्रपाठके प्रथमार्धम्

अथ प्रथमाध्याये प्रथमसूक्तस्य तृचस्य—असितः काश्यपो देवलो वा ऋषिः। सोमो देवता। गायत्री छन्दः॥

### तत्र प्रथमा।

१ २ ३ १२ ३ १ २
उपास्मै गायता नरः पवमानायेन्दवे।
३ २ ३ १ २र
अभि देवाँ इयक्षते॥ १॥ (६५१)

पदपाठः—उप अ०। अस्मै ४। गायत क्रि०। नरः सं०। पवमानाय, इन्दवे ४। अभि अ०। देवान् २। इयक्षते ४॥

अन्वितपदार्थः— (नरः) हे मनुष्याः! (अस्मै) (पवमानाय) शोधकाय पावनाय (इन्दवे) परमेश्वराय (देवान्) (अभि) लक्षीकृत्य (इयक्षते) यष्टुमिच्छते आत्मप्रसादं दातुमिच्छते (उप गायत) उपगानं कुरुत॥ अनेन स्तोमगानमपि ध्वन्यते॥

यद्वा—(इन्दवे) सोमायौषधये। शेषं पूर्ववत्॥ ऋग्वेदे ९।११।१ऽपि॥ १॥ (६५१)

भावार्थः— (नरः) हे मनुष्यो! (अस्मै) इस (पवमानाय) पावन शुद्धिकारक (इन्दवे) परमैश्वर्यवान् (देवान्) देवतों को (अभि इयक्षते) लक्ष्य करके अपना ज्ञानप्रदानरूप यजन करना चाहते हुवे परमात्मा के लिये (उप गायत) उपगान करो। इस क्रिया से स्तोमगान की भी ध्वनि ध्वनित है॥

अथवा—(इन्दवे) सोम ओषधि के लिये। शेष पूर्ववत् जानो॥ ऋ० ९। ११। १ में भी॥ १॥ (६५१)

अथ द्वितीया ।

३ २ ३ १ २ ३ १ २र
अभि ते मधुना पयोऽथर्वाणो अशिश्रयुः ।
३२ ३ १ २ ३ २
देवं देवाय देवयु ॥ २ ॥ ( ६५२ )

पदपाठः-अभि अ० । ते १ । मधुना ३ । पयः २ । अथर्वाणः १ । अशिश्रयुः क्रि० । देवम् २ । देवाय ४ । देवयु २ ॥

अन्वितपदार्थः—(ते) ( अथर्वाणः ) ज्ञानिनः स्थिरात्मान ऋषयः ( देवाय ) परमेश्वरप्राप्तये (देवम् ) दिव्यगुणम् अत एव ( देवयु ) देवं कामयमानम् ( पयः ) प्राणम् तद्रूपमन्नम् (मधुना) आत्मज्ञानानन्दरसेन (अभि अशिश्रयुः) संस्कुर्वन्ति ॥

अथवा—( ते अथर्वाणः ) ऋत्विजः (देवाय) वायुप्रभृति-देवसमूहाय (देवम् ) दिव्यम् (देवयु) (पयः) सोमरसम् ( मधुना) माक्षिकादिना (अभि अशिश्रयुः) ॥

अयमात्मा सर्वेषां भूतानां मधु (शत० १४ । ५ । ५ । १४ इदं वै तन्मधु (शत० १४ । ५ । ५ । १६—११) प्राणो वाऽन्नं पयः प्राणएवान्नाद्यन्ततः प्रतितिष्ठति (शत० १२ । ८ । १ । २०) अथर्वाण इति पदनाम निघं० ५ । ५ अथर्वाणोऽथनवन्तस्थर्वतिश्चरतिकर्मा तत्प्रतिषेधः । निरु० ११ । १८ ॥ ऋग्वेदे १ । ११ । २ऽपि ॥ २ ॥ ( ६५२ )

भाषार्थः-( ते ) वे (अथर्वाणः) स्थिरात्मा ज्ञानी लोग ( देवाय ) ईश्वर प्राप्ति के लिये ( देवम् ) दिव्यगुणयुक्त ( देवयु ) परमात्मदेव को चाहने वाले (पयः) प्राण रूपी अन्न को ( मधुना ) आत्मज्ञानानन्दरूपी मिठाई से ( अभि अशिश्रयुः) संस्कृत करते हैं ॥

अथवा-( ते अथर्वाणः) वे ऋत्विज् अध्वर्यु आदि लोग (देवाय) वायु आदि देवगण के लिये (देवम्) दिव्य (पयः) सोम रस को (मधुना) मिठाई से (अभि अशिश्रयुः) संस्कृत करते हैं ।।

शतपथ ब्राह्मण १४ । ५ । ५ । १४, १६, १७, १८,१९, ।। १२ । ८ । १ । २०।। निघण्टु ५ । ५ ।। निरुक्त ११ । १८ के प्रमाण संस्कृत भाष्य में देखिये ।। ऋ० ९ । ११ । २ में भी ।। २ ।। ( ६५२ )

अथ तृतीया ।

१ २ ३ २उ ३ १ २र ३ १ २र
स नः पवस्व शं गवे शं जनाय शमर्वते ।
१ २ ३ १ २
शꣳ राजन्नोषधीभ्यः ।। ३ ।। ( ६५३ )

पदपाठः-सः १ । नः ६ । पवस्व क्रि० । शम् २। गवे ४ । शम् २ । जनाय ४ । शम् २ । अर्वते ४ । शम् २। राजन् सं० । ओषधीभ्यः ४ ।।

अन्वितपदार्थः—( राजन् ) हे प्रकाशमान ! परमात्मन् ! वा सोम ! ओषधिराज ! (सः) स त्वम् (नः) अस्माकं ( गवे ) गवादिपशुभ्यः (शम्) सुखं ( जनाय ) पुत्रादिवर्गाय ( शम् ) सुखम् (अर्वते) अश्वाय प्राणाय (शम् ) (ओषधीभ्यः) गोधूमादिभ्यः (शम् ) सुखं (पवस्व) क्षारय ।।

अर्वेत्यश्वनाम निघं० १ । १४ ।। त्रयोश्वा द्वौ सव्यष्टृसारथी ते पञ्च प्राणाः । श० ५ । २ । ४ । ९ ।। ऋग्वेदे ९ । ११ । ३ ऽपि ।। ३ ।। ( ६५३ )

भाषार्थः-( राजन् ) हे प्रकाशमान परमेश्वर ! वा ओषधिराज सोम ! (सः) वह तू (नः) हमारे (गवे) गौ आदि पशुओं के लिये (शम्) सुख (जनाय) पुत्रादि वर्ग के लिये (शम् ) सुख (अर्वते) प्राण के लिये ( शम् ) सुख और ( ओषधीभ्यः ) गेहूं आदि ओषधियों के लिये (शम्) सुख (पवस्व) वर्षाव।।

निघण्टु १ । १४ शतपथ ब्रा० ५ । २ । ४ । ९ के प्रमाण संस्कृत भाष्य में देखिये ।। ऋ० ९ । ११ । ३ में भी ।। ( ६५३ )

अथ द्वितीयतृचस्य—कश्यपो मारीच ऋषिः । पवमानः सोमो देवता ।
गायत्री छन्दः ॥
तत्र प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २
दविद्युतत्या रुचा परिष्टोभन्त्या कृपा ।
१ २ ३ १ २र
सोमाः शुक्रागवाशिरः ॥ ४ ॥ ( ६५४ )

पदपाठः—दविद्युतत्या,रुचा,परिष्टोभन्त्या,कृपा ३। सोमाः,शुक्राः,गवाशिरः१ ॥

अन्वितपदार्थः—( शुक्राः ) शुक्लाः ( गवाशिरः ) गव्याशिराः दुग्धमिश्रिताः ( सोमाः )। ( दविद्युतत्या ) देदीप्यमानया ( परिष्टोभन्त्या ) पुनःपुनरभ्यस्यमानया ( कृपा ) सामर्थ्यवत्या (रुचा) दीप्त्या अवभासन्ते इति शेषः ॥

ऋग्वेदे ९ । ६४ । २८ ऽपि ॥४॥ (६५४)

भावार्थः-( शुक्राः ) श्वेत ( गवाशिरः) दूध मिले ( सोमाः ) सोम ( दविद्युतत्या ) देदीप्यमान (परिष्टोभन्त्या ) बार बार अभ्यास की जाती हुई (कृपा) समर्थ (रुचा) दीप्ति से [चमकते हैं] । ऋ० ९।६४ । २८ में भी॥४॥ (६५४)

अथ द्वितीया ॥

३ २ ३ १ २ ३ १ २र ३क २र
हिन्वानो हेतृभिर्हित आ वाजं वाज्यक्रमीत् ।
१ २ ३ १ २
सीदन्तो वनुषो यथा ॥ ५ ॥ ( ६५५ )

पदपाठः—हिन्वानः १ । हेतृभिः ३ । हितः १ । आ अ० । वाजम् २ । वाजी १ । अक्रमीत् क्रि० । सीदन्तः १ । वनुषः १ । यथा अ० ॥

अन्वितपदार्थः—(यथा) येन प्रकारेण ( हेतृभिः ) प्रेरकैः ( हिन्वानः ) प्रेर्यमाणः ( वनुषः ) वीरः ( हितः ) ( वाजी) अश्वः( आवाजम् )यावद्बलम् ( अक्रमीत् ) धावति । तथैव

(सीदन्तः) धावन्तः सोमा आक्राम्यन्ति इति शेषः ॥

वनुष्यतिः क्रुध्यतिकर्मा निघं० २ । १४ ॥ ऋग्वेदे ९।६४। २९ ऽपि ॥ ५ ॥ ( ६५५ )

भावार्थः-( यथा ) जिस प्रकार (हेतृभिः) प्रेरकों से (हिन्वानः ) प्रेरित किया हुवा ( वनुषः ) वीर (हितः) कहने में चलने वाला (वाजी) बलवान् अश्व ( आवाजम् ) बल वा शक्ति भर ( अक्रमीत् ) दौड़ता है, वैसे ही (सीदन्तः) तीव्र गति से चलते हुवे सोम दौड़ते हैं ।। निघं० २ । १४ में व. नुष्यति का अर्थ क्रोध वा वीरता है ।। ऋ० ९ । ६४ । २९ में भी ॥५॥ (६५५)

अथ तृतीया ॥

३ १ २ ३ १२ ३ २ ३ १ २
ऋधक् सोम स्वस्तये संजग्मानो दिवा कवे ॥
१ २ ३ १ २ ३ ४
पवस्व सूर्यो दृशे ॥ ६ ॥ ( ६५६ )

पदपाठः-ऋधक् १ । सोम सं० । स्वस्तये ४ । संजग्मानः १ । दिवा ३ । कवे सं० १ । पवस्व क्रि० । सूर्यः १ । दृशे ४ ॥

अन्वितपदार्थः-(कवे) बुद्धितत्त्वोद्बोधक ! (सोम) सोम! ( ऋधक् ) ऋध्नुवन् (दिवा) आकाशेन ( संजग्मानः ) संगतश्च (सूर्यः) आदित्यो यथा ( दृशे ) दर्शनसाहाय्याय पवते तथा त्वम् ( स्वस्तये ) सुखाय (पवस्व) दिवमस्माभिर्हुतोगच्छ ॥

यथा सूर्यो दृशे दिवा संगत उदेति तथैव सोमोऽपि निज-सुखाय दिवा आकाशेन संगत्यै होतव्य इति भावः ॥

इवशब्द आद्रियते । दृशे दर्शनाय यथा सूर्य उदेति तथैव त्वमपि उदिहीति विवरणमतं च ॥ ऋधगिति पृथभावस्य प्रवचनं भवत्यथाप्यृध्नोत्यर्थे दृश्यते । निरु० ४।२५॥ ऋग्वेदे तु ९। ६४।३० दिवः कविरिति पाठः ॥ ६ ॥ ( ६५६ )

भावार्थः-( कवे ) बुद्धितत्त्व को बढ़ाने जगाने वाले ! ( सोम ) सोम ! ( ऋधक् ) चढ़ता बढ़ता हुवा ( दिवा ) और आकाश से संगत होता हुवा ( सूर्यः ) जैसे सूर्य ( दृशे ) दृष्टि की सहायता के लिये चढ़ता है वैसे तू भी (स्वस्तये) सुख के लिये (पवस्व) हम से हवन किया हुवा आकाश को प्राप्त हो ॥

जैसे दृष्टि के लिये सूर्य आकाश में चढ़ता है वैसे सुख के लिये सोम का हवन कर आकाश में चढ़ाना चाहिये ॥

विवरणकार की संमति, निरुक्त ४।२५ का प्रमाण और ऋ०९।६४।३० का पाठान्तर संस्कृत भाष्य में देखिये ॥ ६ ॥ (६५६)

अथ तृतीयतृचस्य-वैखानसा आङ्गिरसा ऋषयः। सोमो देवता। गायत्री छन्दः ॥

तत्र प्रथमा ।

१ २ ३ २ ३ १ २
पवमानस्य ते कवे वाजिन्त्सर्गाअसृक्षत ।
१ २ ३ १ २ ३ १ २
अर्वन्तो न श्रवस्यवः ॥ ७ ॥ ( ६५७ )

पदपाठः- पवमानस्य, ते ६। कवे, वाजिन् सं०। सर्गाः १। असृक्षत क्रि०। अर्वन्तः १। न अ०। श्रवस्यवः १ ॥

अन्वितपदार्थः—(कवे) मेधाविन्( वाजिन् )योगबलयुक्त ! (पवमानस्य) योगेनात्मानं शोधयतः (ते) तव (श्रवस्यवः) यश इच्छवः ( सर्गाः ) प्राणायामान्तर्गता वायुविसर्गाः (असृक्षत) सृज्यन्ते (न) यथा ( अर्वन्तः ) अश्वाः ॥

यद्वा—( कवे ) मेधातत्त्वोद्बोधक ! ( वाजिन् ) बलप्रद ! सोम ! (पवमानस्य) वायुशुद्धिं कुर्वतः (ते) तव (सर्गाः) धाराः ( श्रवस्यवः ) यजमानयशो विस्तृतं कुर्वन्त्यः ( असृक्षत ) सृज्यन्ते । (न) यथा(अर्वन्तः) अश्वा मन्दुरातो निर्गच्छन्ति तद्वत्॥

ऋग्वेदे ९ । ६६ । १० अपि ॥७॥ (६५७)

भाषार्थ-:(कवे) विद्वन् ! ( वाजिन् ) योगबलैश्वर्ययुक्त ! पुरुष ! ( पवमानस्य ) योगाभ्यास से आत्मा को शोधने वाले (ते) तेरे (सर्गाः) प्राणायामान्तर्गत वायुओं के विसर्ग (श्रवस्यवः) तेरा यश चाहते हुवे (सृज्यन्ते) छोड़े जाते हैं ( न ) जैसे (अर्वन्तः) अश्व ॥

अथवा-(कवे) बुद्धितत्व के जगाने वाले !(वाजिन् ) बलदायक ! सोम ! ( पवमानस्य ) वायु की शुद्धि करते हुवे (ते) तेरी (सर्गाः) धारायें ( श्रवस्यवः) यजमान का यश चाहती हुईं (असृक्षत) छोड़ी जाती हैं (न) जैसे ( अर्वन्तः ) अश्वशाला से अश्व छोड़े जाते हैं, तद्वत् ॥ ऋ० ९ । ६६ । १० में भी ॥ ७ ॥ ( ६५७ )

अथ द्वितीया ।

२ ३ १२ ३ २ ३ १ २ ३ १२ ३ १ २
अच्छा कोशं मधुश्चुतमसृग्रं वारे अव्यये ।
१ २ ३ १ २
अवावशन्त धीतयः ॥८॥ (६५८)

पदपाठः-अच्छ अ० । कोशम्, मधुश्चुतम् २ । असृग्रम् क्रि० । वारे,अव्यये ७ । अवावशन्त क्रि० । धीतयः १ ॥

अन्वितपदार्थः-( धीतयः ) धीतिर्ध्यानं तद्वन्तः ( अव्यये) अविमये मानससूर्यमये (वारे) नाडीसमूहे ( मधुश्चुतम् ) मधूररसस्यानन्दस्य च्यावयितारं ( कोशं ) निधिम् ( असृग्रम् ) उद्घाटयन्ति ( अच्छ ) सुष्ठु ( अवावशन्त ) कामयन्ते च ॥

यद्वा-( धीतयः ) ऋत्विजामङ्गुलयः ( अव्यये वारे ) ऊर्णामये दशापवित्रे ( मधुश्चुतं कोशम् ) सोमकोशम् (असृग्रम्) उद्घाटयन्ति (अच्छ अवावशन्त), च ॥ ऋग्वेदे ९ । ५६ । ११ अपि ॥ ८ ॥ (६५८)

भाषार्थः—( धीतयः ) ध्यानी लोग ( अव्यये ) मानससूर्यमय (वारे) नाडीसमूह पर ( मधुश्चुतम् ) मधुर=आनन्द टपकाने वाले ( कोशम् ) घट को (अस्रग्रम् ) उघाड़ते हैं और (अच्छ ) अच्छे प्रकार (अवावशन्त) चाहते हैं॥

अथवा—(धीतयः) ऋत्विजों की अङ्गुलियें (अव्यये) ऊर्णामय (वारे) दशापवित्र पर ( मधुश्चुतम् ) मिठास टपकाने वाले ( कोशम् ) सोमघट को ( अस्रग्रम् ) उघाड़ते और ( अच्छ ) भले प्रकार ( अवावशन्त ) इच्छा करते हैं। ऋ० ९। ६६ । ११ में भी ।।८।। (६५८)

अथ तृतीया ।।

१ २ ३२उ ३ २ ३ २ ३ २ ३१२
अच्छा समुद्रमिन्दवोस्तं गावो न धेनवः ।
१ २ ३ २ ३ २ ३ २
अग्मन्नृतस्य योनिमा ॥१॥ ( ६५९ )

पदपाठः—अच्छ अ० । समुद्रम् २ । इन्दवः १ । अस्तम् २ । गावः १ । न अ० । धेनवः १ । अग्मन् क्रि० । ऋतस्य ६ । योनिम् २। आ अ० ॥

अन्वितपदार्थः—( इन्दवः ) सोमाः सौम्यस्वभावा भक्ता उपासकाः ( ऋतस्य ) सत्यस्य वेदस्य ( योनिम् ) कारणम् ( समुद्रम् ) समुद्रवद्गम्भीरं परमेश्वरम् ( अच्छ ) सानन्दम् (आ अग्मन् ) समन्ताद्गच्छन्ति । दृष्टान्तः—( न ) यथा ( धेनवः ) दुग्धदात्र्यः ( गावः ) ( अस्तम् ) गृहम् [ यतोगतास्तदेव ] आगच्छन्ति तद्वत् ॥

यद्वा—( इन्दवः ) सोमाः ( ऋतस्य ) यज्ञस्य ( योनिम् ) स्थानम् ( समुद्रम् ) अन्तरिक्षम् ( अच्छ आ अग्मन् ) धेनवो गावोस्तं न ) ॥

अत्र हि श्रीसत्यव्रतः सामश्रम्याह—"ज्योतिष्टोमिकं बहिष्पवमानं समाप्तमिति विवरणकारः । तदिदं सूक्तत्रयगानसाध्यं

स्तोत्रं बहिष्पवमानमित्युच्यते । तत्रावस्थितानामृचां पवमानार्थत्वात्, बहिःसंबन्धाच्च। इति मीमांसादर्शने जैमिनिः । अध्याये ९ पादे ४ अधिकरणे ३ । न खल्विदं स्तोत्रमितरस्तोत्रवत्सदोनामकस्य मण्डपस्य मध्ये औदुम्बर्याः स्तम्बशाखायाः सन्निधौ प्रयुज्यते, किन्तु सदसो बहिः प्रसर्पद्भिः प्रयुज्यते । बहिष्पवमाननामवेदी, यत्र स्थित्वैतद्बहिष्पवमाननामनवर्क्साध्यत्रिवृन्नामस्तोमपाठपूर्वकं मार्जनं भवति; सा तु उदग्वंशानामशालान्तर्गतसदोमण्डपात्पश्चिमायाः प्राचीनवंशानामशालान्तर्गतैष्टिकवेदेरुत्तरतो विद्यते । अस्य च बहिष्पवमानस्य प्रकृतियागेऽग्निष्टोमादौ त्रिवृन्नामकः स्तोमो भवति" । इत्यादि ॥

स चास्माभिः पूर्वं ताण्ड्यमहाब्राह्मणस्य द्वितीयप्रपाठकस्थेन खण्डत्रयेणोदाहृत्य व्याख्यातएव (पृष्ठे २७५ द्रष्टव्यः)

समुद्र इत्यन्तरिक्षनाम निघं० १ । ३ ॥ अस्तमिति गृहनाम ३ । ४ ॥ ऋग्वेदे ९ । ६६ । १२ ऽपि ॥ ९ ॥ (६५९)

भाषार्थः-( इन्दवः ) शान्तस्वभाव भगवदुपासक लोग ( ऋतस्य योनिम् ) सत्य वेद के धाम ( समुद्रम् ) समुद्रतुल्य गम्भीर परमात्मा को ( अच्छ ) भले प्रकार सानन्द (आ अग्मन्) प्राप्त होते हैं । दृष्टान्त-( न ) जैसे (धेनवः गावः) दुधार गौवें (अस्तम्) घर को [जहां से गई थीं] प्राप्त होतीं हैं ।।

यद्वा( इन्दवः ) सोम ( ऋतस्य योनिम् ) यज्ञ के स्थान ( समुद्रम् ) अन्तरिक्ष को (अच्छ आ अग्मन्) भलेप्रकार सब ओर से प्राप्त होते हैं (धेनवः) दुधार (गावः) गौवें (न) जैसे (अस्तम्) दूध देने को घर आती हैं तद्वत् ।।

निघण्टु १ । ३ ।। ३ । ४ के प्रमाण संस्कृतभाष्य में देखिये ।। ऋ० ९ । ६६ । १२ में भी ।।

इस अवसर में श्री सत्यव्रत सामश्रमी जी कहते हैं कि "विवरणकार

यहां ज्योतिष्टोमसम्बन्धी बहिष्पवमान समाप्त लिखते हैं। और मीमांसाद० ९। ४। ३ में लिखा है कि यह तीन सूक्तों के गान से साध्य स्तोत्र बहिष्पवमान कहाता है। क्योंकि उन में की ऋचायें पवमानार्थ हैं और बाहर से सम्बन्ध है। यह स्तोत्र अन्य स्तोत्रों के समान सदस् नामक मण्डप के भीतर उदुम्बर की स्तम्बशाखा के समीप नहीं पढ़ा जाता, किन्तु सदस् से बाहर चलते हुवे इसे पढ़ते हैं। बहिष्पवमान नामक वेदी वह है, जहां स्थित होकर इस बहिष्पमान नाम ९ नव ऋचाओं से साध्य त्रिवृत् नामक स्तोम का पूर्व पाठ कर के मार्जन होता है और वह वेदी उद्‌ग्वंशा नाम शाला के अन्तर्गत सदोमण्डप के पश्चिम की ओर प्राचीनवंशा नाम शाला के अन्तर्गत ऐष्टिक वेदी से उत्तर की ओर होती है और इस बहिष्पवमान के प्रकृतियाग अग्निष्टोमादि में त्रिवृत् नामक स्तोम होता है"। इत्यादि ॥

इस त्रिवृत् की व्याख्या ताण्ड्यमहाब्राह्मण प्रपाठक २ के ३ खण्डों के अनुसार हम पूर्व ( पृ० २११ में ) कर चुके हैं ॥ ९ ॥ ( ६५९ )

## इति प्रथमः खण्डः ॥

अथ द्वितीयखण्डे प्रथमतृचस्य भरद्वाज ऋषिः। अग्निर्देवता। गायत्री छन्दः।

२ ३ १ २ ३ १ २ ३ २ ३ १ २
अग्न आयाहि वीतये गृणानो हव्यदातये।
१ २र ३ १ २
नि होता सत्सि बर्हिषि ॥ १ ॥ ( ६६० )

छन्दआर्चिके ( १ ) व्याख्याता। अत्र पुनः पाठोस्ति भिन्नप्रकारकसूक्तसमन्वयादिप्रयोजनेभ्यः ॥ ( ६६० )

भाषार्थः— इस की व्याख्या छन्दआर्चिक ( १ ) में कर चुके हैं। यहां पुनर्वार पाठ, भिन्नप्रकार के सूक्त में समन्वित होने आदि प्रयोजनार्थ जानिये ॥ ( ६६० )

अथ द्वितीया।

१ २ ३ १ २ ३ १ २
तं त्वा समिद्भिरङ्गिरो घृतेन वर्धयामसि।

३ १ २
बृहच्छोचा यविष्ठ्य ॥ २ ॥ ( ( ६६१ )

पदपाठः– तम्, त्वा२। समिद्भिः ३। अङ्गिरः सं० । घृतेन ३ । वर्धयामसि क्रि० । बृहत् २ । शोच क्रि० । यविष्ठ्य सं० ।

अन्वितपदार्थः—(अङ्गिरः) प्रकाशमान ! (यविष्ठ्य) युवतम ! बलवत्तम ! अग्ने ! वा परमात्मन् ! ( तम् )पूर्वमन्त्रोक्तं (त्वा) त्वाम् (समिद्भिः)काष्ठैः,समिन्धनसाधनैर्योगाभ्यासादिभिर्वा ( घृतेन ) आज्येन, स्नेहेन प्रीत्या त्वत्प्रवणया वृत्त्या वा (वर्धयामसि) प्रज्वलितमत्यन्तंकुर्याम,हृदि बहुध्यातं वा कुर्याम। त्वंच ( बृहत् ) महत् यथा स्यात्तथा ( शोच ) दीप्यस्व ॥

यजुर्वेदे ३ । ३ ऋग्वेदे ६ । १६ । ११ ऽपि ॥१॥ (६६१)

भाषार्थः–(अङ्गिरः) प्रकाशमान ! ( यविष्ठ्य ) अतिबलिष्ठ ! अग्ने ! वा परमात्मन् ! ( तम् ) उस पूर्व मन्त्रोक्त ( त्वा ) आप को ( समिद्भिः ) समिधाओं वा योगाभ्यासादि साधनों से तथा(घृतेन)घृत वा स्नेह=प्रीति=आप की ओर झुकाव से हम ( वर्धयामसि ) अत्यन्त प्रज्वलित, वा हृदय में अत्यन्त साक्षात् करें और आप (बृहत्) बहुत (शोच) प्रकाश कीजिये ।।

यजुः ३ । ३ ऋ० ६ । १६ । ११ में भी ॥ १ ॥ (६६१)

अथ तृतीया ।

१ २ ३ २ ३ २ ३ १ २
स नः पृथु श्रवाय्यमच्छा देव विवाससि ।
३ १ २ ३ १ २
बृहदग्ने सुवीर्यम् ॥ ३ ॥ ( ६६२ )

पदपाठः–सः १ । नः ४ । पृथु, श्रवाय्यम् २ । अच्छ अ० । देव सं० । विवाससि क्रि० । बृहत् २ । अग्ने सं० । सुवीर्यम् २ ॥

अन्वितपदार्थः–(अग्ने) प्रकाशमान! (देव) दिव्यगुण! (सः) पूर्वोक्तस्त्वम् ( पृथु ) विस्तीर्णम् (श्रवाय्यम्) श्रवणीयं प्रशस्यम्

(बृहत्) महत्परिमाणकम् (सुवीर्यम्) शोभनं वीर्यम् (नः) अस्मभ्यम् (अच्छ) सुष्ठु (विवाससि) अभिगमयसि ॥

ऋग्वेदे ६ । १६ । १२ ऽपि ॥३॥ (६६२)

भावार्थः-( अग्ने ) प्रकाशमान ! ( देव ) दिव्यगुणयुक्त ! ( सः ) पूर्वोक्त आप ( पृथु ) विस्तृत ( श्रवाय्यम् ) सुनने योग्य प्रशंसनीय ( बृहत् ) बड़े भारी (सुवीर्यम् ) शोभायुक्त वीर्य को (नः) हमें (विवाससि) प्राप्त कराते हैं॥ ऋ० ६ । १६ । १२ में भी ॥ ३ ॥ (६६२)

अथ द्वितीयतृचस्य—विश्वामित्रो जमदग्निर्वा ऋषिः ।
मित्रावरुणौ देवते । गायत्री छन्दः ।

१ २ ३ १ २र
आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम् ।
२ ३ १ २
मध्वा रजाᳬसि सुक्रतू ॥ ४ ॥ ( ६६३ )

व्याख्याता ( २२० )

भावार्थ इस का ( २२० ) पर कर चुके हैं, वहीं मित्र वरुण का निरुक्त भी लिख आये हैं ॥ ४ ॥ (६६३ )

अथ द्वितीया ।

३ १ २ ३ १ २ ३ १ २र
उरुशᳬसा नमोवृधा मह्ना दक्षस्य राजथः ।
१ २
द्राघिष्ठाभिः शुचिव्रता ॥ ५ ॥ (६६४)

पदपाठः—उरुशंसा, नमोवृधा १ । मह्ना ३ । दक्षस्य ६ । राजथः क्रि० । द्राघिष्ठाभिः ३ । शुचिव्रता १ ॥

अन्वितपदार्थः—(उरुशंसा) उरुशंसौ बहुशंसनीयौ (नमोवृधा ) नमोवृधौ नमसा हव्यलक्षणेनान्नेन वर्धमानौ (शुचिव्रता) शुचिव्रतौ पवित्रकर्माणौ मध्यस्थानौ मित्रावरुणौ वर्षकौ देवौ

(दक्षस्य) बलस्य (मह्ना) महत्त्वेन (द्राघिष्ठाभिः)दीर्घतमाभिर्दामिनीभिः (राजथः) राजेते ॥

नम इत्यन्ननाम निघं० २।७॥ दक्षइति बलनाम २।९॥ व्रतमिति कर्मनाम २।१॥ उरु इति बहुनाम ३।१॥ ऋग्वेदे ३।६२।१७ऽपि ॥५॥ (६६४)

भाषार्थः-(उरुशंसा) बहुत वर्णनीय गुण कर्म स्वभाव वाले (नमोवृधा) हव्यरूपी अन्न से बढ़ने वाले (शुचिव्रता) शुद्धिकारक मित्र और वरुण नामक मध्यस्थान वृष्टिकारक देव (दक्षस्य मह्ना) बल की बड़ाई से (द्राघिष्ठाभिः) अत्यन्त लम्बी बिजुलियों के साथ (राजथः) विराजते हैं ॥

निघं० २।७॥ २।९॥ २।१॥ ३।१ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ३।६२।१७ऽपि ॥ ५॥ (६६४)

अथ तृतीया ।

३ २ ३१२ ३ १२३१२
गृणाना जमदग्निना योनावृतस्य सीदतम् ।
३ १ २र
पातꣳ सोममृतावृधा ॥६॥ (६६५)

पदपाठः-गृणाना १। जमदग्निना ३। योनौ ७। ऋतस्य ६। सीदतम्, पातम् क्रि०। सोमम् २। ऋतावृधा १॥

अन्वितपदार्थः—मित्रावरुणौ ! वृष्टिदेवौ ! युवाम् (गृणाना) गृणानौ प्रशस्यमानौ सन्तौ (ऋतस्य) उदकस्य (योनौ) गगनमण्डले (सीदतम्) स्थितौ भवतम् तथा (जमदग्निना) कुण्डे जाज्वल्यमानेनाग्निना हूयमानम् (सोमम्) सोमाद्योषधिरसम् (पातम्) पिबतम् तेन च (ऋतावृधा) वृष्टेर्जलस्य वर्धकौ स्यातम् ॥

अयं भावः—मित्रावरुणसंज्ञकौ वायुविशेषौ सूर्यकिरणविशेषौ वा तद्वर्णनयुक्तवेदमन्त्रैर्वर्ण्यमानौ आकाशमध्ये स्थितौ प्रज्वलिताग्नौ हूयमानेन सोमेन वर्धमानौ वृष्टिजलस्य वर्धकौ भवतः ॥

ऋतमित्युदकनाम निघं० १। १२॥ ऋग्वेदे ३। ६२। १८ अपि ॥ ६ ॥ ( ६६५ )

भाषार्थः—मित्र और वरुण संज्ञक आकाशगत देव=वायुविशेष वा अवस्थाविशेषापन्न सूर्यकिरण (गृणाना) वेदमन्त्रों से वर्णित किये जाते हुवे (ऋतस्य) जल के (योनौ) स्थान=गगनमण्डल में( सीदतम् )स्थित हों तथा(जमदग्निना) जाज्वल्यमान दहकते अग्नि से हूयमान ( सोमम् ) सोमादि ओषधिरस को ( पातम् ) पीवें। उस से ( ऋतावृधा ) वृष्टिजल के बढ़ाने वाले हों ॥

ऋ० ३। ६२। १८ में भी ॥ ६ ॥ ( ६६५ )

अथ तृतीयतृचस्य—इरिमिठ ऋषिः। इन्द्रो देवता। गायत्री छन्दः ॥

१ २ ३ २उ ३ २ ३ २ ३ १ २ ३ २
आयाहि सुषुमा हित इन्द्र सोमं पिबा इमम्।
२उ ३ १ २ ३ २ ३
एदं बर्हिः सदो मम ॥७॥ (६६६) व्याख्याता (१९१)

इस की व्याख्या (१९१) बड़ी संख्यामें देखिये।।७॥(६६६)

अथ द्वितीया ॥

१ २ ३ २ ३ २ ३ १२ ३ १ २
आ त्वा ब्रह्मयुजा हरी वहतामिन्द्र केशिना।
२ ३ १ ३
उप ब्रह्माणि नः शृणु ॥ ८ ॥ ( ६६७ )

पदपाठः—आ अ०। त्वा २। ब्रह्मयुजा, हरी १। वहताम् क्रि०। इन्द्र सं०। केशिना १। उप अ०। ब्रह्माणि २। नः ६। शृणु क्रि० ॥

अन्वितपदार्थः—(इन्द्र)परमेश्वर! (केशिना)केशिनौ वृत्तिरूप-

केशवन्तौ(ब्रह्मयुजा) ब्रह्मणि युक्तौ (हरी) आत्मा मनश्चेति द्वौ (त्वा)त्वाम् ( आवहताम् ) प्राप्नुताम् (नः) अस्माकम् (ब्रह्माणि) वैदिकस्तोत्राणि ( उप शृणु ) अङ्गीकुरु ॥

यद्वा-( इन्द्र ) विद्युत् ! (केशिना) रश्मिवन्तौ (ब्रह्मयुजा) ब्रह्मणा परमात्मना योजितौ (हरी) हारकौ धारणाकर्षणाख्याववश्वौ ( त्वा ) त्वाम् ( आवहताम् )प्राप्नुताम् (नः) अस्मकाम् ( ब्रह्माणि ) बृहन्ति हवींषि (उपशृणु) स्वीकुरु ॥

हरी इन्द्रस्य निघं० १ । १५ ॥ केशी—केशा रश्मयस्तैस्तद्वान् । निरु० १२ । २५ ॥ ऋग्वेदे ८।१७ । २ अपि॥८॥(६६७)

भावार्थः—( इन्द्र ) परमेश्वर ! ( केशिना ) वृत्तिरूप केशों वाले (ब्रह्मयुजा ) ब्रह्म में योग करने वाले (हरी) आत्मा और मन दोनों (त्वा) आप को ( आवहताम् ) प्राप्त हों (नः) हमारे ( ब्रह्माणि ) वेदोक्त स्तोत्रों को ( उप शृणु ) स्वीकार कीजिये ॥

यद्वा—(इन्द्र) विद्युत् ! (केशिना) किरणरूपी केशों वाले (ब्रह्मयुजा) ब्रह्म परमात्मा के जोड़े हुए (हरी) धारण और आकर्षण अश्व (त्वा) तुझे (आवहताम् ) प्राप्त हों (नः) हमारे ( ब्रह्माणि ) बड़े हविषों को ( उप शृणु ) ग्रहण कर ॥

निघण्टु १ । १५॥ निरुक्त १२ । २५ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ८ । १७ । २ में भी ॥८॥ (६६७)

अथ तृतीया ॥

३ १ २ ३ २ ३ १ २ ३ २ ३ ३ १ २
ब्रह्माणस्त्वा युजा वयꣳ सोमपामिन्द्र सोमिनः ।
३ १ २
सुतावन्तो हवामहे ॥ ९ ॥ (६६८)

पदपाठः—ब्रह्माणः १ । त्वा २ । युजा ३ । वयम् १ । सोमपाम् २ । इन्द्र सं० । सोमिनः १ । सुतावन्तः १ । हवामहे क्रि० ॥

अन्वितपदार्थः—(इन्द्र) परमेश्वर ! (सोमिनः) सौम्यभावाः (सुतावन्तः) कृतहृदयशुद्धयः (ब्रह्माणः) वेदविदः (वयम्) योगिनः (युजा) योगेन (सोमपाम्) सौम्यभावस्य ग्राहकम् (त्वा) त्वाम् (हवामहे) आह्वयामहे॥

यद्वा—(इन्द्र) विद्युत् ! (सोमिनः) सोमवन्तः (सुतावन्तः) अभिषुतवन्तः (ब्रह्माणः) ब्रह्माद्या ऋत्विजः (वयम्) (युजा) सम्बन्धेन (सोमपाम्) सोमस्य पातारं (त्वा) त्वां (हवामहे) वर्णयामः॥ ऋग्वेदे तु ८ । १७ । ३ वयं युजेति क्रमभेदः ॥ ९ ॥ (६६८)

भाषार्थः—(इन्द्र) परमेश्वर ! (सोमिनः) सौम्य भाव वाले (सुतावन्तः) हृदय शुद्ध कर चुकने वाले (ब्रह्माणः) वेदवेत्ता (वयम्) हम योगी लोग (युजा) योग से (सोमपां त्वा) सौम्यभाव वालों के ग्राहक आप को (हवामहे) पुकारते हैं।

यद्वा—(इन्द्र) विद्युत् ! (सोमिनः) सोमरसवाले (सुतावन्तः) अभिषव कर चुकने वाले (ब्रह्माणः) ब्रह्मा आदि (वयम्) हम ऋत्विज् लोग (युजा) सम्बन्ध से (सोमपाम्) सोमरस शोषने वाले (त्वा) तुझ को (हवामहे) वर्णित करते हैं॥ ऋ० ८।१७।३ में "वयं युजा" ऐसा उलट कर पाठ है ॥ ९ ॥ (६६८)

अथ चतुर्थतृचस्य—विश्वामित्रो गाथिन ऋषिः। इन्द्राग्नी देवते। गायत्री छन्दः॥

१ २ ३ १ २ ३ २ ३ २उ १२
इन्द्राग्नी आगतꣳ सुतं गीर्भिर्नभो वरेण्यम् ।
३ १ २ ३ २ ३ २
अस्य पातं धियेषिता ॥ १० ॥ (६६९)

पदपाठः—इन्द्राग्नी १ । आगतम् क्रि० । सुतम् २ । गीर्भिः ३ । नभः ७ । वरेण्यम् २ । अस्य ६=२ । पातम् क्रि० । धिया ३ । इषिता १ ॥

अन्वितपदार्थः—(इन्द्राग्नी) इन्द्रश्चाग्निश्च (नभः)

नभसि वर्त्तमानौ ( धिया ) कर्मणा यज्ञेन ( इषिता ) इषितौ प्रेरितौ ( आगतम् ) प्राप्नुताम् । तथा ( गीर्भिः ) वेदवाग्भिः सह ( सुतम् ) अभिषुतम् ( वरेण्यम् ) उत्तमम् ( अस्य ) इमं सोमं ( पातम् ) पिबताम् ॥

ऋग्वेदे ३ । १२ । १ यजुर्वेदे ७ । ३१ अपि ॥ १० ॥ ( ६६९ )

भावार्थः—( इन्द्राग्नी ) इन्द्र और अग्नि दोनों भौतिक देव ( नभः ) आकाश में वर्त्तमान ( धिया ) यज्ञ कर्म से ( इषिता ) प्रेरित ( आगतम् ) प्राप्त हों और ( गीर्भिः ) वेदमन्त्रों से ( सुतम् ) अभिषुत किये हुए ( वरेण्यम् ) उत्तम ( अस्य ) इस सोम का ( पातम् ) पान करें ॥

ऋ० ३ । १२ । १ यजुः ७ । ३१ में भी ॥ १० ॥ ( ६६९ )

अथ द्वितीया ।

१ २ ३ १ २र ३ १ २ १ ३ १ २
इन्द्राग्नी जरितुः सचा यज्ञो जिगाति चेतनः ।
३ १ २ ३ २ ३ २
अया पातमिमꣳ सुतम् ॥११॥ ( ६७० )

पदपाठः—इन्द्राग्नी १ । जरितुः ६ । सचा अ० । यज्ञः १ । जिगाति क्रि० । चेतनः १ । अया ३ । पातम् क्रि० । इमम्, सुतम् २ ॥

अन्वितपदार्थः—( यज्ञः ) विष्णुः परमात्मा ( चेतनः ) विश्वस्य चेतयिता ( जिगाति ) उपदिशति । यत्—( इन्द्राग्नी ) पूर्वमन्त्रोक्तौ ( जरितुः ) उद्गातुः प्राणस्य ( सचा ) सहायकौ स्तः । ( अया ) अनया वेदवाचा सह ( इमम् ) प्रत्यक्षं ( सुतम् ) अभिषुतं सोमम् ( पातम् ) पिबताम् ॥

प्राणो वै यजस्योद्गाता । श० १४ । ६ । १ । ८ ऋग्वेदे ३ । १२ । २ अपि ॥ ११ ॥ ( ६७० )

भावार्थः—( यज्ञः ) विष्णुपरमात्मा ( चेतनः ) सब का चेताने वाला ( जिगाति ) उपदेश करता है कि ( इन्द्राग्नी ) पूर्वमन्त्र में कहे इन्द्र और

अग्नि ( जरितुः ) प्राण के ( सचा ) सहायक हैं । (अया) इस वेदवाणी के साथ ( इमम् ) इस ( सुतम् ) अभिषुत किये सोम को ( पातम् ) शोषण करें=पीवें ॥

शतपथ १४ । ६ । १ । ८ का प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ३ । १२ । २ में भी ॥ ११ ॥ ( ६७० )

अथ तृतीया ।

१ २३ १ २ ३ १ २ ३ १ २ ३ १ २

इन्द्रमग्निं कविच्छदा यज्ञस्य जूत्या वृणे ।

१ २र ३ १ २

ता सोमस्येह तृम्पताम् ॥ १२ ॥ ( ६७१ )

पदपाठः—इन्द्रम् , अग्निम् २ । कविच्छदा २ । यज्ञस्य ६ । जूत्या ३=४ । वृणे क्रि० । ता १ । सोमस्य ६ । इह अ० । तृम्पताम् क्रि० ॥

अन्वितपदार्थः—( यज्ञस्य ) होमादेः ( जूत्या ) जूत्यै सेवनाय ( कविच्छदा ) मनीषिणामुपच्छन्दकौ ( इन्द्रम्, अग्निम् ) चेति द्वौ ( वृणे ) स्वीकरोमि (ता) तौ इन्द्राग्नी ( इह ) यज्ञे ( सोमस्य ) सोमेन ( तृम्पताम् ) तृप्यताम् ॥

इदमैन्द्राग्नमाज्यम् । "प्रातःसवनं समाप्तम्" इति विवरणकारः " तान्येतानि प्रातःसवने गायत्रसाम्ना गीयमानानि चत्वार्याज्यस्तोत्राणीत्युच्यन्ते । " इति मीमांसादर्शने जै० ९ । ४ । ३ " यदाजिमीयुस्तदाज्यानामाज्यत्वम् " इति चैतन्निर्वचनम् ताण्ड्ये ७ । २ एष्वाज्यस्तोत्रेषु पञ्चदशनामकः स्तोमो भवति; तद्विधायकं ताण्ड्यमहाब्राह्मणम्, 'तिसृभ्यो हिं करोति, इत्यादिकं ( २ । ४ । ५-६ ) द्रष्टव्यम् । अयं स्तोमो द्वितीयपृष्ठय इत्यप्युच्यते ॥ ऋग्वेदे ३ । १२ । ३ अपि ॥ १२ ॥ ( ६७१ )

भाषार्थः—(यज्ञस्य) यज्ञ के (जूत्या) सेवन के लिये (कविच्छदा) बुद्धिमानों की अनुकूलता करने वाले ( इन्द्रम्, अग्निम् ) इन्द्र और अग्नि इन दोनों का ( वृणे ) वरण=स्वीकार करता हूं । ( ता ) वे दोनों ( इह ) इस यज्ञ में ( सोमस्य ) सोम के पान से ( तृम्पताम् ) तृप्त हों ॥

यह ऐन्द्राग्न आज्य है और "यह प्रातः सवन समाप्त हुवा" ऐसा विवरणकार का मत है ।। "ये प्रातःसवन में गायत्र साम से गाये हुवे चार आज्यस्तोत्र कहाते हैं" मीमां० जै० ९ । ४ । ३ "जो कि आजि को प्राप्त होते हैं यह आज्यों का आज्यत्व है" यह आज्य का निर्वचन ताण्ड्यमहाब्राह्मण ७।२ में देखिये ॥ इन आज्यस्तोत्रों में पञ्चदशनामक स्तोम बनता है जिस का बताने वाला ताण्ड्यब्राह्मण २ । ४ । ५–६ में देखिये ॥ यह स्तोम द्वितीय पृष्ठय भी कहाता है ।। ऋ० ३ । १२ । ३ में भी ।। १२ ।। (६७१)

## इति प्रथमाऽध्यायस्य द्वितीयः खण्डः ॥२॥

तृतीयखण्डस्य प्रथमतृचे–प्रथमा ।।

३ १ २ ३ १ २र ३ १ २र
उच्चा ते जातमन्धसो दिवि सद्भूम्याददे ।
३१र ३ २ ३ १ २
उग्रꣳशर्म महि श्रवः ॥१॥ ( ६७२ )

व्याख्याता ( ४६७ ) इस की व्याख्या ( ४६७ ) ऋचा के तुल्य है ॥ (६७२)

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
स न इन्द्राय यज्यवे वरुणाय मरुद्भ्यः ।
३ १ २र
वरिवोवित्परिस्रव ॥ २ ॥ ( ६७३ )

व्याख्याता ( ५९२ ) इस की व्याख्या ( ५९२ ) पर देखिये ।। ( ६७३ )

३ १ २र ३ २उ ३ २ ३ १ २
एना विश्वान्यर्य आ द्युम्नानि मानुषाणाम् ।
१ २
सिषासन्तो वनामहे ॥ ३ ॥ ( ६७४ )

व्याख्याता (५९३) अत्र सूक्ते आमहीयवादीनि सौमित्रान्तानि चतुर्विंशतिसामानि समाम्नातानि ॥

इस का व्याख्यान भी ( ५९३ ) में आ गया। इस सूक्त में "आमहीयव" से लेकर "सौमित्र" तक २४ साम निकले हैं ॥ (६७४)

अथ प्रगाथे द्वितीयसूक्ते प्रथमा ।।

३ १ २ ३ १ २ ३ १ २र १ २ ३ १ २र ३
पुनानः सोम धारयापोवसानो अर्षसि । आ रत्नधा योनिमृ-
१ २ ३ १ २ ३ १ २ ३ १ २
तस्य सीदस्युत्सो देवो हिरण्ययः ॥ ४ ॥ ( ६७५ )

व्याख्याता ( ५११ ) "प्रकर्षेण ग्रथनं यत्र स प्रगाथः । प्रकर्षो नाम आम्नाताद्दकपाठादाधिक्यम्" इति मीमां० ९ । ३ । ६ अधि० १ वर्णके माधवव्याख्यायाम् ॥ ( ६७५ )

भाषार्थः—इस की व्याख्या (५११) ऋचा पर देखिये ॥ प्रगाथ का अर्थ मीमां० ९ । ३ । ६ अधि० १ वर्ण चिह्न पर माधवाचार्य की व्याख्यानुसार संस्कृत भाष्य में ऊपर देखिये ॥ ४ ॥ ( ६७५ )

अथ द्वितीयायाः—अमहीयुराङ्गिरस ऋषिः । सोमो देवता । बृहती छन्दः ॥

३ १ २र ३ १ २र ३ २ ३ २ ३ २ ३ १ २
दुहानऊधर्दिव्यं मधु प्रियं प्रत्नꣳ सधस्थमासदत् ।
३ १ २ ३ १ २ ३क २र ३ १ २ ३ १ २ ३ २
आपृच्छ्यं धरुणं वाज्यर्षसि नृभिर्धौतो विचक्षणः॥५॥(६७६)

पदपाठः—दुहानः १ । ऊधः, दिव्यम्, मधु, प्रियम्, प्रत्नम्, सधस्थम् २। आसदत् क्रि० । आपृच्छ्यम्, धरुणम् २ । वाजी १ । अर्षसि क्रि० । नृभिः ३। धौतः, विचक्षणः १ ॥

अन्वितपदार्थः—( विचक्षणः ) चतुरो बुद्धिमान् ( धौतः ) विशोधितात्मा ( वाजी ) योगबलयुक्तः ( ऊधः ) आनन्द-प्रस्रवणं परमात्मानं [ ततः सकाशादिति भावः ] ( दिव्यम् ) अलौकिकम् ( प्रियम् ) प्रसादकम् ( प्रत्नम् ) सनातनम् ( सधस्थम् ) सर्वदा वस्तुतःसहवर्ति ( मधु ) आनन्दम् ( दुहानः ) सन् ( आसदत् ) प्राप्नोति । ततः ( आपृच्छ्यम् ) प्रष्टव्यम् (धरुणम्) धारकं परमात्मानम् ( नृभिः) नेतृभिर्योग-

शिक्षकैः सह स शिष्यः ( अर्षसि ) अर्षति प्राप्नोति ॥

यद्वा—(विचक्षणः) (धौतः) स्नानादिना शुद्धदेहः (वाजी) हव्यान्नयुक्तो यजमानः (ऊधः) सोमलताखण्डरूपमूधः [ तत्सकाशात् ] ( दिव्यम् ) उत्तमम् ( प्रियम् प्रत्नम् ) ( सधस्थम् ) लतासहवर्तिनम् ( आपृच्छ्यम् ) प्रष्टव्यम् ( धरुणम् ) धारणकर्त्तारम् (मधु) मधुरं रसम् ( दुहानः ) सन् ( आसदत् ) लभते ( नृभिः ) ऋत्विग्भिः (अर्षसि) जुहोति च ॥

ऋग्वेदे तु ९ । १०७ । ५ धूत इत्यन्तरम् । गवां वक्षः=ऊध इत्युच्यते, ततो दुग्धं यथा प्रस्नुतं भवति तथैव परमात्मत आनन्दस्रावः, सोमतश्च रसस्रावः संजायतेऽतएव सोऽप्यत्रोधस्त्वेन व्यवहृतो बोध्यः ॥ रौरवादीनि कण्वबृहदन्तानि द्विचत्वारिंशत्सामान्यत्रोद्ध्रियन्ते ॥५॥ (६७६)

भाषार्थः-(विचक्षणः) चतुर बुद्धिमान् (धौतः) शुद्धान्तःकरण (वाजी) योगबलयुक्त पुरुष, (ऊधः) आनन्द के स्रोत परमात्मा से (दिव्यम्) अलौकिक (प्रियम्) प्यारे (प्रत्नम्) सनातन ( सधस्थम् ) वास्तव में सदा साथ रहने वाले (मधु) माधुर्य रस को ( दुहानः ) दुहता हुवा ( आसदत् ) पाता है । फिर (आपृच्छ्यम्) बूझने योग्य (धरुणम्) धारक परमात्मा को (नृभिः)योग सिखाने वाले नेताओं के साथ वह शिष्य (अर्षसि)प्राप्त होता है॥

यद्वा-(विचक्षणः) चतुर (धौतः) स्नानादि से शुद्ध शरीर वाला (वाजी) हव्य अन्न युक्त यजमान, (ऊधः) सोमलता से (दिव्यम्) उत्तम (प्रियम्) प्यारे (प्रत्नम्) पुराने पके हुवे (सधस्थम्) लता के साथ रहने वाले (आपृच्छ्यम्) उस के जानने वालों से बूझने योग्य ( धरुणम् ) स्थिरता करने वाले (मधु) मधुर रस को (दुहानः) निचोड़ता हुवा (आसदत्) पाता और ( नृभिः ) ऋत्विजों सहित (अर्षसि) हवन करता है ॥

रौरव से लेकर कण्वबृहत् पर्यन्त ४२ साम इस सूक्त में से निकले हैं ॥ ऋ० ९।१०७।५ में(धूतः) पाठ है॥ गौवों के बाख को ऊधः कहते हैं क्योंकि उस में

से दूध दुहा जाता है। इसी प्रकार यहां परमात्मा को आनन्द के स्रोत होने से तथा सोमलता को रस का स्रोत होने से ऊधः कहा है ॥ ५ ॥ (६७६)

अथ तृतीयतृचस्य—अमहीयुराङ्गिरस ऋषिः । सोमो देवता । त्रिष्टुप्छन्दः ॥

१ २र३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १र २र २
प्रतु द्रव परिकोशं निषीद नृभिः पुनानो अभि वाजमर्ष। अश्वं
१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
न त्वा वाजिनं मर्जयन्तोऽच्छा बर्हीरशनाभिर्नयन्ति॥६॥(६७७)

व्याख्याता ( ५२३ ) इस की व्याख्या ( ५२३ ) में देखिये ॥ ६ ॥ ( ६७७ )

अथ द्वितीया ।

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १
स्वायुधः पवते देव इन्दुरशस्तिहा वृजना रक्षमाणः। पिता देवा-
२ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
नां जनिता सुदक्षो विष्टम्भो दिवो धरुणः पृथिव्याः ॥७॥ (६७८)

पदपाठः—स्वायुधः १ । पवते क्रि० । देवः, इन्दुः, अशस्तिहा १ । वृजना ५। रक्षमाणः, पिता १। देवानाम् ६ । जनिता, सुदक्षः, विष्टम्भः १ । दिवः ६ । धरुणः १ । पृथिव्याः ६ ॥

अन्वितपदार्थः—( स्वायुधः ) शोभना आयुधा वज्र-स्रुव स्रुक्-शम्याकप्रभृतयो यज्ञायुधा यस्य सः सुशासनो वा (देवः) द्योतनः (अशस्तिहा) अकल्याणानां नाशकः (वृजना) वृजनेभ्य उपद्रवेभ्यः ( रक्षमाणः ) रक्षां कुर्वाणः ( देवानाम् ) इन्द्रियाणां ( जनिता ) उत्पादकः (पिता) रक्षकश्च ( सुदक्षः ) शोभनबलदायकः पुष्टिप्रदः ( दिवः ) अन्तरिक्षस्य तत्रस्थानां पदार्थानां (विष्टम्भः) विशेषेण स्तम्भयिता (पृथिव्याः ) पृथिवीस्थजनानां ( धरुणः ) धारकः ( इन्दुः ) सोमः ईश्वरो वा ( पवते ) अग्नावाहुतो गच्छति पुनाति वा ॥

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" । इति मनुना ३ । ७६ ऽप्युक्तम् ऋग्वेदे तु ९ । ८७ । २ वृजनमित्यन्तरम् ॥ ७ ॥ ( ६७८ )

भाषार्थः-(स्वायुधः) वज्र स्रुव स्रुक् शम्याकादि अच्छे यज्ञायुधों वाला,वा सुशासन (देवः) प्रकाशमान (अशस्तिहा) दुःखविनाशक (वृजना) उपद्रवों से ( रक्षमाणः ) बचाता हुवा ( देवानाम् ) इन्द्रियों का ( जनिता ) उत्पादक और ( पिता ) रक्षक ( सुदक्षः )उत्तम बलयुक्त पुष्टिदायक ( दिवः ) अन्तरिक्षलोकस्थ पदार्थों का ( विष्टम्भः ) थामने वाला ( पृथिव्याः ) पृथिवीस्थ पदार्थों वा जनों का ( धरुणः ) धरन=धारण करने वाला (इन्दुः) सोम वा ईश्वर ( पवते ) अग्नि में होमा हुवा जाता वा पवित्र करता है ॥

मनु ३ । ७६ का प्रमाण और ऋ० ९ । ८७ । २ का पाठान्तर संस्कृत भाष्य में देखिये ॥ ७ ॥ ( ६७८ )

अथ तृतीया ।

२ ३ १ २   ३ १र २र ३ १र २र ३ २ ३ १ २   १ २र ३
ऋषिर्विप्रः पुरएता जनानामृभुर्धीर उशना काव्येन । स चिद्विवेद
१ २ ३ १ २   ३ २ २ ३ २ ३ १ २
निहितं यदासामपीच्यांऽ३गुह्यं नाम गोनाम् ॥ ८ ॥ ( ६७९ )

पदपाठः-ऋषिः, विप्रः, पुरएता १ । जनानाम् ६ । ऋभुः, धीरः , उशना १ । काव्येन ३ । सः १ । चित् १ । विवेद क्रि० । निहितम्, यत् १ । आसाम् ६ । अपीच्यम्, गुह्यम्, नाम १ । गोनाम् ६ ॥

अन्वितपदार्थः—( ऋषिः ) वेदोपदेष्टा ( विप्रः ) मेधावी ( जनानां पुरएता ) प्राणिनां मार्गोपदेशकत्वेनाग्रेसरः ( ऋभुः ) सर्वेश्वरः ( धीरः ) दृढोऽचलः सर्वधारकः ( उशना ) सर्वस्य कल्याणेप्सुः(चित्)चेतनः(सः)परमात्मा (काव्येन) वेदेन (विवेद) वेदयति ज्ञापयति ( यत् ) (आसां गोनाम्) सूर्यगभस्तीनां मध्ये

( अपीच्यम् ) अन्तर्हितं ( गुह्यम् ) अज्ञैर्ज्ञातुमनर्हं ( नाम ) प्रसिद्धं सोमाख्यं वस्तु ( निहितम् ) निधीयमानं वर्त्तते इति॥

विप्र इति मेधाविनाम निघं० ३ । १५ ॥ अपीच्यमिति निर्णीतान्तर्हितनाम ३।२५॥ अपीच्यमपगतमपचितमपहितमन्तर्हितं वा निरु० ४ । २५ ॥ गौरिति रश्मिनाम निघं० १ । ५ ॥ गोः पदान्ते ( ७ । १ । ५७ ) इति नुडागमः ॥ ऋषिरित्यत्र-इगुपधात् कित् ( उणा० ४।१२० ) इति इन् किच्च ॥ सुसूधाञ्गृधिभ्यः क्रन् ( उणा० २ । २४ ) इति क्रनि धीरः ॥ वशेः कनसिः ( उणा० ४ । २३९ ) इत्युशनाः विसर्गलोप आर्षः ॥ इतिमाध्यन्दिनपवमानं तृतीयम् । "उक्तो माध्यन्दिनः पवमानः" इति विवरणमतेन श्रीसत्यव्रतः ॥ ऋग्वेदे ९।८७।३ ऽपि ॥८॥ (६७९)

भाषार्थः-(ऋषिः) वेदों का उपदेशक (विप्रः) मेधावी (जनानां पुरएता) मार्ग दिखाने से प्राणियों का अगुवा (ऋभुः) सर्वेश्वर (धीरः) सब का धारक दृढ अचल (उशना) सर्वहितेच्छु ( चित् ) चेतनस्वरूप ( सः ) वह परमात्मा (काव्येन) वेदद्वारा ( विवेद ) जतलाता है (यत्) कि (आसाम् ) इन ( गोनाम् ) किरणों में ( अपीच्यम् ) निर्णय किया हुवा और छिपा हुवा ( गुह्यम् ) अज्ञानियों से अज्ञात ( नाम ) प्रसिद्ध सोमनामक वस्तु (निहितम् ) निधि होकर वर्त्तमान है ॥

निघण्टु ३। १५ ॥ ३ । २५ ॥ १ । ५ निरुक्त ४ । २५ उणादि ४ । १२० ॥ २ । २४ ॥ ४ । २३९ अष्टाध्यायी ७ । १ । ५७ के प्रमाण संस्कृत भाष्य में देखिये यह तीसरा माध्यंदिन पवमान है ।। "माध्यंदिन पवमान कहा गया" यह विवरणकार के मत से श्रीसत्यव्रत जी का कथन है ॥ ऋ० ९ । ८७ । ३ में भी ॥ ८ ॥ ( ६७९ )

## इति उत्तरार्चिके प्रथमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

—○:※:○—

अथ चतुर्थखण्डे प्रथमप्रगाथस्य-वसिष्ठ ऋषिः । इन्द्रो देवता । बृहती छन्दः॥

३ १ २ ३ १ २ ३ १ २ १ २ १ १र
अभि त्वा शूर नोनुमो दुग्धा इव धेनवः । ईशानमस्य ज-
१र ३ २ ३ १ २ ३ १
गतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥१॥ ( ६८० )

व्याख्याता (२३३) इस की व्याख्या (२३३) में की गई ॥ १ ॥ ( ६८० )

अथ द्वितीया ।

१र २र ३ २ ३ १ २र ३ २ ३ १ २र
न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।
३ १ २ ३ १ २ ३ १ २
अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे॥२॥(६८१)

पदपाठः— न अ०। त्वावान्, अन्यः,दिव्यः १। न। पार्थिवः१।न। जातः १। न। जनिष्यते क्रि० । अश्वायन्तः १। मघवन्,इन्द्र सं० । वाजिनः, गव्यन्तः १। त्वा २। हवामहे क्रि० ॥

अन्वितपदार्थः—( मघवन् ) मखवन् ! (इन्द्र) परमेश्वर ! ( त्वावान् ) त्वत्सदृशः ( अन्यः ) द्वितीयः (दिव्यः) द्युलोके भवः ( न ) नास्ति ( पार्थिवः ) पृथिवीलोके भवोऽपि ( न ) नास्ति ( न ) नैव ( जातः ) पूर्वं जातः (न) नच (जनिष्यते) उत्पत्स्यते ( अश्वायन्तः ) अश्वान् प्राणानिच्छन्तः (वाजिनः) बलमन्नं वेच्छन्तः ( गव्यन्तः ) गाइन्द्रियाणीच्छन्तो वयम् (त्वा) त्वाम् (हवामहे) स्तुमः प्रार्थयामश्च ॥ रथन्तरं पृष्ठमिति विवरणमतेन श्रीसत्यव्रतः ॥ ऋग्वेदे ७।३२।२३ ऽपि ॥२॥ (६८१)

भावार्थः—( मघवन् ) यज्ञवाले ! ( इन्द्र ) परमेश्वर ! ( त्वावान् ) आप के तुल्य ( अन्यः ) और कोई ( दिव्यः ) द्युलोकस्थ ( न ) नहीं है ( न ) और न ( पार्थिवः ) पृथिवीलोकस्थ है ( न ) न तो ( जातः ) पूर्व उत्पन्न हुवा और (न) न ( जनिष्यते ) आगे उत्पन्न होगा (अश्वायन्तः) प्राण चाहते हुवे(वाजिनः)अन्न वा बल चाहते हुवे और ( गव्यन्तः ) इन्द्रियां चाहते हुवे हम ( त्वा ) आप को( हवामहे )स्तुति प्रार्थना करके पुकारते हैं ॥

श्री सत्यव्रत जी विवरणकार के मत से कहते हैं कि यह "रथन्तर पृष्ठ" कहा गया ॥ ऋ० ७ । ३२ । २३ में भी ॥ २ ॥ ( ६८१ )

अथ द्वितीयस्य तृचसूक्तस्य—वामदेव ऋषिः। सर्वा देवताः । गायत्री छन्दः ॥

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
कया नश्चित्र आभुवदूती सदावृधः सखा ।
२ ३ १ २ १ २
कया शचिष्ठया वृता ॥ ३ ॥ ( ६८२ )

व्याख्याता ( १६९ ) इस का व्याख्यान (१६९) में हो चुका है ॥ ३ ॥ ६८२ ॥

अथ द्वितीया ।

१ २ ३ १र २र ३ १ २ ३ १ २
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः ।
३ १ २ ३ २ ३ १ २
दृढा चिदारुजे वसु ॥ ४ ॥ ( ६८३ )

पदपाठः—कः १ । त्वा २ । सत्यः १ । मदानाम् ६ । मंहिष्ठः १ । मत्सत् क्रि० । अन्धसः ६ । दृढा २ । चित् अ० । आरुजे क्रि० । वसु २ ॥

अन्वितपदार्थः—परमात्मा राजानमाह—हे राजन्निन्द्र ! ( दृढा चित् ) दृढमपि (वसु) शत्रुदुर्गादिकम् (आरुजे) भङ्क्तुम् ( मदानां) हर्षकराणां पदार्थानां मध्ये ( मंहिष्ठः ) माननीयः श्रेष्ठः ( सत्यः ) सत्यभूतः (कः) कतमो मदो हृष्टिप्रदः पदार्थः (त्वा) त्वाम् ( मत्सत् ) हर्षयेत् इति प्रश्नः ( अन्धसः ) अन्नस्य [निघं० २ । ७ ] मद इत्युत्तरम् ॥

अयंभावः—पूर्वमन्त्रप्रार्थिताः प्राणादयोऽन्नेनैव प्राप्तव्याः। राज्ञा राजपुरुषैश्च नैव मद्यादि मादकं वस्तु सेवनीयं किन्तु हृष्टिपुष्टिप्राप्तये मदानां हर्षकारकाणां पदार्थानां मध्ये श्रेष्ठः सत्योऽन्नस्यैव मदः सेवनीयोऽनेनैव बलिष्ठैर्भूत्वा शत्रुगणानां दृढमपि दुर्गादिकं नाशयितुं शक्यते ॥ ऋग्वेदे ४।३१।२ ऽपि ॥४॥ (६८३)

भावार्थः-परमात्मा राजा को उपदेश करता है कि-हे राजन् ! इन्द्र ! (दृढ़ा) दृढ़ (चित्) भी (वसु) शत्रु के वास करने की जगह दुर्गादि के ( आरुजे) तोड़ने को (मदानाम्) हृष्टिकारक पदार्थों में (मंहिष्ठः) उत्तम (सत्यः) सच्चा हृष्टिकारक ( कः ) क्या पदार्थ ( त्वा ) तुझ को (मदसत्) हृष्ट करे ? उत्तर-(अन्धसः) अन्न का [निघं० २ । ७ ॥

अर्थात् राजा वा राजपुरुषों को शत्रु के दुर्गादि तोड़ने के योग्य हृष्टि पुष्टि की प्राप्ति के लिये केवल अन्न का ही सच्चा मद=हर्ष ग्रहण करना चाहिये, कोई अन्य मद्यादि वस्तु नहीं ॥ पूर्व मन्त्र में जो परमात्मा से प्राण और इन्द्रियों का बल पुरुषार्थ मांगा गया था उस का यह उत्तर परमात्मा की ओर से है कि अन्न से ही यह सब कुछ प्राप्त करो ।। ऋ० ४ । ३१ । २ में भी ॥ ४ ॥ ( ६८३ )

अथ तृतीया ।

३ २उ ३ २ ३ २ ३ २
अभी षु णः सखीनामविता जरितॄणाम् ।
३ १ २ ३ १ २
शतं भवास्यूतये ॥५॥ (६८४)

पदपाठः-अभि, सु अ० । नः ६ । सखीनाम् ६ । अविता १ । जरितॄणाम् ६ । शतम् २ । भवासि क्रि० । ऊतये ४ ॥

अन्वितपदार्थः-(नः) वचनव्यत्ययः । मम परमेश्वरस्य प्रजाजनानां ( जरितॄणाम् ) वयोहानिंगतानां दुर्बलानां (सखीनां) तव सख्यं कुर्वतां ( शतम् ) बहु ( सु ) सुष्ठु ( अभि ) सर्वतः (ऊतये) रक्षायै (अविता) रक्षकः (भवासि) भवेः ॥

मैत्रावरुणं पृष्ठम् । इति विवरणमतेन श्री सत्यव्रतः । ऋग्वेदे तु ४ । ३१ । ३ ऊतिभिरिति पाठः ॥५॥ (६८४)

भावार्थः-( नः ) मेरी सृष्टि में स्थित ( जरितॄणाम् ) बूढ़े निर्बल और ( सखीनाम् ) तुझ से शत्रुभाव न करके मित्रभाव रखने वालों की ( शतम् ) बहुत ( सु ) अच्छे ( अभि ) सर्वतः ( ऊतये ) रक्षा के लिये हे राजन् ! तू ( अविता ) रक्षक ( भवासि ) हो ॥

विवरण के मत से श्री सत्यव्रत कहते हैं कि यह "मैत्रावरुण पृष्ठ" कहाता है ॥ ऋ० ४ । ३१ । ३ में-ऊतिभिः पाठ है ॥ ५ ॥ ( ६८४ )

अथ प्रगाथस्य तृतीयसूक्तस्य-नोधाः कार्क्षीवतऋषिः। इन्द्रो देवता। बृहती छन्दः

१ २ ३ १ २ ३ २ ३ १ २ ३१र २र ३ २ ३ १र २र

तं वो दस्ममृतीषहं वसोर्मन्दानमन्धसः । अभि वत्सं न स्वसरेषु

३ १ २ १ २ ३ २ २

धेनव इन्द्रं गीर्भिर्नवामहे ॥ ६ ॥ (६८५) व्याख्याता (२३६)

इस की व्याख्या ( २३६ ) में आचुकी ॥ ६ ॥ ( ६८५ )

अथ द्वितीया ।

३ २ ३ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २ ३

द्युक्षꣳ सुदानुं तविषीभिरावृतं गिरिं न पुरुभोजसम् । क्षुमन्तं

१ २ ३ १ २ ३ १ २ ३ १ २र

वाजꣳ शतिनꣳ सहस्रिणं मक्षू गोमन्तमीमहे ॥ ७ ॥ (६६८)

पदपाठः-द्युक्षम्, सुदानुम् २ । तविषीभिः ३ । आवृतम्, गिरिम् २ । न अ० । पुरुभोजसम्, क्षुमन्तम्, वाजम्, शतिनम्, सहस्रिणम् २ । मक्षु अ० । गोमन्तम् २ । ईमहे क्रि० ॥

अन्वितपदार्थः-हे परमात्मन्निन्द्र! त्वाम् ! [ त्वत्तः ] वयम् ( द्युक्षम् ) प्रकाशवन्तम् ( ईमहे ) याचामहे । तथा (सुदानुम्) शोभनदानवन्तम् (तविषीभिः) सेनाभिः ( आवृतम् ) संवृतम् ( गिरिं न ) मेघमिव ( पुरुभोजसम् ) बहुपालकं (क्षुमन्तम्) अन्नवन्तं ( शतिनं वाजं ) बहुबलवन्तं ( सहस्रिणं गोमन्तं ) बहुगवादिपशुमन्तं तत्पालकं राजानं ( मक्षु ) शीघ्रं याचामहे ॥

दाभाभ्यां नुः ( उणा० ३ । ३२ ) इति दानुः ॥ तविषीति बलनाम निघं २ । ९ ॥ गिरिरिति मेघनाम १।१० ॥ क्षु इत्यन्ननाम २ । ७ ॥ ईमहे इति याञ्चाकर्मा निघं ३ । १९ ॥ ऋग्वेदे ८।८८।२ ऽपि ॥ ७ ॥ ( ६८६ )

भाषार्थः– हे इन्द्र ! परमेश्वर ! ( द्युक्षम् ) प्रकाश वाले (सुदानुम् ) सुन्दर दानी ( तविषीभिः ) सेनाओं से ( आवृतम् ) युक्त भरपूर ( गिरिं न ) मेघ के समान ( पुरुभोजसम् ) बहुत पालन करने वाले ( क्षुमन्तम् ) अन्नवाले (शतिनं वाजम् ) बहुअन्नयुक्त ( सहस्त्रिणं गोमन्तम्) बहुत गौ आदि पशुयुक्त और उनके पालक राजा को ( मक्षु ) शीघ्र ( ईमहे ) हम आपसे मांगते हैं।

निघण्टु २।९।।१।१०।।२।७।।३।१९ उणादि ३।३२ के प्रमाण संस्कृत भाष्य में देखिये ।।ऋ० ८।८८।२ में भी ।। ७ ।। ( ६८६ )

अथ चतुर्थसूक्ते प्रगाथे–प्रथमा ।

१ २    ३ १ २ ३ १ २    ३ १ २ ३ १ २    ३ १र २र    ३ १ २
तरोभिर्वो विदद्वसुमिन्द्रꣳ सबाधऊतये । बृहद्गायन्तः सुतसोमे
३२ ३ २उ   ३   २   ३   १ २
अध्वरे हुवे भरं न कारिणम् ॥ ८ ॥ (६८७)व्याख्याता(२३७)

इस की व्याख्या ( २३७ ) में हो चुकी है ॥८॥(६८७)

अथ तृतीयायाः–कलिः प्रागाथ ऋषिः । इन्द्रो देवता । निवृत्पङ्क्तिश्छन्दः ॥

२उ   ३१र   २र ३   २   ३ २उ   ३   १ २   ३ १र   २र    २ ३ १ २
न यं दुध्रा वरन्ते न स्थिरा मुरो मदेषु शिप्रमन्धसः । य आदृत्या
  ३ १ २    ३ १र   २र    ३ २ ३र २र
शशमानाय सुन्वते दाता जरित्र उक्थ्यम् ॥ ९ ॥ ( ६८८ )

पदपाठः– न अ० । यम् २। दुध्राः १। वरन्ते क्रि० । न । स्थिराः, मुरः १। मदेषु ७। शिप्रम् २। अन्धसः ६। यः१। आदृत्य क्रि०। शशमानाय, सुन्वते, जरित्रे ४। उक्थ्यम् २।।

अन्वितपदार्थः—( यम् ) ( उक्थ्यम् ) स्तुत्यम् (शिप्रम्) सुगन्धदुर्गन्धज्ञापिकां नासिकामिवेष्टानिष्टज्ञापकम् परमात्मानमिन्द्रं ( न स्थिराः ) चञ्चलचित्ताः ( दुध्राः ) दुर्धराः ( मुरः ) मरणधर्मका मनुष्याः (मदेषु) कामधनादिमदेषु तत्कृतगर्वेषु सत्सु ( न वरन्ते ) नाद्रियन्ते न स्वीकुर्वन्ति ( यः ) यः परमेश्वरः

( आदृत्य ) आदरपूर्वकम् ( सुन्वते ) यागार्थसोमाभिषवं कुर्वते ( शशमानाय ) शस्त्राख्यैरप्रगीतमन्त्रैः स्तुतिं कुर्वते ( जरित्रे ) प्रगीतमन्त्रैःस्तोत्रैः स्तुतिं कुर्वते च ( अन्धसः ) अन्नादिभोग्यपदार्थजातस्य ( दाता ) दातास्ति । तं हुवे इति पूर्वेण संबन्धः ॥

शिप्रे हनू नासिके वा । निरु० ६ । १७ ॥ जरितेति स्तोतृनाम निघं० ३ । १६ ॥ मदेषु शिप्रमिति संहितापाठः । मदेषु ७ शिप्रम् २ इति च पदपाठकारः । तथापि सायणाचार्येण तदनुयायिभिरन्यैश्चर्ग्वेदे ८ । ५५ । २ मदे सुशिप्रमिति दृष्ट्वा तथैवात्रापि व्याख्यातम् ॥९॥ (६८८)

भाषार्थः-(यम् ) जिस ( उक्थ्यम् ) स्तुतियोग्य (शिप्रम् ) जैसे नासिका सुगन्ध दुर्गन्ध का ज्ञान कराती है तद्वत् इष्ट अनिष्टका बोध कराने वाले इन्द्र परमात्मा को ( न स्थिराः ) चञ्चल चित्त वाले ( दुध्राः ) दुर्धर (मुरः) मनुष्य (न) नहीं (वरन्ते) स्वीकार करते और (यः) जो परमात्मा (आदृत्य) आदर पूर्वक ( सुन्वते) यज्ञार्थ सोम का अभिषव करने वाले ( शशमानाय ) गान रहित शस्त्र मन्त्रों से स्तुति करने वाले और ( जरित्रे ) गानयुक्त स्तोत्रों से स्तुति करने वाले के लिये ( अन्धसः ) अन्नादि का ( दाता ) देने वाला है [ उस को पुकारता हूं ] यह पूर्व मन्त्र से संबन्ध जानिये ॥

निरुक्त ६ । १७ और निघण्टु ३ । १६ के प्रमाण संस्कृत भाष्य में देखिये॥ संहिता में " मदेषु, शिप्रम् " ऐसा पाठ है और पदपाठकार ने भी इसी प्रकार पदच्छेद किया है,परन्तु सायणाचार्य और उनका विना सोचे अनुकरण करने वालों ने ऋग्वेद ८ । ५५ । २ में "मदे, सुशिप्रम्" पाठ था, उसी के अनुसार यहां भी मूल से विरुद्ध की व्याख्या कर दी है ॥९॥ (६८८)

इति प्रथमाध्याये चतुर्थः खण्डः ॥४॥

उक्तो माध्यंदिनः पवमानः ॥

—*—

अथ पञ्चमखण्डे प्रथमसूक्ते तृचे-प्रथमा ॥

१ २ ३ १ २ ३ १ २ ३ १ २ ३

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया।

१ २३ १ २ ३ २

इन्द्राय पातवे सुतः ॥ १ ॥ ( ६८९ )

व्याख्याता (४६८) इस की व्याख्या (४६८) में देखिये ॥१॥ (६८९)

अथ द्वितीयायाः-मधुच्छन्दा ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः।

३ २ ३ १ २ ३ २ ३ ३ १ २

रक्षोहा विश्वचर्षणिरभि योनिमयोहते।

१ २ ३ २ ३ १ २

द्रोणे सधस्थमासदत् ॥ २ ॥ ( ६९० )

पदपाठः-रक्षोहा, विश्वचर्षणिः १। अभि अ०। योनिम् २। अयोहते, द्रोणे ७। सधस्थम् २। आसदत् क्रि० ॥

अन्वितपदार्थः-( रक्षोहा ) वायुप्रभृतिगतदुर्विकाररक्षसां हन्ता नाशकः ( विश्वचर्षणिः ) विश्वस्मिन् चायिता प्रसृतः सोमः ( अयोहते ) अयसा हिरण्येन हते तन्निर्मिते (द्रोणे) द्रोणाख्ये कलशे ( सधस्थं ) सधे द्यावापृथिव्यौ तत्रस्थं यज्ञरूपं (योनिम्) गृहम् ( अभि आसदत् ) अभितस्तिष्ठति ॥

पिता कृतस्य चर्षणिरित्यस्य व्याख्याने "पिता कृतस्य कर्मणश्चायितेति" निरु० ५।२४॥ अय इति हिरण्यनाम निघं० १।२॥ सधे इति द्यावापृथिव्योर्नाम ३।३० ऋग्वेदे तु ९।१।२ अयोहतम्, द्रुणा इति पाठौ ॥ २ ॥ ( ६९० )

भावार्थः-( रक्षोहा ) वायु आदि के दुर्विकार रूप राक्षसों का नाशक ( विश्वचर्षणिः ) विश्व में फैलने वाला सोम ( अयोहते ) सुवर्णमय (द्रोणे) द्रोण कलश में ( सधस्थम् ) यज्ञरूप ( योनिम् ) घर को ( अभि ) व्याप कर ( आसदत् ) स्थित होता है ॥

निरुक्त ५। २४। निघण्टु १। २॥ ३। ३० के प्रमाण और ऋ० ९।१।२ के पाठभेद संस्कृत भाष्य में देखिये ॥२॥ ( ६९० )

अथ तृतीयायाः—ऋष्यादिकं पूर्ववत् ॥

३ १२ ३१ २ ३ १२
वरिवोधातमो भुवो मꣳहिष्ठो वृत्रहन्तमः ।
२३ १२ ३१ २
पर्षि राधो मघोनाम् ॥ ३ ॥ [ १५ ] ( ६९१ )

पदपाठः—वरिवोधातमः १ । भुवः क्रि० । मंहिष्ठः, वृत्रहन्तमः १ । पर्षि क्रि० । राधः २ । मघोनाम् ६ ॥

अन्वितपदार्थः—सोम ! (वरिवोधातमः) वरिष्ठः पेयतमः ( मंहिष्ठः ) सत्कार्यः ( वृत्रहन्तमः ) दुष्टशत्रुहननक्षमताप्रदः ( भुवः ) भवसि तथा ( मघोनाम् ) मखवताम् (राधः) धनाद्यैश्वर्यं ( पर्षि ) पूरयासि ॥

ये मनुष्याः सोमेन यजन्ते, तेषां स पेयतमो मंहिष्ठो वृत्रहन्तमः सोमो धनैश्वर्यादिकं पूरयतीति भावः ॥

वरिवोधातमः इति—धेट् पाने इत्यस्य प्रयोगात्तमपि सिद्धम् ॥ ऋग्वेदे तु ९ । १ । ३ भव इति पाठः ॥ ३ ॥ ( ६९१ )

भावार्थः—सोम ! ( वरिवोधातमः ) श्रेष्ठ पेय पदार्थों में उत्तम कक्षा का ( मंहिष्ठः ) सत्कार=आदर के योग्य (वृत्रहन्तमः) दुष्ट शत्रुनिवारण के लिये अत्यन्त सामर्थ्यदायक ( भुवः ) है और ( मघोनाम् ) यज्ञ करने वालों के (राधः) धन आदि ऐश्वर्य को (पर्षि) पूरित करता है ॥ ऋ० ९ । १ । ३ का पाठभेद संस्कृत भाष्य में देखिये ॥ ३ ॥ ( ६९१ )

अथ प्रगाथरूपे द्वितीयसूक्ते प्रथमा ॥

१२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
पवस्व मधुमत्तम इन्द्राय सोम क्रतुवित्तमो मदः ।
१ २ ३ १ २ ३ १ २
महि द्युक्षतमो मदः ॥१॥ (६९२) व्याख्याता (५७८)

इस की व्याख्या ( ५७८ ) में कर आये हैं ॥ ( ६९२ )

अथ द्वितीयायाः—गौरिवीतिर्ऋषिः । सोमो देवता ।

निचृद्बृहती छन्दः ॥

१ २ ३ १ २३ १ २ ३ २ ३ २ ३ २ ३ १ २

यस्य ते पीत्वा वृषभो वृषायतेऽस्य पीत्वा स्वर्विदः ।

२ ३ १ २ ३क २र ३ २र ३ २ ३ १ २

स सुप्रकेतो अभ्यक्रमीदिषोऽच्छा वाजं नैतशः॥२॥[१६](६९३)

पदपाठः—यस्य, ते ६ । पीत्वा अ० । वृषभः १ । वृषायते क्रि० । अस्य ६ । पीत्वा । स्वर्विदः ६ । सः, सुप्रकेतः १ । अभ्यक्रमीत् क्रि० । इषः २ । अच्छ अ० । वाजम् २ । न अ० । एतशः १ ॥

अन्वितपदार्थः—(वृषभः) वीर्यवान् पुरुषः,इन्द्रो वा वृष्टिकृत् ( यस्य ते ) तव सोमस्य ( पीत्वा ) पानं कृत्वा ( वृषायते) वृषइवाचरति बहु सिञ्चति । ( स्वर्विदः ) स्वः सुखस्य लम्भयितुः ( अस्य ) सोमस्य (पीत्वा ) पानं कृत्वा ( सुप्रकेतः ) शोभनप्रज्ञः, शोभनप्रकाशो वा ( सः )पुरुषः, इन्द्रो वा ( इषः ) अन्नानि, सस्यानि वा ( अभ्यक्रमीत् ) अभितः क्रामति सुष्ठु सर्वतोऽन्नानि पाचयति ( न ) यथा (एतशः) अश्वः ( वाजम् ) बलम् ( अच्छ ) अभिगच्छति, तद्वत् बलिष्ठो जायते इत्यर्थः ॥

सोमपानेन पुंसः पुंस्त्वं वर्धते,सुष्ठु सन्तानोत्पादाय कल्पते पुमान्, न च बुद्धिवैकल्यं मद्येनेव भवति । सुखप्रापकस्य सोमस्य पानेनाऽन्नपाचनादिशक्तिर्बलं च जायते इति पुरुषपक्षे भावः । वृष्टिकृतो भौतिकस्य विद्युतः पक्षे च—सोमहोमेन तस्य वर्षकत्वं वर्धते।तेन स सुप्रकाशवान् बलवान् स्वकार्यक्षमो जायते इतिभावः॥

एतश इत्यश्वनाम निघं० १।१४ ॥ ऋग्वेदे तु ९।१०८।
२ पीता स्वर्विदः इति पाठः ॥ २ ॥ ( ६९३ )

भाषार्थः—(वृषभः) वीर्यवान् पुरुष, वा इन्द्र [वर्षा करने वाला विद्युत] ( यस्य ते ) जिस तुझ सोम का ( पीत्वा ) पान करके ( वृषायते ) वृष के तुल्य पौरुष करता वा सिञ्चन करता है (अस्य स्वर्विदः) इस सुखदायक का ( पीत्वा ) पान करके ( सुप्रकेतः ) सुन्दर बुद्धियुक्त, वा प्रकाशयुक्त ( सः ) वह पुरुष, वा इन्द्र (इषः) अन्नों, वा खेतियों को (अभ्यऽक्रमीत्) सब ओर से प्राप्त होता वा पकाता है। ( न ) जैसे ( एतशः ) अश्व ( वाजम् ) बल को ( अच्छ ) प्राप्त होता अर्थात् बलिष्ठ हो जाता है ॥

सोमपान से पुरुष का पुरुषत्व बढ़ता है, उस से वह सन्तानोत्पत्ति में भले प्रकार समर्थ होता है। परन्तु मद्यपानके समान बुद्धि भ्रष्ट नहीं होती किन्तु सुधरती है। इस में मादकता ( नशा ) नहीं है। इस सुखदायक पदार्थ के सेवन से अन्न पचाने का सामर्थ्य बढ़ कर बल बढ़ता है। यह पुरुष पक्ष का भाव है। दूसरे इन्द्रपक्ष में—होमयज्ञ से तृप्त हुवा इन्द्र भलेप्रकार बलिष्ठ होता और वृष्टि आदि पुष्कल करता है। यह भाव है ॥

निघण्टु १।१४ का प्रमाण और ऋ० ९।१०८।२ का पाठान्तर संस्कृत भाष्य में देखिये ॥२॥ ( ६९३ )

अथ तृचात्मके तृतीयसूक्ते प्रथमा ॥

२ ३ १ २ ३ २ ३ १ २र ३ १ २
इन्द्रमच्छ सुता इमे वृषणं यन्तु हरयः ।
३ २ ३ २ ३ १ २ ३ १ २
श्रुष्टे जातास इन्दवः स्वर्विदः ॥१॥ (६९४)

व्याख्याता ( ५६६ ) इस की व्याख्या ( ५६६ ) में होचुकी है ( ६९४ )

अथ द्वितीयायाः—अग्निश्चाक्षुष ऋषिः। पवमानः सोमो देवता।
उष्णिक्छन्दः ॥

३ १ २र ३ १ २र ३ २
अयं भराय सानसिरिन्द्राय पवते सुतः ।

२ ३ १ २ ३ १ २ ३ २
सोमो जैत्रस्य चेतति यथा विदे ॥२॥ (६९५)

पदपाठः—अयम् १ । भराय ४ । सानसिः १ । इन्द्राय ४ । पवते क्रि०। सुतः,सोमः १ । जैत्रस्य ६ । चेतति क्रि० । यथा अ० । विदे ४ ॥

अन्वितपदार्थः—(सानसिः) संभजनीयः (सुतः) अभिषुतः (अयं सोमः) (भराय) संग्रामाय, मेघजयाय वा (इन्द्राय) राज्ञे, विद्युते वा (पवते) प्राप्नोति (यथा) येन प्रकारेण (विदे) विदुषे चेतनाय चेतनां कुर्वन्ति तथा (जैत्रस्य) जयशीलस्येन्द्रस्य (चेतति) चेतनामुत्तेजनां संपादयति ॥ ऋग्वेदे ९ । १०६ । २ ऽपि ॥ २ ॥ (६९५)

भाषार्थः—(सानसिः) सेवनीय (सुतः) अभिषुत किया हुवा (अयं सोमः) यह सोम (भराय) संग्राम वा मेघविजय के लिये (इन्द्राय) राजा वा विद्युत् के लिये (पवते) प्राप्त होता है (यथा) जिस प्रकार (विदे) चेतन ज्ञानी के लिये चेतना करते हैं तद्वत् (जैत्रस्य) जयशील इन्द्र को (चेतति) उत्तेजित करता है ॥ ऋ० ९ । १०६ । २ में भी ॥ २ ॥ (६९५)

अथ तृतीयायाः—ऋषिर्देवता चोक्ते । निचृदुष्णिक्छन्दः ॥

३ २उ ३ २३ २ ३ २ ३ २
अस्येदिन्द्रो मदेष्वा ग्राभं गृभ्णाति सानसिम् ।
१ २ ३ १ २ ३ १ २ ३ २
वज्रं च वृषणं भरत्समप्सुजित् ॥ ३ ॥ [१७](६९६)

पदपाठः—अस्य ६ । इत् अ० । इन्द्रः १। मदेषु ७ । आ अ० । ग्राभम् २ । गृभ्णाति क्रि० । सानसिम् २ । वज्रम् २ । च अ० । वृषणम् २ । भरत् क्रि० । सम् अ० । अप्सुजित् १ ॥

अन्वितपदार्थः—(इन्द्रः) विद्युत् वा राजा (अस्य) सोमस्य (इत्) एव (मदेषु) हर्षेषु सत्सु (सानसिम्) संभजनीयम् (ग्राभम्) ग्राहम् (आ गृभ्णाति) सर्वतो गृह्णाति । (अप्सु-

जित् ) अन्तरिक्षे वा कर्मणि युद्धकर्मणि जयशीलः पूर्वोक्त इन्द्रः ( वृषणम् ) वृष्टिकरं, वा शत्रुषु प्रहारवर्षकं ( वज्रम् ) धनुराकारं चिन्हम्, वा शस्त्रास्त्रसमुदायम् (च) ( संभरत् ) संबिभर्त्ति ॥

अप्सु-इति आप इत्यन्तरिक्षनामसु ( निघं० १ । ३ ) कर्मनामसु च २ । १ पठितस्य अपः इति पदस्य सप्तम्यां रूपम् ॥ ऋग्वेदे तु ९।१०६ । ३ गृभ्णीत इति पाठः ॥३॥ (६९६)

भाषार्थः-( इन्द्रः ) विजुली वा राजा ( अस्य ) इस सोम के ( इत् ) ही ( मदेषु ) हर्षों के होने पर ( सानसिम् ) सेवनीय ( ग्राभम् ) दाव को ( आ गृभ्णाति ) सर्वतः ग्रहण करता है । ( च ) और ( अप्सुजित् ) अन्तरिक्ष में, वा युद्धकर्म में जीतनेवाला पूर्वोक्त इन्द्र=बिजुली वा राजा ( वृषणम् ) वृष्टिकारक, वा शत्रुओं पर प्रहारों की वर्षा करनेवाले ( वज्रम् ) आकाश में दीखनेवाले धनुष् चिन्ह को, वा शस्त्रास्त्रसमूह को ( संभरत् ) अच्छे प्रकार धारण करता है ॥

निघण्टु १ । ३ ॥ २ । १ के प्रमाण और ऋ० ९ । १०६ । ३ का पाठान्तर संस्कृत भाष्य में देखिये ॥ ३ ॥ ( ६९६ )

अथ चतुर्थसूक्ते प्रथमा ॥

३ १ २ ३ १ २ ३ १ २ ३ १ २
पुरोजिती वो अन्धसः सुताय मादयित्नवे ।
२ ३ १ २ ३ १ २ ३क २र
अप श्वानꣳश्नथिष्टन सखायो दीर्घजिव्ह्यम् ॥१॥ (६९७)

व्याख्याता ( ५४५ ) इस की व्याख्या ( ५४५ ) में देखिये (६९७)

अथ द्वितीयायाः-अन्धीगुः श्यावाश्विर्ऋषिः । सोमः पवमानो देवता । निचृद्गायत्री छन्दः ॥

१ २र ३ १ २ ३ १ २ ३ २
यो धारया पावकया परिप्रस्यन्दते सुतः ।
२ ३ २ ३ २र
इन्दुरश्वो न कृत्व्यः ॥ २ ॥ (६९८)

पदपाठः—यः १ । धारया, पावकया ३ । परिप्रस्यन्दते क्रि० । सुतः इन्दुः, अश्वः १ । न अ० । कृत्व्यः १ ।।

अन्वितपदार्थः—पूर्वोक्तं सोमं विशिनष्टि—(यः) (सुतः) अभिषुतः (इन्दुः) सोमः (कृत्व्यः) सुशिक्षितः (अश्वो न) अश्वइव वा विद्युदिव (पावकया) शोधिकया (धारया) (परि प्रस्यन्दते) सर्वतोवर्षति वेगेन प्रगच्छति ॥ ऋग्वेदे ९। १०१। २ ऽपि ॥ २॥ (६९८)

भावार्थः—पूर्वोक्त सोम का विशेष वर्णन करते हैं कि—(यः) जो (सुतः) अभिषुत किया हुवा (इन्दुः) सोम (कृत्व्यः) सुशिक्षित (अश्वो न) अश्व वा विद्युत् के समान (पावकया) पवित्र करने वाली (धारया) धारा से (परि प्रस्यन्दते) सब ओर फैलता वा वेग से जाता है ।। ऋ० ९ । १०१ । २ में भी ।। २ ।। (६९८)

अथ तृतीयायाः— देवता ऋषिश्च पूर्वोक्तौ । विराड्गायत्री छन्दः ॥

२ ३१२३२उ ३ १ २ ३ १ २ ३ २
तं दुरोषमभी नरः सोमं विश्वाच्या धिया ।
३ १ २ ३ १ २
यज्ञाय सन्त्वद्रयः ॥ ३ ॥ [ १८ ] (६९९)

पदपाठः—तम्, दुरोषम् २ । अभि अ० । नरः १ । सोमम् २ । विश्वाच्या धिया ३ । यज्ञाय ४ । सन्तु क्रि० । अद्रयः १ ॥

अन्वितपदार्थः—(तम्) पूर्वोक्तविशेषणविशिष्टं (यज्ञाय) (दुरोषम्) दुर्दहम् (सोमम्) (नरः) यज्ञनेतार ऋत्विजः (विश्वाच्या धिया) विश्वव्यापकेन कर्मणा होमेन (अभि) सर्वतः प्रसारयन्तु इति शेषः । (अद्रयः) मेघाः (सन्तु) भवन्तु यथेति शेषः ॥

आर्द्रस्य सोमरसस्य घृताद्यपेक्षया दुर्दहत्वाद्दुरोषमिति विशे

षणप्रयोगः ॥ ऋग्वेदे तु ९ । १०१ । ३ "यज्ञं हिन्वन्त्यद्रिभिः" इति तृतीयपादेऽन्तरम् ॥ ३ ॥ ( ६९९ )

भाषार्थः—( तम् ) पूर्वोक्तविशेषणों वाले ( यज्ञाय दुरोषम् ) यज्ञ के लिये कठिनाई से फुंकने वाले ( सोमम् ) सोमरस को ( नरः ) यज्ञ के नेता ऋत्विज् लोग ( विश्वाच्या ) विश्वव्यापिनी ( धिया ) क्रिया [ होम ] से ( अभि ) सब ओर [ फैलावें ] ( अद्रयः सन्तु ) जिस से मेघ होवें ।।

घृतादि की अपेक्षा गीला सोमरस कठिनाई से फुंकता है, इसलिये उस का "दुरोषम्" विशेषण प्रयुक्त किया गया है ।। ऋ० ९ । १०१ । ३ का पाठान्तर संस्कृत भाष्य में देखिये ।। ३ ।। ( ६९९ )

अथ पञ्चमसूक्ते प्रथमा ।।

३ २ ३ १ २ ३ १ २ ३ १ २ १ २उ ३ २ ३ १ २
अभि प्रियाणि पवते चनोहितो नामानि यह्वो अधि येषु वर्धते ।
१ २र ३ २ ३ २उ ३ २ ३ १ २ ३ २
आ सूर्यस्य बृहतो बृहन्नधि रथं विष्वञ्चमरुहद्विचक्षणः ॥१॥ (७००)

व्याख्याता ( ५५४ ) इस की व्याख्या (५५४) में आगई ॥

अथ द्वितीयायाः—आन्धीगवऋषिः । सोमो देवता। पादनिचृज्जगती छन्दः ।।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ २ ३ १ २र
ऋतस्य जिह्वा पवते मधु प्रियं वक्ता पतिर्धियो अस्या अदाभ्यः ।
१ २ ३ २ ३ १ २ ३ २ १ २ ३ २ ३ १ २ ३ २ ३ २
दधाति पुत्रः पित्रोरपीच्यं३नाम तृतीयमधिरोचनं दिवः॥२॥ (७०१)

पदपाठः—ऋतस्य ६ । जिह्वा ३ । पवते क्रि० । मधु, प्रियम् २ । वक्ता, पतिः १ । धियः, अस्याः ६। अदाभ्यः १। दधाति क्रि० । पुत्रः १। पित्रोः ६ । अपीच्यम्, नाम, तृतीयम्, अधिरोचनम् २ । दिवः ६ ॥

अन्वितपदार्थः—अधुना सोमं सुपुत्रमिव यशस्करत्वेन वर्णयति—(ऋतस्य) यज्ञस्य ( जिह्वा ) जिह्वयाग्निज्वालया (वक्ता) चटचटाशब्दस्य कर्त्ता, ( अस्याःधियः पतिः ) अस्य यज्ञकर्मणः

पालयिता, ( अदाभ्यः ) अनाशनीयः सोमः ( प्रियम् )प्रियकरं (मधु) रसम् (पवते) प्रापयति [ एतेन ] ( दिवः ) द्युलोकस्य ( अधिरोचनम् ) आधिक्येन रुचिकरं ( नाम ) ख्यानं (दधाति) धारयति । यथा (पुत्रः) सुतः ( पित्रोः ) मातापित्रोः(तृतीयम्) तृतीयंनाम (अपीच्यम् ) अन्तर्हितं दधाति ॥

यथा मातुरेकं नाम, पितुरपरं द्वितीयं नाम, पुत्रस्यऽचापरं तृतीयं नाम, ख्यातेः पूर्वमन्तर्हितमन्यैरविज्ञातं भवति, पुनर्यदा पुत्रः स्वगुणान्ख्यापयन् प्रकाशते तदा प्रसिद्धो भवति । तथैव पृथिव्यन्तरिक्षयोः पुत्रइवाऽयंसोमोऽपि सोमयागात्पूर्वमविज्ञातगुणप्रकर्षोऽपि होमानन्तरं पृथिव्यन्तरिक्षयोः प्रकाशमानः स्वं तृतीयं नाम ख्यातिं प्राप्तः प्रकाशते । यज्ञस्य जिह्वयाग्निज्वालयाऽऽर्द्रत्वेन चटचटाशब्दं बाललिलतभाषणमिव श्रोतॄणामाल्हादकं कुर्वन् विराजते ॥

ऋग्वेदे तु ९ । ७५ । २ रोचने इत्यन्तरम् ॥ २ ॥ (७०१)

भाषार्थः—इस मन्त्र में सोम को सुपुत्र के समान यशस्कर होने से वर्णन किया गया है कि—( ऋतस्य) सत्यभूत यज्ञ की ( जिह्वा ) जिह्वा=अग्नि की लपट से ( वक्ता ) चटाचट शब्द करने वाला, ( अस्याः धियः पतिः ) इस यज्ञकर्म का पालक ( अदाभ्यः ) नष्ट न करने योग्य सोम ( प्रियम् ) प्यारे ( मधु ) रस को ( पवते ) प्राप्त कराता है [ इस से ] ( दिवः ) द्युलोक के ( अधिरोचनम् ) अधिकता से प्रकाश ( नाम ) ख्याति=यश को ( दधाति ) धारण करता है । जैसे—( पुत्रः) बेटा (पित्रोः) माता पिता के बीच तृतीयम् ) तीसरे ( अपीच्यम् ) छिपेहुवे नाम को धारण करता है ॥

जिस प्रकार माता का एक नाम, पिता का दूसरा, और पुत्र का तीसरा जो कि विख्यात होने से पूर्व अन्यसाधारणों को ज्ञात नहीं है, होता है।

फिर जब पुत्र अपने गुणों को जतलाता हुआ प्रकाश करता है, तब प्रसिद्ध होता है। इसी प्रकार अन्तरिक्ष लोक और पृथिवी लोक का पुत्रतुल्य यह सोम भी सोमयाग से पूर्व ऐसा होता है, जिस के गुणों की महिमा लोगों को प्रकट नहीं होती, परन्तु सोमयाग में होम किया जाता है, तब अन्तरिक्ष और पृथिवी के मध्य में प्रकाशमान अपने तीसरे नाम को प्राप्त हुआ प्रकाशित होता है। यह अग्नि की लपट से गीला होने के कारण चटचटाता है, तो श्रोताओं को ऐसा प्रिय प्रतीत होता है, जैसा बालक का ललित भाषण सुखदायक होता है ॥

ऋ० ९। ७५। २ में रोचनं= रोचने पाठ है ॥ २ ॥ ( ७०१ )

अथ तृतीयायाः—ऋषिर्देवता चोक्ते एव। निचृज्जगती छन्दः ॥

१ २ ३र ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
अव द्युतानः कलशाँ अचिक्रदन्नृभिर्येमाणः कोश आ हिरण्यये।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ १ २
अभी ऋतस्य दोहना अनूषताऽधि त्रिपृष्ठ उषसो विराजसि
॥ ३ ॥ [ ११ ] ( ७०२ )

पदपाठः—अव अ०। द्युतानः १। कलशान् २। अचिक्रदत् क्रि०। नृभिः ३। येमाणः १। कोशे ७। आ अ०। हिरण्यये ७। अभि अ०। ऋतस्य ६। दोहनाः १। अनूषत क्रि०। अधि अ०। त्रिपृष्ठे ७। उषसः २। विराजसि क्रि० ॥

अन्वितपदार्थः—पुनः सोमं विशिनष्टि ( द्युतानः ) प्रकाशमानः ( नृभिः ) नेतृभिर्ऋत्विग्भिः ( कलशान् ) द्रोणकलशान् ( अव येमानः ) ततो निस्सार्यमाणः ( हिरण्यये ) सुवर्णमये ( कोशे ) स्रुवादौ (आ) समन्ततो विराजमानः (त्रिपृष्ठे अधि) त्रिषु सवनेषु अधिकृतः सोमः ( उषसः) सूर्यकिरणान् (विराजसि ) विराजयति ( अचिक्रदत् ) शब्दायते [ तं सोमम् ] (दोहनाः ) ऋत्विजः ( अनूषत ) स्तुवन्ति प्रशंसन्ति ॥

"ग्रावाणो वत्सा ऋत्विजो दुहन्ति" इति तैत्तिरीयकब्राह्मणे ऋत्विजां दोग्धृत्वं, ग्राव्णां च वत्सत्वमभिहितं भवति ॥

येमान इति यम धातोश्छान्दसे लिटि कर्मणि कानचि रूपम्॥ ऋग्वेदे तु ९ । ७५ । ३ येमानः । अभीमृतस्य । विजराति इति पाठान्तराणि ॥ ३ ॥ ( ७०२ )

भाषार्थः-फिर सोम का वर्णन है कि-( द्युतानः ) प्रकाशमान, (नृभिः) ऋत्विजों द्वारा ( कलशान् ) कलशों में से ( अव येमानः ) लौटा जाता हुवा=निकाला जाता हुवा, ( हिरण्यये कोशे ) सुवर्णमय कोश स्रुवादि में (आ) चारों ओर से विराजमान, (त्रिपृष्ठे अधि) प्रातःसवनादि तीनों सवनों में अधिकृत सोम, (उषसः ) सूर्यकिरणों को ( विराजसि ) विराजित करता है ( अचिक्रदत् ) और शब्द करता है [उस सोम को ] ( दोह्नाः ) दुहने वाले ऋत्विज् (अनूषत) प्रशंसा करते हैं ॥

"सोमकण्डन के पत्थर मानो बछड़े हैं और कण्डन करने वाले ऋत्विज् मानो दुहने वाले हैं " यह तैत्तिरीयक ब्राह्मण में ऋत्विजों को दोग्धा बताया गया है [सायण] अन्य व्याकरण के प्रमाण और ऋ० ९ । ७५ । ३ के पाठान्तर संस्कृत भाष्य में देखिये ॥ ३ ॥ (७०२)

अथ षष्ठे खण्डे प्रगाथस्य प्रथमसूक्तस्य -अग्निर्वैश्वानरऋषिः ।

अग्निर्देवता । बृहतीछन्दः ॥

तत्र प्रथमा ।

३ १ २      ३ १ २ ३ १ २ ३ १२<br>
यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे ।<br>
१ २ ३ २ ३ १ २ ३ १ २   ३ २ ३ १   २र<br>
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥१॥(७०३)

व्याख्याता ( ३५ ) इस की व्याख्या ३५ वीं में देखिये ॥ १ ॥ (७०३)

अथ द्वितीया।

३ १ २र ३ २ ३ १ २र ३ १ २र ३ १ २

ऊर्जो नपातꣳ स हिना यमस्मयुर्दाशेम हव्यदातये ।

२ ३ १ २ ३ १ २र ३२ ३२ ३ २ ३ १ २

भुवद्वाजेष्वविता भुवद्वृध उत त्राता तनूनाम्॥२॥[२०](७०४)

पदपाठः—ऊर्जः ६ । नपातम् २ । सः १ । हिना अ० । यम् २ । अस्मयुः १ । दाशेम क्रि० । हव्यदातये ४ । भुवत् क्रि० । वाजेषु ७ । अविता १ । भुवत् क्रि० । वृधे ४ । उत अ० । त्राता १ । तनूनाम् ६ ॥

अन्वितपदार्थः—(सः) प्रसिद्धोऽग्निः परमेश्वरो वा (अस्मयुः) जाठराग्न्यादिभेदेनास्मान् कामयमानः भक्त्या तुष्टो वा (यम्) अग्निम् (ऊर्जो नपातम्) बलस्य न पातयितारम् [प्रशंसिषम इति पूर्वतोऽनुषङ्गात् प्रशंसामः]( हव्यदातये ) हव्यानां दानाय कर्मफलदानाय वा( दाशेम ) दद्मः [हविरिति,आत्मानमिति वा शेषः ] स च सम्यग्घुतो ध्यातोवा सन् ( वाजेषु ) अन्नेषु भुक्तेषु पच्यमानेषु ( अविता ) अस्माकं रक्षकः ( भुवत् ) भवेत् (वृधे) शरीरादिविवर्धनाय ( भुवत् ) भवेत् ( तनूनाम् ) देहानां (त्राता) रक्षकः ( उत ) च भवेत् ॥

( भावार्थः ) ये मनुष्याः अग्नेःसम्यगुपयोगं जानन्ति होमादिनोपयुञ्जते च, परमेश्वरं वोपासते तेषां न बलक्षतिर्जायते, अन्नपरिपाकः शरीरादिवृद्धिः रक्षा च भवतीति जानीत ॥ ऋग्वेदे ६ । ४८ । २ ऽपि ॥ २ ॥ [ २० ] ( ७०४ )

भाषार्थः-(सः) वह प्रसिद्ध अग्नि, वा परमेश्वर (अस्मयुः) जाठराग्न्यादि भेद से वा भक्ति देखकर तुष्ट हो,हमको चाहने वाला ( यम् ) जिस (ऊर्जो-नपातम्) बल के न गिराने वाले का [ हम ( प्रशंसिषम्=प्रशंसामः ) वर्णन

करते हैं, यह पूर्व मन्त्र से अनुवृत्ति है ] और (हव्यदातये) वायु आदि देव निमित्त हव्य पहुंचाने वा कर्मफल पहुंचाने के लिये ( दाशेम ) हविष्य वा आत्मा का अर्पण करते हैं । वह अच्छे प्रकार हवन किया हुवा अग्नि वा ध्यान किया हुवा परमात्मा (वाजेषु) अन्न जो भोजन किये गये उन के पच्यमान होते हुवे ( अविता ) रक्षक ( भुवत् ) हो, ( वृधे ) शरीरादि की वृद्धि के लिये ( भुवत् ) हो, (उत) और( तनूनाम् )देहों का (त्राता) रक्षक हो।

( भावार्थ ) जो मनुष्य अग्नि का भलेप्रकार से उपयोग करना जानते हैं और होमादि में काम में लाते हैं वा परमेश्वर की उपासना करते हैं उन का बल क्षीण नहीं होता, उन के अन्न का पचना, शरीरादि की वृद्धि और रक्षा होती है ।। ऋ० ६ । ४८ । २ में भी ।।२।। [२०] ( ७०४ )

अथ द्वितीयसूक्तस्य–साकामश्व ऋषिः । अग्निर्देवता । गायत्री छन्दः ।।

तत्र प्रथमा ।

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २
एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः ।
३ १ २ ३ १ २
एभिर्वर्धास इन्दुभिः ॥ १ ॥ ( ७०५ )

व्याख्याता (७) इसकी व्याख्या संख्या (७) पर की जा चुकी है।।१।।(७०५)

अथ द्वितीया ।

२ ३क २र ३ २ ३ १ २ ३ १ २
यत्र क्व च ते मनो दक्षं दधस उत्तरम् ।
२ ३ १ २
तत्र योनिं कृणवसे ॥ २ ॥ ( ७०६ )

पदपाठः–यत्र, क्व, च अ० । ते ६ । मनः १ । दक्षम् २ । दधसे क्रि० । उत्तरम् २ । तत्र अ० । योनिम् २ । कृणवसे क्रि० ।।

अन्वितपदार्थः–हे अग्ने ! [इति पूर्वतोनुवृत्तिः] परमात्मन् ! (ते) तव ( मनः ) इच्छा [जीवात्मकर्मानुकूलफलप्रदानरुचिः ]

( यत्र क च ) यस्मिन्कस्मिन्देशे लोके वा भवति (तत्र) तस्मिन्नेव देशे लोके वा ( योनिम् ) मनुष्याद्यन्यतमाम् ( कृणवसे ) जीवेभ्यः करोषि नियतां कृत्वा ददासि ( उत्तरम् ) उत्तमम् ( दक्षम् ) बलं च ( दधसे ) धारयसि ॥

प्राणिनः कर्मानुसारतः परमेश्वरतन्त्राः सन्तः स्वानुष्ठितकर्मफलभोगाय तां तां योनिं प्रपद्यन्ते इति भावः ॥ यद्यपि परमात्मा सर्वेन्द्रियविवर्जितत्वादमनस्कः । तथापि सर्वेन्द्रियगुणाभासमित्यादिश्वेताश्वतरोपनिषद्वचनैरचिन्त्यं सामर्थ्यमेव मनआदिसाध्यकर्मसाधकं तत्रास्तीति न दोषः ॥ ऋग्वेदे तु ६।१६।१७ तत्रा सदः कृणवसे इति पाठः ॥२॥ ( ७०६ )

अथ तृतीया ।

१ २र ३१ २ ३ १ २र ३
नहि ते पूर्त्तमक्षिपद्भुवन्नेमानां पते ।
२ ३ १ २
अथा दुवो वनवसे ॥ ३ ॥ [२१] ( ७०७ )

पदपाठः—नहि अ० । ते ६ । पूर्त्तम् १ । अक्षिपत् १ । भुवत् क्रि० । नेमानाम् ६ । पते सं० । अथ अ० । दुवः २ । वनवसे क्रि० ॥

अन्वितपदार्थः—अग्ने इत्यनुवर्त्त्य—हे ज्ञानप्रकाशक ! ( ते ) तव ( पूर्त्तम् ) पूर्णं पूरकं च तेजः ( अक्षिपत् ) अक्ष्युपलक्षितसर्वज्ञानेन्द्रियपातकं ( नहि ) ( भुवत् ) भवेत् किन्तु ज्ञानोन्नायकं स्यात् ( नेमानां पते ) अल्पज्ञानामस्मदादीनां पा-

लक ! ( अथ ) अस्मै प्रयोजनाय ( दुवः ) अस्मत्कृतं नमनादि परिचरणं (वनवसे) संभजस्व स्वीकुरु ॥

दुव इति दुवस्यतेः परिचरणकर्मणः निघं० ३ । ५॥ ऋग्वेदे ६ । १६ । १८ ऽपि ॥ ३ ॥ [ २१ ] ( ७०७ )

भाषार्थः—पूर्वमन्त्र से [ अग्ने ] हे ज्ञानप्रकाशक ! ( ते ) आप का (पूर्तम् ) पूर्ण और पूरक तेज ( अक्षिपत् ) हमारी आंख आदि ज्ञानेन्द्रियों का पतन कराने वाला ( नहि ) न ( भुवत् ) होवे, किन्तु ज्ञान का वर्धक होवे ( नेमानाम् पते ) हे इस अल्पज्ञों के पालक वा स्वामिन् ! ( अथ ) इस प्रयोजन के लिये (दुवः) हमारी की हुई भक्ति को (वनवसे) स्वीकार कीजिये।

(दुवः) यह परिचर्या भक्ति सेवा का नाम है । निघं० ३ । ५ ॥ ऋ० ६ । १६ । १८ में भी ॥ ३ ॥ [ २१ ] ( ७०७ )

अथ प्रगाथस्य-तृतीयसूक्तस्य सौभरिर्ऋषिः । इन्द्रो देवता । ककुप्छन्दः ॥

तत्र प्रथमा ।

३ २ ३ १ २ ३ १उ ३ १ २ ३ १ २
वयमु त्वामपूर्व्य स्थूरं न कच्चिद्भरन्तोऽवस्यवः ।
१ २ ३ १ २
वज्रिंश्चित्रं हवामहे ॥ १ ॥ (७०८)

व्याख्याता ( ४०८ ) इस की व्याख्या ( ४०८ ) पर हो चुकी (७०८)

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ २
उप त्वा कर्मन्नूतये स नो युवोग्रश्चक्राम यो धृषत् ।
१ २र ३ १ ३ ३ २ ३ १ २ ३ २
त्वामिद्ध्यवितारं ववृमहे सखाय इन्द्र सानसिम् २[२२](७०९)

पदपाठः- उप अ० । त्वा २ । कर्मन् ७ । ऊतये ४ । सः १ । नः ६ । युवा १ । उग्रः १ । चक्राम क्रि० । यः १ । धृषत् क्रि० । त्वाम् २ । इत्, हि अ० अवितारम् २ । ववृमहे क्रि० । सखायः १ । इन्द्र सं० । सानसिम् २ ॥

अन्वितपदार्थः—( इन्द्र ) हे राजन् ! ( कर्मन् ) कर्मणि व्यवहारे ( त्वा ) त्वाम् (उप) उपगच्छामः ( यः ) ( धृषत् ) अस्मदुपर्यन्यायेन वर्त्तमानान्धृष्णोति दण्डप्रणयनादिना ( सः ) भवान् ( उग्रः ) अविषह्यः (युवा) संहननाङ्गः ( नः ) अस्माकम् (ऊतये) रक्षायै (चक्राम) पर्यटनं करोति अतः (सखायः) परस्परं बन्धुभूता वयम् ( सानसिम् ) संभजनीयम् ( अवितारम् )रक्षकम् (त्वाम् इत् हि) त्वामेव (ववृमहे) राज्यायेति शेषः॥

यो हि प्रजायै सुखप्रदो, व्यवहारप्रवर्त्तको,युवोग्रः, संभजनीयो, रक्षकश्च स्यात् तमेव प्रजा राजानं विदध्युः ॥

धृषदित्यत्र—ञि धृषा प्रागल्भ्ये इत्यस्माद्धातोः बहुलं छन्दसीति (२।४।७३) शः प्रत्ययः॥ चक्रामेत्यत्र व्यत्ययोबहुलमिति ३।१।८५ परस्मैपदम् ॥ ऋग्वेदे ८।२१।२ ऽपि ॥२॥ ( ७०९ )

भावार्थः—( इन्द्र ) हे राजन् ! हम ( कर्मन् ) व्यवहार [ मुक़द्दमें ] में ( त्वा ) आप के ( उप ) शरण में आते हैं । ( यः ) जो आप ( धृषत् ) हम पर अन्याय करने वालों का दण्डादि से दमन करते हैं ( सः ) वह आप (उग्रः) असह्य तेजस्वी (युवा) वीर पुरुष दृढाङ्ग (नः) हमारी ( ऊतये ) रक्षा के लिये ( चक्राम ) दौरा करते हैं । अतः ( सखायः ) हम एक दूसरे के मित्र बनते हुवे (सानसिम्, अवितारम्, त्वाम्, इत् हि) संभजनीय,रक्षक, आप का, ही ( ववृमहे ) [ राज्य के लिये ] वरण करते हैं ।।

प्रजावर्ग को चाहिये कि राजगद्दी के लिये ऐसे पुरुष का वरण करें जो कि व्यवहारों को सुने, देखे, दृढाङ्ग और दृढव्यवसाय हो, जिस की उग्रता शत्रुओं को असह्य हो, जो राजभक्तों का सेवनीय, और सब का रक्षक हो ।।

अष्टाध्यायी २।४।७३ ।। ३।१।८५ के प्रमाण संस्कृतभाष्य में देखिये ।। ऋ० ८।२१।२ में भी ।। २ ।। ( ७०९ )

अथ तृचस्य चतुर्थसूक्तस्य–नृमेध ऋषिः । इन्द्रो देवता । ककुप्छन्दः ॥

तत्र प्रथमा ।

२ ३क २र ३ १२ ३ १ २३१२ ३ १ २
अधा हीन्द्र गिर्वण उप त्वा काम ईमहे ससृग्महे ।
३ २३ १ २ ३२ २
उदेव ग्मन्त उदभिः ॥१॥ (७१०) व्याख्याता (४०६)

अथ द्वितीया ।

१ २र ३२ ३ १३ ३ १२
वार्ण त्वा यव्याभिर्वर्धन्ति शूर ब्रह्माणि ।
३ १ २ ३१ २
वावृध्वाꣳसं चिदद्रिवो दिवे दिवे ॥२॥ [७११]

पदपाठः–वाः २ । न अ० । त्वा २ । यव्याभिः ३ । वर्धन्ति क्रि० । शूर सं० । ब्रह्माणि १। वावृध्वाꣳसम् २ । चित् अ०। अद्रिवः सं०। दिवे, दिवे अ०।

अन्वितपदार्थः–( अद्रिवः ) हे वज्रादिधर ! राजन् ! (शूर) वीर ! ( न ) यथा ( यव्याभिः ) नदीभिः कुल्याभिर्वा [निघं० १ । १३ ] ( वाः ) जलम् ( वर्धन्ति ) वर्धयन्ति (चित् )तथैव (ब्रह्माणि) वेदोक्तकर्माणि वेदा वा (वावृध्वांसम् त्वा) वृद्धिमिच्छन्तं त्वाम् ( दिवे दिवे ) प्रतिदिनम् वर्धयन्तीति शेषः । अतस्त्वया वेदोक्तकर्मानुष्ठानं कार्यमित्यर्थः ॥ ऋग्वेदे ८ । ९८ । ८ऽपि ॥२॥

भावार्थः–( अद्रिवः ) हे वज्रादिधारी ! ( शूर ) वीर ! राजन् ! ( न ) जैसे ( यव्याभिः ) नदियों से [ निघं० १ । १३ ] वा नहरों से (वाः) जल को ( वर्धन्ति ) बढ़ाते हैं ( चित् ) इसी प्रकार ( ब्रह्माणि ) वेदोक्त कर्म वा वेद ( वावृध्वांसम् ) वृद्धि चाहते हुवे ( त्वा ) आप को ( दिवे दिवे ) प्रतिदि

बढ़ाते हैं। इस लिये आप को वेदोक्त कर्मानुष्ठान करना चाहिये। यह भाव है॥ ऋ० ८। ९८। ८ में भी॥ २॥ (७११)

अथ तृतीया।

३ २ ३ १ २ ३ १ ३ १ २ ३ १ २र ३ १ २ ३ १ २
युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे वचोयुजा।
३ १ २ ३ १ २
इन्द्रवाहा स्वर्विदा॥ ३॥ [ २३ ] ( ७१२ )

इति प्रथमोर्धप्रपाठकः॥

---

पदपाठः—युञ्जन्ति क्रि०। हरी २। इषिरस्य ६। गाथया ३। उरौ ७। रथे ७। उरुयुगे ७। वचोयुजा, इन्द्रवाहा, स्वर्विदा २॥

अन्वितपदार्थः—( इषिरस्य ) कुत्रचिद्गन्तुमनसो राज्ञः ( उरुयुगे ) महायुगे ( उरौ रथे ) महति याने ( वचोयुजा ) वचसैव युज्यमानौ ( स्वर्विदा ) स्वःसुखस्य लम्भकौ ( इन्द्रवाहा ) राज्ञोवाहनौ ( हरी ) अश्वौ ( गाथया ) राजप्रशंसया सह ( युञ्जन्ति ) सारथ्यादयो योजयन्ति॥

ऋग्वेदे तु ८। ९८। ९ युञ्जन्ति हरी इषिरस्य गाथयोरौ रथ उरुयुगे। इन्द्रवाहा वचोयुजा। इति पाठः॥

इतिश्रीमत्कण्ववंशावतंस पण्डित हज़ारीलालस्वामि—सूनुना हस्तिनापुरपार्श्ववर्त्ति—परीक्षितगढ़निवासिना तुलसीरामस्वामिना कृते सामवेदभाष्योत्तरार्चिके

प्रथमोऽध्यायः॥ १॥

भावार्थः-( इयिरस्य ) कहीं जाना चाहते हुवे राजा के ( उरुयुगे, उरौ, रथे ) बड़े जुवे वाले, बड़े, रथ में ( वचोयुजा, स्वर्विदा, इन्द्रवाहा ) वचन से ही जुतजाने वाले, सुखदायक, राजवाहन ( हरी ) घोड़ों को (गाथया ) राजा की प्रशंसा के साथ ( युञ्जन्ति ) सारथि आदि जोतते हैं ॥

ऋ० ८ । ९८ । ९ का पाठभेद संस्कृत भाष्य में देखिये ॥

यह श्रीमत्कण्व वंशावतंस पं०स्वामी हज़ारीलाल के पुत्र
परीक्षितगढ़ ( ज़िला-मेरठ ) निवासी तुलसीराम
स्वामिकृत सामवेदभाष्य उत्तरार्चिक में
प्रथमाऽध्याय समाप्त हुवा ॥ १ ॥

ओ३म्

# अथ द्वितीयाध्यायः

तत्र प्रथमे खण्डे, प्रथमे तृचेसूक्ते, प्रथमायाः—श्रुतकक्ष ऋषिः ।
इन्द्रो देवता । अनुष्टुप् छन्दः ॥

२ ३ २ ३ १ २ ३१ २ ३१र २र
पान्तमावो अन्धसइन्द्रमभि प्रगायत ।
३ १ २ ३१ २ ३ १ २ ३ २
विश्वासाहꣳ शतक्रतुं मꣳहिष्ठं चर्षणीनाम् ॥१॥ (७१३)

व्याख्याता (१५५)

अथ द्वितीयायाः—ऋषिर्देवता च पूर्ववत् ।गायत्री छन्दः ॥

३ १ २ ३१ २ ३ २ १ २
पुरुहूतं पुरुष्टुतं गाथान्यं ऽ ३ ऽ सनश्रुतम् ।
२ ३ १ २
इन्द्र इति ब्रवीतन ॥ २ ॥ ( ७१४ )

पदपाठः—पुरुहूतम्, पुरुष्टुतम्, गाथान्यम्, सनश्रुतम् २ । इन्द्रः १ । इति अ० । ब्रवीतन क्रि० ॥

अन्वितपदार्थः—हे ऋत्विजः ! यूयम् ( पुरुहूतम् ) यज्ञेषु बहुभिर्बहुशश्चाहूतम् ( पुरुष्टुतम् ) बहुस्तुतम् वेदेषु इन्द्रस्यैव सर्वातिरेकेण वर्ण्यमानत्वात् ( गाथान्यम् ) गेयं स्तुत्यम् (सनश्रुतम् ) सनातनत्वेन प्रसिद्धं देवं परमात्मानम् ( इन्द्र इति ) इन्द्रनाम्ना प्रसिद्धं (ब्रवीतन) ब्रूत ॥

ब्रूञ् व्यक्तायां वाचि, इत्यस्य लोटि, तप्तनप्तनथनाश्च ७ । १ । ४५ इति तनबादेशः ॥ ऋग्वेदे ८ । ९२ । २ ऽपि ॥ २ ॥

भाषार्थः-हे ऋत्विजो ! तुम (पुरुहूतम्) बहुतों से वा बहुत पुकारे हुवे (पुरुष्टुतम्) बहुत स्तुत किये हुवे (गाथान्यम्) गान कीर्त्तन करने योग्य (सनश्रुतम्) सदा से सनातन भाव से प्रसिद्ध परमात्मदेव को (इन्द्रइति) इन्द्र नाम से विख्यात (ब्रवीतन) कहो ।। ऋ० ८ । ९२ । २ में भी ।।२।।

अथ तृतीयायाः-ऋष्यादय उक्ताः ।।

२ ३ १ २ ३ १ २ ३ १र २र ३ २
इन्द्र इन्नो महोनां दाता वाजानां नृतुः ।
३ १ २ ३ १ २
महाँ अभिज्ञ्वायमत् ।। ३ ।। [ १ ] ( ७१५ )

पदपाठः—इन्द्रः १ । इत् अ०।नः ४ । महोनाम् ६ । दाता १ । वाजानाम् ६ । नृतुः १ । महान् १ । अभिज्ञु २ । आयमत् क्रि० ।।

अन्वितपदार्थः-( इन्द्रः इत् ) परमात्मैव (नः) अस्मभ्यम् (महोनां वाजानाम्) महतां बलानां (दाता) अस्ति । (नृतुः) सर्वस्य कर्मानुसारं नर्त्तयिता ( महान् ) अनन्तः (अभिज्ञु) अभिगतजानुकं यथा स्यात्तथा (आयमत् ) कर्ममयैः पाशैर्बध्नाति जगत् ।। ऋग्वेदे ८ । ९२ । ३ ऽपि ।। ३ ।।

भाषार्थः-( इन्द्रः इत् ) परमात्मा ही ( नः ) हमारे लिये ( महोनां वाजानाम् ) बड़े बलों का (दाता) देने वाला है, (नृतुः) वही हमारा कर्मानुकूल नचाने वाला है ( महान् ) वही अनन्त ( अभिज्ञु ) घुटनों के बल ( आयमत् ) हम को कर्ममय बन्धनों से बांधता हैं।।ऋ० ८ ।९२ ३में भी।।३।।

अथ द्वितीयस्य तृचसूक्तस्य-वसिष्ठ ऋषिः । इन्द्रोदेवता । गायत्री छन्दः ।।

तत्र प्रथमा-

२ ३ १ २ ३ १ २ ३ १२
प्र व इन्द्राय मादनꣳ हर्यश्वाय गायत ।
१ २ ३ १ २
सखायः सोमपाव्ने ।।१।। (७१६) व्याख्याता (१५६)

अथ द्वितीया—

२र ३ २ ३ १ २ ३ २ ३ २र ३ १ २

शꣳसेदुक्थꣳ सुदानव उत द्युक्षं यथा नरः ।

३ २ ३ १ २

चकृमा सत्यराधसे ॥ २ ॥ ( ७१७ )

पदपाठः—शंस क्रि० । इत् अ० । उक्थम् । २ । सुदानवे ४ । उत अ० । द्युक्षम् २ । यथा अ० । नरः १ । चकृम क्रि० । सत्यराधसे ४ ॥

अन्वितपदार्थः—(यथा) येन प्रकारेण ( नरः ) कर्मकाण्ड-नायका वयम् ( सुदानवे) सुष्ठुदानिने ( सत्यराधसे ) सत्यं धनं यस्य तस्मै परमात्मनइन्द्राय (द्युक्षम्) दीप्तेःसाधनभूतम् (उ-क्थम् ) स्तोत्रं ( चकृम ) कुर्मः ( उत ) तथैव (शंस) त्वमपि उच्चारय ( इत् ) पादपूरणः ॥

मनुष्यैर्ज्ञानप्रकाशाय परमेश्वरस्तुत्युपासनाप्रार्थनाःपरस्प-रोपदेशेन प्रचारणीया इति भावः ॥ अथ ये प्रवृत्तेऽर्थेऽमिता-क्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्व-नर्थकाःकमीमिद्विति। निरु० १। ९॥ऋग्वेदे ७।३१।२ ऽपि ॥२॥

भाषार्थः—(यथा) जिस प्रकार ( नरः ) हम कर्मकाण्ड के नायक लोग (सत्यराधसे, सुदानवे) सत्य जिस का धन है,जो शोभन दानी है उस इन्द्र= परमात्मा के लिये( द्युक्षम् )प्रकाश का साधनभूत ( उक्थम् )स्तोत्र (चकृम) करते हैं (उत) ऐसे ही (शंस) तू भी उच्चारण कर ( इत् ) पादपूरणार्थ है ॥

अर्थात् मनुष्योंको परस्परोपदेश से परमेश्वर की स्तुति उपासना प्रार्थना का प्रचार करना चाहिये, जिस से ज्ञानप्रकाश बढ़े॥ निरु० १।९ का प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ७ । ३१ । २ में भी ॥ २ ॥

अथ तृतीया–

१ २ ३ २उ ३ १ २
त्वं न इन्द्र वाजयुस्त्वं गव्युः शतक्रतो ।
१ २ ३ १ २
त्वं हिरण्ययुर्वसो ॥३॥ [२] (७१८)

पदपाठः–त्वम् १। नः ४। वाजयुः, त्वम्, गव्युः १। शतक्रतो सं०। त्वम् हिरण्ययुः १। वसो सं० ॥

अन्वितपदार्थः–स्तोत्रमाह—(इन्द्र) हे परमेश्वर ! (त्वम्) (नः) अस्मभ्यं (वाजयुः) अन्नकामः (शतक्रतो) हे अनन्तप्रज्ञ ! (त्वम्) (गव्युः) अस्मभ्यं गोकामः (वसो) हे वासयितः ! (त्वम्) (हिरण्ययुः) लक्ष्म्यादिकामो भवेति शेषः ॥

छन्दसि परेच्छायामपि दृश्यते इति (३।१।८) वार्त्तिकम् ततो हि परार्थार्थो न दोषाय ॥ ऋग्वेदे ७।३१।३ ऽपि ॥३॥

भाषार्थः–अब स्तोत्र कहा जाता है कि–(इन्द्र) हे परमेश्वर ! (त्वम्) आप (नः) हमारे लिये (वाजयुः) अन्न की इच्छा वाले और (शतक्रतो) हे अनन्तज्ञान ! (त्वम्) आप (गव्युः) गौ आदि पशु की इच्छा वाले तथा (वसो) हे वास देने वाले ! (त्वम्) आप (हिरण्ययुः) सुवर्णादि धन चाहने वाले हूजिये ॥

अर्थात् आप हमारे लिये ऐसी इच्छा करें कि हमारे पास अन्न पशु लक्ष्मी आदि सब सुखसामग्री विद्यमान हो ॥ व्याकरण का प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ७।३१।३ में भी ॥ ३ ॥

अथ तृतीयस्य तृचसूक्तस्य–मेध्यातिथिप्रियमेधावृषी। इन्द्रो देवता। गायत्री छन्दः

तत्र प्रथमा—

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
वयमु त्वा तदिदर्था इन्द्र त्वा यन्तः सखायः ।
१ २ ३ २ ३ १ २
कण्वा उक्थेभिर्जरन्ते ॥१॥ (७१९) व्याख्याता (१५७)

अथ द्वितीया—

१ २३ १र २र ३ १ २ ३ २ ३ १ २

न घेमन्यदापपन वज्रिन्नपसो नविष्टौ ।

२३ ३र १ २

तवेदु स्तोमैश्चिकेत ॥ २ ॥ ( ७२० )

पदपाठः—न, घ, ईम् अ० । अन्यत् २ । आपपन क्रि० । वज्रिन् सं० । अपसः ६ । नविष्टौ ७ । तव ६ । इत्, उ अ० । स्तोमैः ३ । चिकेत क्रि० ॥

अन्वितपदार्थः—( वज्रिन् ) हे नियन्तः ! परमेश्वर ! दुष्टनिबर्हण ! अहम् ( अपसः ) कर्मकाण्डस्य ( नविष्टौ ) नूतनयागे [ आरम्भे ] ( अन्यत् ) त्वत्तोन्यम् ( न घ ईम् ) नैव ( आपपन ) अभिष्टौमि (उ) यतः ( तव इत् ) तवैव ( स्तोमैः ) स्तोत्रैः ( चिकेत ) ज्ञानं प्राप्नोमि ॥

ज्ञानलाभाय परमात्मानं विहायान्यो नैव स्तोतव्योस्ति ॥ अप इति कर्मनाम निघं० २ । १ ॥ आपपनेति "पनतेः स्तुति कर्मणः ( भ्वा०आ० ) उत्तमे णलि रूपम्" इति सायणः । पनायते इत्यर्चतिकर्मा निघं० ३।१४॥ऋग्वेदे ८।२।१७ऽपि॥२॥

भाषार्थः—(वज्रिन्) हे दुष्टनिबर्हण ! नियन्तः ! परमेश्वर ! मैं (अपसः) कर्मकाण्ड के ( नविष्टौ ) नवीन यज्ञ [ आरम्भ ] में ( अन्यत् ) आप को छोड़ अन्य की ( न घ ईम् ) नहीं ही ( आपपन ) स्तुति करता हूं ( उ ) क्योंकि (तव इत्) आप के ही (स्तोमैः) स्तोत्रों से (चिकेत) ज्ञान पाता हूं ॥

ज्ञानलाभ के लिये मनुष्यों को परमात्मा का परित्याग करके अन्य की स्तुति नहीं करनी चाहिये ॥ व्याकरण और निघटु ३ । १४ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ८ । २ । १७ में भी ॥ २ ॥

अथ तृतीया—

३ १ २ ३२ ३ २ ३ १र २र

इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ।

१ २ ३ २३ १ २
यन्ति प्रमादमतन्द्राः ॥ ३ ॥ [ ३ ] ( ७२१ )

पदपाठः—इच्छन्ति क्रि० । देवाः १ । सुन्वन्तम् २ । न अ० । स्वप्नाय४ स्पृहयन्ति, यन्ति क्रि० । प्रमादम् २ । अतन्द्राः १ ॥

अन्वितपदार्थः—हे परमात्मन्निन्द्र! ( देवाः ) विद्वांसः (सुन्वन्तम्) आत्मानं साक्षात्कारयन्तं त्वाम् (इच्छन्ति) वाञ्छन्ति ( स्वप्नाय ) निद्रायै ( न ) नैव ( स्पृहयन्ति ) कामयन्ते, किन्तु ( अतन्द्राः ) अनलसाः सन्तः ( प्रमादम् ) प्रकर्षेणाऽऽनन्दम् ( यन्ति ) प्राप्नुवन्ति ॥

ये विद्वांसः परमात्मसाक्षात्कारमिच्छन्ति प्रयतन्ते च तेऽल्पनिद्राः सन्तः सततमानन्दमाप्नुवन्ति ॥

स्पृहेरीप्सितः १ । ४ । ३६ इति कर्मणः संप्रदानता । स्पृह ईप्सायां चुरादिरदन्तः ॥ ऋग्वेदे ८ । २ । १८ ऽपि ॥ ३ ॥

भाषार्थः—हे इन्द्र ! परमेश्वर ! (देवाः) विद्वान् लोग (सुन्वन्तम्) अपने साक्षात् कराते हुवे आप की ( इच्छन्ति ) इच्छा करते हैं, और (स्वप्नाय) निद्रा के लिये ( न स्पृहयन्ति ) नहीं इच्छा करते। किन्तु ( अतन्द्राः ) निरालस होकर ( प्रमादम् ) अत्यन्तानन्द को ( यन्ति ) प्राप्त होते हैं।

अर्थात् परमात्मा का साक्षात्कार चाहने और यत्न करने वालों के निद्रा आलस्यादि तमोगुण दूर होजाते हैं, निरन्तर आनन्द प्राप्त होता है ॥

अष्टाध्यायी १ । ४ । ३६ आदि प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ८ । २ । १८ में भी ॥ ३ ॥

अथ चतुर्थतृचसूक्तस्य—श्रुतकक्षऋषिः। इन्द्रो देवता। गायत्री छन्दः ॥

तत्र प्रथमा—

१ २ ३ १ २ ३ १र २र ३ १ २
इन्द्राय मद्वने सुतं परिष्टोभन्तु नो गिरः ।
३ १ २ ३ १ २
अर्कमर्चन्तु कारवः ॥ १ ॥ ( ७२२ )व्याख्याता (१५८)

अथ द्वितीया—

२ ३ २ ३ २३ २ ३ १२ ३२ ३ १२
यस्मिन्विश्वा अधि श्रियो रणन्ति सप्त संसदः ।
१ २ ३२ २
इन्द्रं सुते हवामहे ॥ २ ॥ ( ७२३ )

पदपाठः—यस्मिन् ७। विश्वाः २। अधि अ०। श्रियः २। रणन्ति क्रि०। सप्त, संसदः १। इन्द्रम् २। सुते ७। हवामहे क्रि० ॥

अन्वितपदार्थः—( सप्त ) सप्तसंख्याकाः ( संसदः ) योगभूमिषु निषण्णाः पुरुषाः ( यस्मिन् ) परमेश्वरे ( विश्वाः ) समस्ताः ( श्रियः ) योगलक्ष्मीः ( अधि रणन्ति ) आधिक्येन वर्णयन्ति स्तुवन्ति ( सुते ) मनसि शोधिते सति ( इन्द्रम् ) तं परमेश्वरम् ( हवामहे ) आह्वयामहे ॥

यद्वा—( सप्त संसदः ) त्रय उद्गातारः, होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, अच्छावाकश्चेति सप्तर्त्विजः ( यस्मिन् ) सोमे ( विश्वाः श्रियः ) समस्ताः सौभाग्यलक्ष्मीः ( अधि रणन्ति ) ( सुते ) तस्मिन् सोमेऽभिषुते सति ( इन्द्रम् ) वृष्टिकरं भौतिकं देवम् ( हवामहे ) ॥ ऋग्वेदे ८ । १२ । २०ऽपि ॥ २ ॥

भावार्थः—( सप्त ) सात ७ (संसदः) योगभूमियों में आसन जमाने वाले पुरुष ( यस्मिन् ) जिस परमेश्वर में ( विश्वाः ) सब ( श्रियः ) योगलक्ष्मियों को (अधि रणन्ति) अधिकता से वर्णित करते हैं (सुते) मन शुद्ध होने पर ( इन्द्रम् ) उस परमेश्वर को ( हवामहे ) हम पुकारते हैं ॥

अथवा—( सप्त संसदः ) सात ऋत्विज्= ३ उद्गाता, ४ होता, ५ मैत्रावरुण, ६ ब्राह्मणाच्छंसी, ७ अच्छावाक ( यस्मिन् ) जिस सोम में (विश्वाः) सब (श्रियः) सौभाग्यलक्ष्मियों को (अधि रणन्ति) अधिकता से बताते हैं (सुते) उस

सोमके सम्पन्न अभिषुत होजाने पर (इन्द्रम्) वृष्टिकारक भौतिक देवविशेष को (हवामहे) हम प्रशंसित करते हैं ।। ऋ० ८ । ९२ । २० में भी ।। २ ।।

अथ तृतीया–

१ २ ३ १ २ ३ १ २ ३ १ २
त्रिकद्रुकेषु चेतनं देवासो यज्ञमत्नत ।
१ २र ३ १ २
तामिद्वर्धन्तु नो गिरः ॥ ३ ॥ [ ४ ] ( ७२४ )

पदपाठः–त्रिकद्रुकेषु ७ । चेतनम् २ । देवासः १ । यज्ञम् २ । अत्नत क्रि० । तम् २ । इत् अ० । वर्धन्तु क्रि० । नः ६ । गिरः १ ॥

अन्वितपदार्थः–(देवासः) विद्वांसः (त्रिकद्रुकेषु) एतत्संज्ञेषु यज्ञाहस्सु (चेतनं यज्ञम्) ज्ञानसाधनं यज्ञम् (अत्नत) तन्वन्ति (तम् इत्) तमेव ( नः ) अस्माकं ( गिरः ) वाचः ( वर्धन्तु ) वर्धयन्तु ॥

आभिप्लविकानि त्रीण्यहानि त्रिकद्रुकाणि, यथा–गवामयनादिकं सत्रमेकषष्ट्युत्तरशतत्रयदिनसाध्यं भवति । तत्र प्रायणीयोऽतिरात्रनाम प्रथममहः, चतुर्विंशनाम द्वितीयम्, उक्थनाम तृतीयम्, ज्योतिर्गौश्चतुर्थम्, आयुर्गौः पञ्चमम्, आयुर्ज्योतिः षष्ठमहः । एतानि षडहानि आभिप्लविकान्युच्यन्ते, तेषु चतुर्थपञ्चमषष्ठानि त्रिकद्रुकाणि वेद्यानि ॥

अत्नतइत्यत्र—तनु विस्तारे इत्यस्मात्, बहुलं छन्दसि २ । ४ । ७३ इति विकरणलुकि, तनिपत्योश्छन्दसि ६ । ४ । ९९ इत्युपधालोपः ॥ ऋग्वेदे ८ । ९२ । १ ऽपि ॥ ३ ॥

भाषार्थः–( देवासः ) विद्वान् लोग ( त्रिकद्रुकेषु ) त्रिकद्रुकनामक यज्ञ के ३ दिनों में ( चेतनं यज्ञम् ) ज्ञानसाधन यज्ञ का ( अत्नत ) विस्तार करते हैं (तम् इत्) उसी यज्ञ को (नः) हमारी (गिरः) वाणी ( वर्धन्तु ) बढ़ावें ॥

आभिप्लविक ३ दिन त्रिकद्रुक होते हैं। जैसा कि गवामयनादि सत्र(यज्ञ) ३६१ दिन में सिद्ध होता है उस में १-प्रायणीयोऽतिरात्र,२-चतुर्विंश,३-उक्थ, ४-ज्योतिर्गौ, ५-आयुर्गौ,६-आयुर्ज्योति; ये छः ६ दिन आभिप्लविक कहाते हैं, इन में ४।५।६ येअन्त के तीन ३ त्रिकद्रुक हैं। अष्टाध्यायी २।४।१३ और ६।४।९९ के प्रमाण संस्कृत भाष्य में देखिये॥ ऋ०८।९२।२१ में भी॥३॥

## इति द्वितीयाध्यायस्य प्रथमः खण्डः॥ १॥

अथ द्वितीयखण्डे प्रथमतृचस्य-इरिमिठ ऋषिः। इन्द्रो देवता। गायत्री छन्दः॥

तत्र प्रथमा-

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अयं त इन्द्र सोमो निपूतो अधिबर्हिषि।
१ २ ३ २उ ३ १ २
एहीमस्य द्रवा पिब॥ १॥ (७२५) व्याख्याता (१५९)

अथ द्वितीया-

१ २ ३ १ २ ३ १ २र ३ २
शाचिगो शाचिपूजनायꣳ रणाय ते सुतः।
१ २ ३ १ २
आखण्डल प्रहूयसे॥ २॥ (७२६)

पदपाठः-शाचिगो, शाचिपूजन सं०। अयम् १। रणाय ४। ते ६। सुतः १। आखण्डल सं०। प्रहूयसे क्रि०॥

अन्वितपदार्थः—( शाचिगो ) शाचयः शक्ता गावः किरणायस्य तत्संबोधने हे शक्तकिरण! ( शाचिपूजन ) शाचीनां शक्तानां किरणानां सत्कर्तः! ( आखण्डल ) मेघावयवानामाखण्डयितरिन्द्र! सूर्य! ( अयम् ) एष सोमः ( ते ) तव ( रणाय ) मेघैः सह संग्रामाय विजयाय च ( सुतः ) निष्पादितः ( प्रहूयसे ) प्रकर्षेणाहूयसे वर्ण्यसे इति यावत्॥

सूर्यस्य किरणाः शाचयः शक्ताः सूर्यश्च तेषां समर्थकः । अतएव वृष्ट्यै सोमं संपाद्य होमः कार्य इत्यर्थः॥ऋग्वेदे८।१७।१२ऽपि॥२॥

भावार्थः-( शाचिगो ) समर्थ किरणयुक्त (शाचिपूजन) किरणों के समर्थक ( आखण्डल ) मेघ के अवयवों को खण्ड २ करने वाले सूर्य ! ( अयम् ) यह सोम ( ते ) तेरे ( रणाय ) मेघों के साथ संग्राम और विजय के लिये (सुतः) खींचकर रक्खा है (प्रहूयसे) और आह्वान वा वर्णन किया जाता है॥

अर्थात् सूर्य की किरणें समर्थ हैं और सूर्य उन का समर्थक है। इस लिये सूर्य और मेघ के युद्ध में सूर्य के विजय अर्थात् वृष्टि के लिये सोम से यज्ञ करना चाहिये ॥ ऋ० ८ । १७ । १२ में भी ॥ २ ॥

अथ तृतीया-

१ २ ३ १ २ ३ १ २

यस्ते शृङ्गवृषोणपात्प्रणपात्कुण्डपाय्यः ।

२र ३ १र २र

न्यस्मिन्दध्र आ मनः ॥ ३ ॥ [५] (७२७)

पदपाठः-यः १ । ते ६ । शृङ्गवृषोणपात् सं० । प्रणपात्, कुण्डपाय्यः १ । नि अ० । अस्मिन् ७ । दध्रे क्रि० । आ अ० । मनः २ ॥

अन्वितपदार्थः-(शृङ्गवृषोणपात् ) शृणन्ति हिंसन्ति इति शृङ्गाणि रश्मयस्तैर्वर्षतीति शृङ्गवृडादित्यः तस्य न पातयितः ! स्वकीये स्थानेऽवस्थापयितः ! [इति सायणाचार्योऽपि] इन्द्र ! (यः) ( प्रणपात् ) प्रकर्षेण न पातयिता रक्षिता ( ते ) त्वत्सम्बन्धी ( कुण्डपाय्यः ) क्रतुविशेषोऽस्ति ( अस्मिन् ) कुण्डपाय्ये क्रतौ ( मनः ) स्वान्तं (नि आ दध्रे) नितरामादधिरे धरन्ति ऋत्विगादय इति शेषः ॥

सुबामन्त्रितेपराङ्गवत्स्वरे २ । १ । २ इति षष्ठ्यन्तस्य शृङ्ग-

वृट्शब्दस्य पराङ्गवद्भावेनामन्त्रितानुप्रवेशात्समुदायस्याष्टमिकं सर्वानुदात्तत्वम् ॥ क्रतौ कुण्डपाय्यसंचाय्यौ ३ । १। १३० इति निपातितः। कुण्डैः पीयते सोमोऽस्मिन्सयज्ञविशेषः॥ दधातेर्लिटि- इरयोरे ६।४।७६ इति रेभावे दध्रे ॥ ऋग्वेदे ८।१७।१३ ऽपि ॥३॥

भाषार्थः—( शृङ्गवृषोणपात् ) रश्मियों से वर्षाने वाले इन्द्र=सूर्य्य का पतन न कराने वाले ! अर्थात् अपने स्थान पर स्थित रखने वाले इन्द्र ! ( यः ) ( जो प्रणपात् ) अतिशय करके न गिराने वाला=रक्षा करने वाला ( ते ) तेरा ( कुण्डपाय्यः ) कुण्डपाय्य यज्ञविशेष है ( अस्मिन् ) इस यज्ञ में [ऋत्विगादि लोग] (मनः) चित्त को ( नि आ दध्रे ) नितरां धारण करते हैं॥

अष्टाध्यायी २ । १ । २ ॥ ३ । १ । १३० ॥ ६ । ४ । ७६ का प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ८ । १७ । १३ में भी ॥ ३॥

अथ द्वितीयतृचस्य—कुसीदः काण्व ऋषिः । इन्द्रो देवता । गायत्री छन्दः ॥

तत्र प्रथमा—

१र २र ३ १ २ ३ २ ३ १र २र
आतू न इन्द्र क्षुमन्तं चित्रं ग्राभं संगृभाय ।
३ २र २र
महाहस्ती दक्षिणेन ॥१॥ (७२८) व्याख्याता (१६७)

अथ द्वितीया—

३ १र २र ३ २ ३ १ २ ३ २ २
विद्मा हि त्वा तुविकूर्मिं तुविदेष्णं तुवीमघम् ।
३ १र २र
तुविमात्रमवोभिः ॥ २ ॥ ( ७२९ )

पदपाठः— विद्म क्रि० । हि अ० । त्वा २। तुविकूर्मिम्, तुविदेष्णम्, तुवीमघम्, तुविमात्रम् २ । अवोभिः ३ ॥

अन्वितपदार्थः—हेराजन्निन्द्र ! ( अवोभिः ) त्वत्कृतैरस्मद्रक्षणैः ( त्वा ) त्वाम् ( तुविकूर्मिम् ) बहुकर्माणम् ( तुविदे-

ष्णम् ) बहुदातारम् ( तुवीमघम् ) बहुधनम् ( तुविमात्रम् ) बहुपरिमाणं च ( विद्म,हि ) जानीमः खलु ॥

तुवि इति बहुनाम निघं० ३।१॥ मघमिति धननाम निघं० २। १० ॥ ऋग्वेदे ८। ८१। २ऽपि ॥ २ ॥

भाषार्थः-हे राजन्निन्द्र ! (अवोभिः) आप की की हुई हमारी रक्षाओं से ( त्वा ) आप को ( तुविकूर्मिम् ) बहुकर्मयुक्त पुरुषार्थी ( तुविदेष्णं ) बहुदानी ( तुवीमघम् ) बहुत धनी और ( तुविमात्रम् ) बहुत बड़े परिमाण वाला हम ( विद्म ) जानते हैं ( हि ) निश्चय ॥

निघण्टु ३। १। २। १० के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ८। ८१। २ में भी ॥ २ ॥

अथ तृतीया-

१ २र ३ २र २र ३ १ २
न हि त्वा शूर देवा न मर्त्तासो दित्सन्तम् ।
३ २उ ३ १ २
भीमं न गां वारयन्ते ॥ ३ ॥ [ ६ ] ( ७३० )

पदपाठः-न, हि अ० । त्वा २ । शूर सं० । देवाः १ । न अ० । मर्त्तासः १ दित्सन्तम्, भीमम् २ । न अ० । गाम् २ । वारयन्ते क्रि० ॥

अन्वितपदार्थः-( शूर ) हे वीर ! राजन् ! ( दित्सन्तम् ) शत्रुशिरांसि खण्डयितुमिच्छन्तम् ( गाम् ) वृषभम् ( न ) इव ( भीमम् ) भयानकं ( त्वा ) त्वाम् ( देवाः ) ( न हि ) नैव ( मर्त्तासः ) मनुष्याश्च (न) नो ( वारयन्ते ) निवारयन्ति॥

दैव्यो मानुष्यश्च बाधास्त्वां न बाधन्ते इति भावः ॥ ऋग्वेदे ८। ८१। ३ ऽपि ॥ ३ ॥

भाषार्थः-( शूर ) हे पराक्रमी राजन् ! ( दित्सन्तम् ) शत्रुओं के शिर काटना चाहते हुवे ( गाम् ) बैल के (न) तुल्य बली (त्वा) आप को (देवाः) देवता (न, हि) नहीं (मर्त्तासः) और मनुष्य ( न ) नहीं (वारयन्ते) रोकते।

अर्थात् दैवी और मानुषी कोई बाधा विघ्न नहीं कर सकतीं । विज्ञान बल से दैवी और बाहुबल से मानुषी रुकावटों को आप हटा सकते हैं ॥ ऋ० ८ । ८१ । ३ में भी ॥ ३ ॥

अथ तृतीयतृचस्य—त्रिशोक ऋषिः । इन्द्रो देवता । गायत्री छन्दः ॥

तत्र प्रथमा—

३ १ २ ३ २ ३ १ २ ३ १ २
अभि त्वा वृषभा सुते सुतꣳ सृजामि पीतये ।
३ १ २ ३ १ २
तृम्पा व्यश्नुही मदम् ॥१॥ (७३१) व्याख्याता (१६१)

अथ द्वितीया—

१ २ ३ १ २ ३ २ ३ २ ३ २ २ ३ १ २
मा त्वा मूरा अविष्यवो मोपहस्वान आदभन् ।
१ २ ३ १ २
माकीं ब्रह्मद्विषं वनः ॥२॥ (७३२)

पदपाठः—मा अ० । त्वा २ । मूराः, अविष्यवः १ । मा अ० । उपहस्वानः १ । आदभन् क्रि० । माकीम् अ० । ब्रह्मद्विषम् २ । वनः क्रि० ॥

अन्वितपदार्थः—( अविष्यवः ) भोजनभट्टाः [निघं० २।८] ( मूराः ) मूढा मूर्खाः ( उपहस्वानः ) यज्ञादिकर्मणामुपहासकारिणः ( त्वा ) त्वाम् ( मा दभन् ) न हिंसन्तु । त्वञ्च (ब्रह्मद्विषम् ) ब्रह्मणोवेदस्य द्वेष्टारम् अतएव यज्ञद्वेष्टारमित्यायातम् ( माकीम् वनः ) मा सेविष्ठाः ॥

परमात्मकृपया इन्द्रयागादिकर्मानुष्ठानविरोधिनः स्वार्थैकपरा वेदानभिज्ञा जनाः, यज्ञविध्वंसेनेन्द्रस्य वृष्टिकर्त्तुर्देवस्य विघातका न भवेयुः । पूर्वोक्तान् वेदविरोधिनः प्रति वृष्टिकर्तुरानुकूल्यं च न भवत्विति भावः ॥ ऋग्वेदे ८ । ४५ । २३ ऽपि ॥२॥

भाषार्थः—(अविष्यवः) भोजनभट्ट लोग [निघं० २ । ८] जो कि ( उपह-

स्वानः) उपहास करने वाले और (मूराः) मूढ हैं (त्वा) तुझ को (मा दभन्) न हिंसित करें और तू भी (ब्रह्मद्विषम्) वेद के द्वेष करने वाले को (माकीम्) मत (वनः) भज ॥

अर्थात् इन्द्रयागादि कर्मानुष्ठान के विरोधी, स्वार्थी, मूढ़ लोग यज्ञ के नाश से वृष्टिकारक इन्द्र के विघातक न हों और इन्द्र से उन्हें आनुकूल्य भी न हो। यह परमात्मा का अनुग्रह प्रार्थित है।। ऋ० ८।४५। २३ में भी ।।२।।

अथ तृतीया—

३२ ३ १२ ३१२ ३१२

इह त्वा गोपरीणसं महे मन्दन्तु राधसे ।

१२ ३१र २र

सरो गौरो यथा पिब ॥ ३ ॥ [ ७ ] ( ७३३ )

पदपाठः—इह अ० । त्वा २ । गोपरीणसम् २ । महे ४ । मन्दन्तु क्रि० । राधसे ४ । सरः २ । गौरः १ । यथा अ० । पिब क्रि० ।।

अन्वितपदार्थः—( गोपरीणसम् ) गोभिः किरणैः संमिश्रम् ( त्वा ) त्वामिन्द्रम् ( इह ) यज्ञे ( महे राधसे ) महते धनाय [ वृष्टिद्वारा ] ( मन्दन्तु ) मादयन्तु सोमेन मनुष्या इति शेषः । त्वं च (पिब) शोषय। दृष्टान्तः—(यथा) येन प्रकारेण (गौरः) गौरमृगः (सरः) उदकं सोमलतारसं पिबति तथेत्यर्थः॥

गौरिति रश्मिनाम निघं० १ । ४ ॥ राध इति धननाम निघं० २ । १० ॥ ऋग्वेदे ८ । ४५ । २४ ऽपि ॥ ३ ॥

भावार्थः—( गोपरीणसम् ) किरणों में मिले हुवे ( त्वा ) तुझ इन्द्र को ( इह ) इस यज्ञ में ( महे ) बड़े ( राधसे ) अन्नादि धन के लिये [वृष्टि द्वारा ] ( मन्दन्तु ) मनुष्य सोम से हृष्ट अर्थात् वृष्टि आदि स्वकार्य करने में अनुकूल करें। और तू (पिब) उस सोम को शोष। दृष्टान्त—( यथा ) जैसे ( गौरः ) गौर मृग ( सरः ) सोमरसरूप जल को पीता है तद्वत् ।।

निघण्टु १।४॥ २।१० के प्रमाण संस्कृतभाष्य में देखिये ।। ३ ।।

अथ चतुर्थतृचस्य—काण्वः प्रियमेध ऋषिः । इन्द्रो देवता । गायत्री छन्दः ।

तत्र प्रथमा—

३ १ २ ३ २३ ३ २ ३ १ २ ३ १ २
इदं वसो सुतमन्धः पिबा सुपूर्णमुदरम् ।
१ २ ३ १ ३
अनाभयिन् ररिमा ते ॥१॥ (७३४) व्याख्याता (१२४)

अथ द्वितीया—

१ २ ३ २ ३ २३ ३ २ ३ २३ १ २
नृभिर्धौतः सुतो अश्नैरव्यावारैः परिपूतः ।
२ ३ २ ३ २ ३ १ २
अश्वो न निक्तो नदीषु ॥ २ ॥ ( ७३५ )

अथ तृतीया—

२ ३ २३ २३ १ २ ३ १ २ ३ १ २
तं ते यवं यथा गोभिः स्वादुमकर्म श्रीणन्तः ।
१ २ ३ १ २ ३ १ २
इन्द्र त्वास्मिन्सधमादे ॥ ३ ॥ [ ८ ] (७३६)

पदपाठः—( द्वयोरेकत्रान्वयः ) नृभिः ३ । धौतः, सुतः १ । अश्नैः, अव्यावारैः ३ । परिपूतः, अश्वः १ । न अ० । निक्तः १ । नदीषु ७ ।। तम् २। ते ४ । यवम् २ । यथा अ० । गोभिः ३=४ । स्वादुम् २। अकर्म क्रि० । श्रीणन्तः १ । इन्द्र सं० । त्वा २ । अस्मिन्, सधमादे ७ ॥

अन्वितपदार्थः—( नृभिः ) कर्मनेतृभिर्ऋत्विग्भिः ( धौतः ) शोधितः संस्कृतः अनन्तरम् ( अश्नैः ) अश्मभिर्ग्रावभिः(सुतः) अभिषुतः ततः (अव्यावारैः) अविर्मेषस्तदीयैर्बालैर्दशापवित्रस्थैः ( परिपूतः ) सर्वथा शोधितः सोमोऽस्ति (न) यथा ( नदीषु ) ( निक्तः ) स्नातः ( अश्वः ) ॥ ( तम् ) तथाभूतं सोमं (ते) तुभ्यम् (श्रीणन्तः) दुग्धादिभिःसंमिश्रय पचन्तो वयम् (स्वादुम् ) रसनीयम् ( अकर्म ) कुर्मः । दृष्टान्तः—(यथा) (गोभिः) गोभ्यः

(यवम्) यवादिसंपादितमाहारं सुसंस्कृतं कुर्वन्ति तद्वत्। (इन्द्र) राजन्! यजमान! (अस्मिन्) अत्र (सधमादे) यज्ञे (त्वा) त्वाम् पाययाम इति शेषः ॥

गृहीतसोमा घटविशेषा ग्रहाः। ते च प्रातःसवने उपांशु-प्रभृतयः, माध्यन्दिने मरुत्वतीयादयः, तृतीयसवनआदित्यादयः। अपि चैतदतिरिक्ताःषोडश्यादयो ग्रहाः सन्ति बहवो हि षोडश्यादि यागविशेषनियुक्ताः। तत्सर्वातिरिक्तएकोऽदाभ्यसंज्ञो ग्रहः। स च यस्मिन्नौदुम्बरे पात्रे सोमो गृहीतस्तस्मिन्होतृचमसस्था निग्रा-भ्यासंज्ञा अप आनीय तस्मिंस्तिस्त्रः सोमलताः प्रक्षिप्याग्नये त्वे-त्यादिभिस्त्रिभिर्मन्त्रैः (यजुषि ८ । ४७) क्रमेण गृह्यते। उक्तं च कात्यायनेन (१२ । ५ । १३–१५) "अदाभ्यं गृह्णात्या-सिच्य निग्राभ्याः पात्रे तस्मिंस्तूष्णीं त्रीनंशूनवधायाऽग्नयेत्वा गायत्रच्छन्दसमिति" अकर्मेत्यत्र—मन्त्रेघसह्वरणशेत्यादिना (२। ४। ८०) च्लेर्लुक् ॥ ऋग्वेदे तु ८ । २ । २–३ अव्योवारै रित्यन्तरम् ॥ २—३ ॥

भावार्थः–(नृभिः) कर्म के नेता ऋत्विजों से (धौतः) धोया हुवा, फिर (अश्नैः) अश्मा=पत्थरों से (सुतः) छेल कर निचोड़ा हुवा और (अव्यावारैः) ऊर्णामय दशापवित्रों से (परिपूतः) सर्वथा स्वच्छ किया हुवा सोम है (न) जैसा (नदीषु) नदियों में (निक्तः) स्नान कराया हुवा (अश्वः) घोड़ा॥ (तम्) उस सोम को (ते) आप के लिये (श्रीणन्तः) दुग्धादि में मिला कर पकाते हुवे हम लोग (स्वादुम्) स्वाद (अकर्म) बनाते हैं। दृष्टान्त—(यथा) जैसे (गोभिः) गौवों के लिये (यवम्) यवादि से सिद्ध किया दलिया आदि रातिब स्वादु बनाते हैं तद्वत् (इन्द्र) हे राजन्! यजमान! (अस्मिन्) इस (सधमादे) यज्ञ में (त्वा) आप को 'हम सोम पिलाते हैं' यह शेषार्थ है॥

जिन घटों में सोम ग्रहण किया गया हो वे घट "ग्रह" कहाते हैं। और वे (ग्रह) प्रातःसवन में "उपांशु" आदि, माध्यन्दिन सवन में "मरुत्वतीयादि" तृतीयसवन वा सायंसवन में "आदित्यादि" संज्ञक होते हैं। इन के अतिरिक्त षोडशी आदि यज्ञों में बहुत से "षोडशी" संज्ञकादि (ग्रह) घट होते हैं। इन सब के अतिरिक्त एक "अदाभ्य" नामक ग्रह होता है। और यह वह ग्रह है कि जिस गूलड़ की लकड़ी के पात्र में सोम रक्खा हो, उस में होता के चमसे वाले "निग्राभ्या" नामक जल लेकर उसमें तीन सोमलता-खण्ड डाल कर "अग्नये त्वा०" (यजुः ८।४७) इत्यादि तीन मन्त्रों से क्रम से ग्रहण किया जाता है। ऐसा ही कात्यायन ने १२। ५। १३-१५ में कहा है कि "अदाभ्यं गृह्णाति०" इत्यादि ॥

अष्टाध्यायी २। ४। ८० का प्रमाण संस्कृतभाष्य में देखिये ॥ ऋ० ८। २। २-३ में (गव्योवारैः) पाठन्तर है ॥ २-३ ॥

अथ तृतीयखण्डे प्रथमतृचसूक्तस्य-विश्वामित्रऋषिः। इन्द्रो देवता। गायत्री छन्दः ॥

तत्र प्रथमा-

३ १र २र ३ १ २

इदꣳ ह्यन्वोजसा सुतꣳराधानां पते ।

२ ३ २ १ ३

पिबा त्वा ऽ३स्य गिर्वणः ॥ १॥ (७३७) व्याख्याता (१६५)

अथ द्वितीया-

२ ३ १ ३ २ १र २र ३ २र २र ३क २र

यस्ते अनु स्वधामसत्सुते नियच्छ तन्वम् ।

१ २

स त्वा ममत्तु सोम्य ॥ २ ॥ ( १३८ )

पदपाठः-यः १। ते ४। अनु अ०। स्वधाम् २। असत् क्रि०। सुते ७। नियच्छ क्रि०। तन्वम् २। सः १। त्वा २। ममत्तु क्रि०। सोम्य सं० ॥

अन्वितपदार्थः-( सोम्य ) हे सोमपानार्ह राजन्! इन्द्र! (सुते) सोमेऽभिषुते सति (यः) सोमः (ते) तुभ्यम् ( स्वधाम् अनु ) अन्नेन सह ( असत् ) स्यात् (सः) सोमः ( त्वा ) त्वाम्

(ममत्तु) मादयतु हर्षयतु। त्वं च (तन्वम्) देहम् (नियच्छ) नियमेन धारय व्यायामादिनोन्नमय ॥

मनुष्यैः सोमः संपाद्य राज्ञेऽर्पणीयस्तेन च यथानियमं संसेव्य शारीरकोन्नतिर्विधेयेति भावः ॥

सोम्य इत्यत्र—सोममर्हति यः ४।४।१३७ इति यः॥ छन्दस्युभयथा ६।४।८६ इति तन्वमित्यत्र यणादेशः॥ असदित्यत्र यद्वृत्तान्नित्यमिति ८।१।६६ नानुदात्तत्वम्। धातोरिति ६।१।१६२ आगमस्यानुदात्तत्वे धातुस्वरः ॥ ऋग्वेदे तु ३।५१।११ सोम्यमित्यन्तरम् ॥२॥

भावार्थः—(सोम्य) हे सोमपानयोग्य राजन्! इन्द्र! (सुते) अभिषुत होने पर (यः) जो सोम (ते) आप के लिये (स्वधाम् अनु) भोजन के साथ (असत्) होवे (सः) वह सोम (त्वा) आप को (ममत्तु) तृप्त करे और आप (तन्वम्) शरीर को (नियच्छ) नियम से रखिये ॥

मनुष्यों को सोमरस खींचकर राजा के अर्पण करना चाहिये और राजा को उस का सेवन करके व्यायामादि से शारीरिक उन्नति करनी चाहिये॥ अष्टाध्यायी ८।१।६६॥४।४।१३७॥६।४।८६ और ६।१।१६२ के प्रमाण और ऋ० ३।५१।११ का पाठान्तर संस्कृत भाष्य में देखिये ॥२॥

अथ तृतीया—

१ २ ३ २उ ३ १२ ३ १ २
प्र ते अश्नोतु कुक्ष्योः प्रेन्द्र ब्रह्मणा शिरः।
२ ३ १ २ ३ २
प्र बाहू शूर राधसा ॥ ३ ॥ [ १ ] (७३१)

पदपाठः— प्र अ०। ते ६। अश्नोतु क्रि०। कुक्ष्योः ७। प्र। इन्द्र सं०। ब्रह्मणा ३। शिरः २। प्र। बाहू २। शूर सं०। राधसा ३॥

अन्वितपदार्थः—(शूर) विक्रान्त! (इन्द्र) राजन्!

( ते ) तव ( कुक्ष्योः ) उभयोः कुक्षिप्रदेशयोर्मध्ये स सोमः (प्र, अश्नोतु ) व्याप्नोतु ( ब्रह्मणा ) भोजनेनान्नेन सह ( शिरः ) मूर्धानम् ( प्र ) प्राश्नोतु ( राधसा ) धनैश्वर्यादिना ( बाहू ) भुजौ ( प्र ) प्राश्नोतु ॥

ब्रह्मेति अन्ननाम निघं० २ । ७ राधइति धननाम निघं० २ । १० ॥ अश्नोत्वित्यत्र व्यत्ययेन ३ । १ । ८५ परस्मैपदम् ऋग्वेदे तु ३ । ५१ । १२ राधसे इत्यन्तरम् ॥ ३ ॥

भावार्थः—( शूर ) वीर ! ( इन्द्र ) राजन् ! ( ते ) आप की ( कुक्ष्योः ) दोनों कोखों में ( प्र,अश्नोतु ) उक्त सोमरस व्याप जावे ( ब्रह्मणा ) भोजन के रस के साथ ( शिरः ) शिर को ( प्र ) व्याप जावे और ( राधसा ) धनैश्वर्य के साथ ( बाहू ) दोनों भुजों को ( प्र ) व्याप जावे ॥

निघं० २ः ७ ॥ २ । १० अष्टाध्यायी ३ । १ । ८५ के प्रमाण और ऋ० ३ । ५१ । १२ का पाठभेद संस्कृत भाष्य में देखिये ॥ ३ ॥

अथ द्वितीयतृचसूक्तस्य—मधुच्छन्दा ऋषिः । इन्द्रो देवता । गायत्री छन्दः ॥

तत्र प्रथमा—

२उ ३ १ २ ३१२ ३१र २र
आ त्वे ता निषीदतेन्द्रमभिप्रगायत ।
१ २ ३ १ २
सखायः स्तोमवाहसः ॥१॥ (७४०) व्याख्याता (१६४)

अथ द्वितीया—

३ १२ ३१र २र३ १ २
पुरूतमं पुरूणामीशानं वार्याणाम् ।
२ ३ २ ३ १ २ ३ २
इन्द्रं सोमे सचा सुते ॥ २ ॥ ( ७४१ )

पदपाठः—पुरूतमम् २ । पुरूणाम् ६ । ईशानम् २ । वार्याणाम् ६ । इन्द्रम् २ । सोमे ७ । सचा अ० । सुते ७ ॥

अन्वितपदार्थः—सखाय इत्यनुवर्त्तते। हे सखायः ! ( सोमे सुते ) सति [ आदौ ] ( पुरूतमम् ) पुरून् बहूञ्छत्रूंस्तामयति ग्लापयति तम् ( पुरूणाम् ) बहूनां ( वार्याणाम् ) धनादिवरणीयानाम् ( ईशानम् ) स्वामिनम् ( इन्द्रम् ) परमेश्वरम् ( सचा ) संभूय अभिप्रगायतेति पूर्वेण संबन्धः ॥

पुरूतममिति, तमु ग्लानौ ( दि० प० ) इतिधातोर्ण्यन्तात्पचाद्यचि रूपम् ॥ ऋग्वेदे १ । ५ । २ऽपि ॥ २ ॥

भावार्थः—हे मित्रो ! [यह पूर्वमन्त्र से लेकर] ( पुरूतमम् ) बहुत शत्रुओं के नाशक ( पुरूणाम् ) बहुत ( वार्याणाम् ) धनादि वरणीय पदार्थों के ( ईशानम् ) स्वामी ( इन्द्रम् ) परमात्मा को ( सोमे सुते ) सोम अभिषुत होने पर (सचा) मिलकर [अभिप्रगायत] गाओ ।। ऋ० १।५।२ में भी ॥ २॥

अथ तृतीया—

१ २ ३ २ ३ १ २ ३ २ ३ १र २र
स घा नो योग आभुवत्स राये स पुरन्ध्या ।
२ ३ १ २ ३ १र २र
गमद्वाजेभिरासनः ॥ ३ ॥ [ १० ] ( ७४२ )

पदपाठः—सः १ । घ अ० । नः ६ । योगे ७ । आभुवत् क्रि० । सः । राये ४ । सः । पुरन्ध्या ३ । गमत् क्रि० । वाजेभिः ३ । आ अ० । सः । नः २ ॥

अन्वितपदार्थः—हे सखायः ! ( सः घ ) सएवेश्वरः ( नः ) अस्माकं ( योगे ) योगसाधने ( आभुवत् ) साक्षाद्भवेत् ( सः ) (राये) धनायानुकूलो भवेत् ( सः पुरन्ध्या ) बहुबुद्ध्या [निरु० ६ । १३ ] तद्दानेनानुकूलो भवेत् ( सः ) परमेश्वरः ( नः ) अस्मान् ( वाजेभिः ) बलैरन्नैर्वा ( आगमत् ) प्राप्नुयात् ॥

ऋग्वेदे तु १ । ५ । ३ पुरन्ध्यामिति पाठः ॥ ३ ॥

भावार्थः—हे मित्रो ! ( सः घ ) वही ईश्वर (नः) हमारे ( योगे ) योगसाधन में ( आभुवत् ) साक्षात् हो, ( सः ) वही ( राये ) धन के लिये अनुकूल हो, (सः) वही (पुरन्ध्या) बुद्धि से अनुकूल हो ( सः ) वही ( नः ) हम को ( वाजेभिः ) बलों वा अन्नों से ( आगमत् ) प्राप्त हो ॥ ऋ० १ । ५ । ३ में पुरन्ध्याम् पाठ है ।। ३ ॥

अथ तृतीयतृचसूक्तस्य—शुनश्शेप ऋषिः । इन्द्रो देवता । गायत्री छन्दः ॥

तत्र प्रथमा—

१२ ३१२३ १२
योगे योगे तवस्तरं वाजे वाजे हवामहे ।
१ २ ३ १ २३१२
सखाय इन्द्रमूतये ॥ १ ॥ (७४३) व्याख्याता ( १६३)

अथ द्वितीया—

१ २ ३ १र २र ३ १ २ ३ १र २र
अनु प्रत्नस्यौकसो हुवे तुविप्रतिं नरम् ।
२ ३ १ २ ३ २ ३ २
यं ते पूर्वं पिता हुवे ॥ २ ॥ ( ७४४ )

पदपाठः—अनु अ० । प्रत्नस्य, ओकसः ६ । हुवे क्रि० । तुविप्रतिम्, नरम्, यम् २ । ते २ । पूर्वम् २ । पिता १ । हुवे ॥

अन्वितपदार्थः—(प्रत्नस्य)पुरातनस्य सनातनस्य (ओकसः) पदस्य मोक्षस्य (अनु नरम्) अनुनेतारम् (तुविप्रतिम्) बहुकालं प्रतिगमयितारम् (ते) त्वाम् ( हुवे ) स्तौमि ( यम् ) यं त्वां ( पूर्वम् ) इतः पूर्वम् ( पिता ) गुरुर्मम (हुवे) अस्तावीत् ॥ शिष्यप्रशिष्यैर्गुरुपरंपरयेश्वरस्तुतिप्रार्थनोपासनाः कार्या इति भावः ॥ ऋग्वेदे १ । ३० । ९ ऽपि ॥ २ ॥

भावार्थः—( प्रत्नस्य ) सनातन ( ओकसः ) मोक्षपद के (अनु) आनुकूल्य से ( नरम् ) लेजाने वाले ( तुविप्रतिम् ) बहुत समय के प्रति पहुं-

चाने वाले ( ते ) आप को ( हुवे ) मैं स्तुत करता हूं ( यम् ) जिस आप को ( पूर्वम् ) इस से पूर्व ( पिता ) मेरे गुरु ने ( हुवे ) स्तुत किया है॥

शिष्य प्रशिष्यों को गुरुपरम्परा से परमात्मा की स्तुति प्रार्थना उपासना करनी चाहिये। यह भाव है॥ ऋ० १। ३०। ९ में भी॥ २॥

अथ तृतीया—

१ २ ३२३ १२ ३१ २३१ २
आ घा गमद्यदि श्रवत्सहस्रिणीभिरूतिभिः॥
१२३१२३ १२
वाजेभिरुप नो हवम्॥ ३॥ [ ११ ] ( ७४५ )

पदपाठः—आ, घ अ०। गमत् क्रि०। यदि अ०। श्रवत् क्रि०। सहस्रिणीभिः, ऊतिभिः, वाजेभिः ३। उप अ०। नः ६। हवम् २॥

अन्वितपदार्थः—प्रकरणात्परमेश्वरः (यदि) ( नः ) अस्माकं ( हवम् ) स्तुतिमाह्वानं वा (श्रवत् ) शृणुयात्स्वीकुर्यात् (घ) तदैव ( सहस्रिणीभिः ) बह्वीभिः ( ऊतिभिः ) रक्षाभिः (वाजेभिः)बलैश्च (उप आ गमत्) प्राप्नुयात्॥ऋग्वेदे १।३०।८ऽपि॥३

भावार्थः—प्रकरण से परमेश्वर ( यदि ) जो ( नः ) हमारे (हवम्) स्तोत्र वा पुकार को ( श्रवत् ) सुनले स्वीकार करले ( घ ) तो उसी समय (सहस्रिणीभिः) बहुत सी ( ऊतिभिः ) रक्षाओं और ( वाजेभिः ) बलों के साथ (उप आ गमत्) हम को प्राप्त होवे॥ ऋ० १। ३०। ८ में भी॥ ३॥

अथ चतुर्थतृचसूक्तस्य—नारद ऋषिः। इन्द्रो देवता। उष्णिक्छन्दः॥

तत्र प्रथमा—

१ २ ३ २३ २ २३ १ २ ३क ३र
इन्द्र सुतेषु सोमेषु क्रतुं पुनीष उक्थम्।
३ २ ३२ ३ १२ ३ २
विदे वृधस्य दक्षस्य महां हि षः॥ १॥ ( ७४६ )

व्याख्याता ( ३८१ )

अथ द्वितीया–

१ २ ३ १ २ ३ २ ३ १ २ ३ २
स प्रथमे व्योमनि देवानां सदने वृधः ।
३ २ ३ १ २ ३ १ २ २ ३
सुपारः सुश्रवस्तमः समप्सुजित् ॥ २ ॥ ( ७४७ )

पदपाठः–सः १ । प्रथमे, व्योमनि ७ । देवानाम् ६ । सदने ७ । वृधः, सुपारः, सुश्रवस्तमः, समप्सुजित् १ ॥

अन्वितपदार्थः–( सः ) परमेश्वरः ( देवानाम् ) सूर्यादीनां ( सदने ) स्थाने ( प्रथमे ) विस्तीर्णे ( व्योमनि ) आकाशे (वृधः) महत्त्वेन स्थितः (सुपारः) सुष्ठु पारयति पूरयति भक्तकार्याणि यः सः (सुश्रवस्तमः) अतिप्रशस्तयशाः (समप्सुजित्) सम्यक् कर्मसु [निघं० २ । १] जेता कर्मानुकूलफलप्रदः अस्तीति शेषः॥ ऋग्वेदे ८ । १३ । २ ऽपि ॥ २ ॥

भावार्थः–( सः ) वह परमेश्वर ( देवानाम् ) सूर्यादि के (सदने) स्थान ( प्रथमे ) विस्तृत ( व्योमनि ) आकाश में (वृधः) महिमा से स्थित (सुपारः) भक्तों के कार्य भले प्रकार पूरे करने वाला ( सुश्रवस्तमः ) अत्युत्तम यश वाला ( समप्सुजित् ) कर्मों में [ निघं० २ । १ ] भले प्रकार जीतने वाला= कर्मानुकूल फलदायी है ॥ ऋ० ८ । १३ ।२ में भी ॥ २ ॥

अथ तृतीया–

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
तमु हुवे वाजसातय इन्द्रं भराय शुष्मिणम् ।
१ २ ३ १ २र ३ १ २ ३ २
भवा नः सुम्ने अन्तमः सखा वृधे ॥३॥ [१२] (७४८)

पदपाठः–तम् २ । उ अ० । हुवे क्रि० । वाजसातये ४ । इन्द्रम् २ । भराय ४ । शुष्मिणम् २ । भव क्रि० । नः ६ । सुम्ने ७ । अन्तमः, सखा १ । वृधे ४ ॥

अन्वितपदार्थः–(वाजसातये) वाजानां बलानां सातिर्लाभो

यस्मिंस्तस्मै ( भराय ) कामादिशत्रुभिः संग्रामाय (तम् उ) तमेव ( शुष्मिणम् ) बलिनम् ( इन्द्रम् ) परमेश्वरम् (हुवे) आह्वयामि । हे परमेश्वर ! त्वम् ( नः ) अस्माकं ( वृधे ) वर्धनाय ( सुम्ने ) सुखनिमित्ते ( अन्तमः ) अन्तिकतमः ( सखा ) सुहृच्च (भव) एधि ॥

वाजसातौ इति भरे इति च संग्रामनाम निघं० २।१७॥ सुम्नमिति सुखनाम निघं० ३।६॥ अन्तमानामिति अन्तिकनाम निघं० २।१६ "तमे तादेश्चेति अन्तिकशब्दस्य तादिलोपः" ऋग्वेदे तु ८।१३।३ तमुहे इति पाठः ॥ ३ ॥

भावार्थः-(वाजसातये) बलों का जिस में लाभ है ऐसे (भराय) कामादि शत्रुओं से संग्राम के लिये (तम् उ) उस ही ( शुष्मिणम् ) महाबली (इन्द्रम्) परमेश्वर को (हुवे) पुकारता हूं कि हे परमेश्वर ! आप (नः) हमारी (वृधे) वृद्धि (सुम्ने) और सुख के निमित्त (अन्तमः) समीपवर्त्ती (सखा) मित्र (भव) हूजिये॥

निघं० २।१७॥३।६॥२।१ के प्रमाण और ऋ० ८।१३।३ का पाठ भेद संस्कृतभाष्य में देखिये ॥ ३ ॥

अथ चतुर्थखण्डे प्रगाथस्य प्रथमसूक्तस्य-वामदेव ऋषिः । अग्निर्देवता । बृहती छन्दः ।।तत्र प्रथमा-

३१ २ ३ १ २र ३ १ २र ३ १ २ ३ १ २र ३ १
एना वो अग्निं नमसोर्जो नपातमाहुवे। प्रियं चेतिष्ठमरतिं
२ ३ १ २र ३ २ ३ १ २
स्वध्वरं विश्वस्य दूतममृतम् ॥१॥ ( ७४९ ) व्याख्याता(४५)

अथ द्वितीया-

१ २ ३ २ ३ १ २ ३ १ २ ३क २र ३ १ २
स योजते अरुषा विश्वभोजसा स दुद्रवत्स्वाहुतः। सुब्रह्मा
३ २ ३ १ ३ १ २ ३ २उ ३ १ २
यज्ञः सुशमी वसूनां देवं राधो जनानाम् ॥२॥ [१३] (७५०)

पदपाठः—सः १। योजते क्रि०। अरुषा,विश्वभोजसा ३। सः। दुद्रवत् क्रि०। स्वाहुतः,सुब्रह्मा,यज्ञः,सुशमी १। वसूनाम् ६। देवम्, राधः २। जनानाम् ६॥

अन्वितपदार्थः—(सः) अग्निः (जनानाम्) यजमानादीनां (वसूनाम्) धनानां (देवम्) उत्तमं (राधः) धनम् (योजते) योजयति। (सः) (स्वाहुतः) सुष्ठु आहुतः (सुब्रह्मा) शोभनो ब्रह्मा यत्र सः (सुशमी) शोभनशम्यादिकाष्ठवान् (यज्ञः) होमः (विश्वभोजसा) विश्वरक्षकेण (अरुषा) तेजसा (दुद्रवत्) दूरं गच्छति॥ ऋग्वेदे ७। १६। २ ऽपि॥ २॥

भावार्थः—(सः) वह पूर्वमन्त्रोक्त अग्नि (जनानाम्) यजमानादि जनों के (वसूनाम्) धनों में (देवम्) उत्तम (राधः) धन को (योजते) युक्त करता है। (सः) वह (स्वाहुतः) अच्छे प्रकार आहुति दिया हुवा (सुब्रह्मा) उत्तम ब्रह्मावाला (सुशमी) शोभन शमी आदि काष्ठ वाला (यज्ञः) होम (विश्वभोजसा) संसार के रक्षक (अरुषा) तेज से (दुद्रवत्) दूर तक जाता है॥ ऋ० ७। १६। २ में भी॥ २॥

अथ प्रगाथस्य द्वितीयसूक्तस्य—वसिष्ठ ऋषिः। उषा देवता। बृहती छन्दः॥

तत्र प्रथमा—

१ २ ३ २ १ २ ३ २ ३ २ १ २
प्रत्यु अदर्श्यायत्यू ऽ ३ ऽ इच्छन्ती दुहिता दिवः। अपो
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
मही वृणुते चक्षुषा तमो ज्योतिष्कृणोति सूनरी॥१॥(७५१)

व्याख्याता (३०३)

अथ द्वितीया—

२ ३ १ २ ३ २ ३ १ २ ३ १ र २ र ३ २
उदुस्त्रियाः सृजते सूर्यः सचा उद्यन्नक्षत्रमर्चिवत्।
१ २ र ३ २ ३ १ २ ३ २ ३ १ २
तवेदुषो व्युषि सूर्यस्य च संभक्तेन गमेमहि॥२॥[१४](७५२)

पदपाठः—उत् अ० । उस्त्रियाः २ । सृजते क्रि० । सूर्यः १ । सचा अ० । उद्यन् १ । नक्षत्रम् १ । अर्चिवत् १ । तव ६ । इत् अ० । उषः सं० । व्युषि ७ । सूर्यस्य ६ । च अ० । सम् अ० । भक्तेन ३ । गमेमहि क्रि० ॥

अन्वितपदार्थः—( सूर्यः ) प्रसिद्धः ( उद्यन् ) उदयं गच्छन् ( नक्षत्रम् ) नक्षत्रसंज्ञः ( अर्चिवत् ) अर्चिष्मान् अस्तीति शेषः । स च ( सचा ) युगपदेव ( उस्त्रियाः ) किरणान् ( उत् सृजते ) उद्गमयति । तथा च—( उषः ) प्रभातबेले ! ( तव सूर्यस्य च ) ( व्युषि ) प्रकाशे ( इत् ) एव वयं ( भक्तेन ) अन्नेन ( संगमेमहि ) संगच्छेमहि ॥

मनुष्यैः सर्वदा प्रकाशे एव भोजनं कर्त्तव्यं नान्धकारे इति भावः ॥ "सौरेण तेजसा हि नक्तं चन्द्रप्रभृतीनि नक्षत्राणि भासन्ते" इति सायणः ॥ ऋग्वेदे तु ७ । ८१ । २ सचाँ इति पाठः ॥२॥

भावार्थः—( सूर्यः ) सूर्यलोक ( उद्यन् ) सदा उदित ( नक्षत्रम् ) नक्षत्र और ( अर्चिवत् ) किरणों वाला है । और वह ( सचा ) एक साथ ही ( उस्त्रियाः ) किरणों को ( उत् सृजते ) ऊपर को छोड़ता है । तथा च—( उषः ) प्रभात बेला ! हम ( तव ) तेरे ( च ) और ( सूर्यस्य ) सूर्य के ( व्युषि ) प्रकाश में ( इत् ) ही ( भक्तेन ) अन्न से ( संगमेमहि ) समागम करें ॥

मनुष्यों को सदा सूर्यादि के प्रकाश में ही भोजन करना चाहिये, अन्धकार में नहीं । यह तात्पर्य है ॥ सायणाचार्य ने इस के भाष्य में लिखा है कि " सूर्य के तेज से ही रात्रि में चन्द्रादि नक्षत्र चमकते हैं " इस से पाया जाता है कि सायण तक हमारे देशवासी इस बात को वेदादि शास्त्रानुसार जानते, मानते रहे ॥ ऋ० ७ । ८१ । २ में सचाँ पाठ है ॥ २ ॥

अथ प्रगाथस्य तृतीयसूक्तस्य—वसिष्ठ ऋषिः । अश्विनौ देवते । बृहती छन्दः ॥

तत्र प्रथमा—

३१ २ ३ १ २    ३ १ २    ३ १ २ ३ १ २

इमा उ वां दिविष्टय उस्रा हवन्ते अश्विना । अयं वामह्वेऽवसे

३ १ २ ३ १र २र
शचीवसू विशं विशं हि गच्छथः ॥१॥(७५३)व्याख्याता(३०४)

अथ द्वितीया—

३२ ३१ २ ३ १ २ ३ १ २ ३ १ २ ३ २उ ३
युवं चित्रं ददथुर्भोजनं नरा चोदेथां सूनृतावते । अर्वाग्रथं
१ २ ३ १ २ ३ १ २ ३ १ २र
समनसा नियच्छतं पिबतं सोम्यं मधु ॥२॥[१५](७५४)

पदपाठः— युवम् १ । चित्रम् २ । ददथुः क्रि० । भोजनम् २ । नरा सं०। चोदेथाम् क्रि० । सूनृतावते ४ । अर्वाक् अ० । रथम् २ । समनसा सं० । नियच्छतम्, पिबतम् क्रि० । सोम्यम्, मधु २ ॥

अन्वितपदार्थः— ( नरा ) सर्वस्य जगतो नेतारौ ! सूर्याचन्द्रमसौ ! ( समनसा ) समानमनस्कौ ! ( युवम् ) युवाम् ( सूनृतावते ) वेदोक्तवाग्वते याज्ञिकाय (चित्रम्) अद्भुतम् (भोजनम् ) ( ददथुः ) दत्थः (चोदेथाम्) प्रेरयथ कर्मणि लोकम् (अर्वाक्) लोकाभिमुखम् (रथम्) स्वीयं रमणीयं स्वरूपम् (नियच्छतम्) नियमेन प्रापयथः तौ युवां ( सोम्यम् ) सोमसम्बन्धि ( मधु ) रसम् ( पिबतं ) गृह्णीयातम् ॥

सूर्याचन्द्रमसौ हि शीतोष्णाभ्यां जगतो निर्वाहकौ । मनुष्यादीनां मनांसि यथाऽन्तःसारभूतानि तथैव सूर्याचन्द्रमसोरपि अन्तःसारस्य मनः संज्ञाऽवगन्तव्या । सूर्याचन्द्रमसौ हि नानौषधिवनस्पत्यादिरूपं भोजनं मनुष्यादिभ्यो दत्तः । लोकस्य कर्मणि प्रवर्त्तकौ च प्रकाशकरत्वात् । तौ च सोमाद्योषधिद्वारा यजनेन तद्रसग्राहकौ सन्तौ प्रजाया महान्तमुपकारं साधुतः ॥ ऋग्वेदे ७ । ७४ । २ ऽपि ॥ २ ॥

भावार्थः–( नरा ) सब जगत् के नेता ! ( समनसा ) समान मन वाले सूर्य और चन्द्रमा ! ( युवम् ) तुम दोनों ( सूनृतावते ) वैदिकवाणीवाले यज्ञानुष्ठानसंपन्न पुरुष के लिये ( चित्रम् ) अनेक प्रकार का ( भोजनम् ) भोजन ( ददथुः ) देते हो, ( चोदेथाम् ) कर्म में प्रवृत्त करते हो, ( अर्वाक् ) जगत् के सामने ( रथम् ) अपने रमणीय स्वरूप को ( नियच्छतम् ) नियमपूर्वक लाते हो । सो तुम दोनों ( सोम्यम् ) सोम का ( मधु ) रस ( पिबतम् ) शोषण करो ॥

सूर्यचन्द्रमा शीतोष्ण से जगत् को निर्वाहक हैं । ओषधि वनस्पत्यादि रूप भोजन सब के लिये देते हैं । प्रकाश से जगत् को व्यापार में प्रवृत्त करते हैं और सोमादि ओषधियों के रस को पीकर जगत् का उपकार करते हैं। जिस प्रकार मनुष्यादि के भीतरी बलसाधन का नाम मन है, इसी प्रकार सूर्य चन्द्र के आन्तरिक बलसाधन को यहां मन जानिये । ऋ० १।७४। २ में भी ॥२॥

अथ पञ्चमे खण्डे प्रथमस्य तृचसूक्तस्य–अवत्सार ऋषिः । सोमो देवता । गायत्री छन्दः ॥ तत्र प्रथमा–

३ २ ३ २उ ३ १ २ ३१ २ ३ १ २
**अस्य प्रत्नामनु द्युतꣳ शुक्रं दुदुह्रे अह्रयः ।**
१ २ ३ १र २र
**पयः सहस्रसामृषिम् ॥ १ ॥ ( ७५५ )**

पदपाठः–अस्य ६ । प्रत्नाम् २ । अनु अ० । द्युतम् २ । शुक्रम् २ । दुदुह्रे क्रि० । अह्रयः १ । पयः, सहस्रसाम्, ऋषिम् २ ।

**अन्वितपदार्थः**–( अस्य ) सोमस्य ( प्रत्नाम् ) पुरातनीं ( द्युतम् ) दीप्तिम् ( अनु ) लक्षीकृत्य ( अह्रयः ) कवयः ऋत्विजः ( शुक्रम् ) उज्ज्वलम् ( सहस्रसाम् ) बहुभिर्भजनीयम् ( ऋषिम् ) बुद्धिवर्धकम् ( पयः ) दुग्धम् ( दुदुह्रे ) दुहन्ति ॥

सहस्रसामिति–जनसनखनक्रमगमो विट् ३ । २ । ६७ इति विट् प्रत्यये, विड्वनोरनुनासिकस्यात् ६ । ४ । ४१ इत्याकारे, वेरपृक्तस्य ६ । १ । ६७ इतिवेर्लोपे रूपम् ॥ ऋग्वेदे ९ । ५४ । १ ऽपि तथा यजुर्वेदे ३ । १६ ऽपि ॥ १ ॥

भावार्थः-( अस्य ) इस सोम की ( प्रत्नाम् ) पुरातन ( द्युतम् ) चमक को (अनु) पश्चात कर (अह्रयः) विद्वान् ऋत्विज् ( शुक्रम्) श्वेत (सहस्रसाम्) बहुतों के सेवनीय ( ऋषिम् ) बुद्धिवर्धक (पयः) दुग्ध को (दुदुह्रे) दुहते हैं ॥

अष्टाध्यायी ३ । २ । ६१॥ ६ । ४ । ५१॥ ६ । १ । ६१ के प्रमाण संस्कृत भाष्य में देखिये ॥ यजुः ३ । १६ ऋ० ९ । ५४ । १ में भी ॥ १ ॥

अथ द्वितीया-

३ १    २ १र    ३२३१र    २र

अयꣳ सूर्यइवोपदृगयꣳ सराꣳसि धावति ।

३ २ ३२र ३ १र    २र

सप्त प्रवत आदिवम् ॥ २ ॥ ( ७५६ )

पदपाठः-अयम् १ । सूर्यइव अ० । उपदृक् १ । अयम् १ । सरांसि २ । धावति क्रि० । सप्त, प्रवतः २ । आ अ० । दिवम् २ ॥

अन्वितपदार्थः-( अयम् ) सोमः ( सूर्यइव ) सूर्यसमः (उपदृक् ) चक्षुःसहायकः (अयम् )सोमः ( सरांसि ) त्रिंशदुक्थपात्राणि अथवा त्रिंशदहानि मासस्य तान्येव सरांस्यत्रोच्यन्ते तानि तथा ( सप्त ) सप्तसंख्याकाः (प्रवतः) नदीरिव भूरादीन् सप्त ( आदिवम् ) द्युलोकपर्यन्तम् ( धावति ) गच्छति ॥

तत्रैतद्याज्ञिका वेदयन्ते त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि तान्येतस्मिन्काल एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते । त्रिंशदपरपक्षस्याहोरात्रास्त्रिंशत्पूर्वपक्षस्येति नैरुक्तास्तद्या एताश्चान्द्रमस्य आगामिन्य आपो भवन्ति रश्मयस्ता अपरपक्षे पिबन्ति । तथापि निगमो भवति-यमक्षितिमक्षितयः पिबन्तीति । तं पूर्वपक्ष आप्याययन्ति । तथापि निगमो भवति-यथा देवा अंशुमाप्याययन्तीति । निरु० ५ । ११ ॥ ऋ० ९ । ५४ । २ ऽपि ॥ २ ॥

भाषार्थः–( अयम् ) यह सोम ( सूर्य इव ) सूर्यसा (उपदृक्) नेत्रसहायक है। ( अयम् ) यह सोम ( सरांसि ) ३० उक्थ पात्रों अथवा महीने के ३० दिनों को तथा (सप्त) सात ७ (प्रवतः) नदियों रूप भूरादिकों को ( आदिवम् ) द्युलोकपर्यन्त ( धावति ) जाता है ॥

निरुक्तकार यास्क ५।११ में कहते हैं कि–"याज्ञिक लोग तो सरांसि पद से ३० उक्थपात्रों का अर्थ बतलाते हैं जो कि माध्यन्दिन सवन में एक देवता वाले होते हैं और जिन को उस समय में एक प्रतिधान से पीते हैं। तथा नैरुक्तों की यह सम्मति है कि ३० अपरपक्ष के अहोरात्र और ३० पूर्वपक्ष के अहोरात्र हैं। जो कि चन्द्रमा से आने वाले जल हैं, उन को किरणें अपरपक्ष में पीती हैं। तथा हि–( यमक्षि० ) यह वेद में कहा है। उस को पूर्वपक्ष में आप्यायित करती हैं, जैसा कि–( यथा देवाः ) वेद में कहा है" ॥ ऋ० ९। ५४। २ में भी ॥ २ ॥

अथ तृतीया–

३ १र २र ३ १र २र३ १ २
अयं विश्वानि तिष्ठति पुनानो भुवनोपरि ।
१ २ ३ १र २र
सोमो देवो न सूर्यः ॥३॥ [१६] (७५७)

पदपाठः–अयम् १। विश्वानि २। तिष्ठति क्रि०। पुनानः १। भुवना २। उपरि अ०। सोमः, देवः १। न अ०। सूर्यः १ ॥

अन्वितपदार्थः–( अयम् ) सोमः ( विश्वानि ) सर्वाणि ( भुवना ) भुवनानि ( पुनानः ) पवित्रयन् ( उपरि ) आकाशे ( तिष्ठति । दृष्टान्तः–( न ) यथा ( देवः ) प्रकाशमानः (सूर्यः) आदित्यः सर्वाणि भुवनानि किरणैः शोधयन् तिष्ठति तद्वत् ॥ ऋग्वेदे ९। ५४। ३ ऽपि ॥ ३ ॥

भाषार्थः–( अयम् ) यह सोम ( विश्वानि ) सब ( भुवना ) भुवनों को ( पुनानः ) शुद्ध करता हुवा ( उपरि ) आकाश में ( तिष्ठति ) स्थित होता है ( न ) जैसे ( देवः ) प्रकाशमान ( सूर्यः ) सूर्य सब भुवनों को किरणों से शोधता हुवा स्थित है ॥ ऋ० ९। ५४। ३ में भी ॥ ३ ॥

अथ द्वितीयतृचसूक्तस्य—असितः काश्यपोऽमहीयुर्वा ऋषिः ।
सोमो देवता । गायत्री छन्दः ॥

तत्र प्रथमा—

३२ ३२३ १ २ ३२ ३१ २ ३२
एष प्रत्नेन जन्मना देवो देवेभ्यः सुतः ।
१२ ३१२
हरिः पवित्रे अर्षति ॥ १ ॥ ( ७५८ )

पदपाठः—एषः १ । प्रत्नेन ३ । जन्मना ३ । देवः १ । देवेभ्यः ४ । सुतः १ । हरिः १ । पवित्रे ७ । अर्षति क्रि० ॥

अन्वितपदार्थः—( हरिः ) हरितवर्णः ( एषः ) सोमः ( प्रत्नेन ) पुरातनेन ( जन्मना ) जननेन ( सुतः ) अभिषुतः (देवः) द्योतमानः (पवित्रे) दशापवित्रेऽधिकृतः ( देवेभ्यः ) वाय्वादिभ्यः (अर्षति) गच्छति ॥ ऋग्वेदे ९ । ३ । ९ ऽपि ॥१॥

भावार्थः—( हरिः ) हरित वर्ण ( एषः ) यह सोम ( प्रत्नेन ) प्राचीन ( जन्मना ) जन्म से ( सुतः ) अभिषुत किया हुवा ( देवः ) द्योतमान ( पवित्रे ) दशापवित्र पर रक्खा हुवा ( देवेभ्यः ) वायु आदि देवों के लिये ( अर्षति ) प्राप्त होता है ॥ ऋ० ९ । ३ । ९ में भी ॥ १ ॥

अथ द्वितीया—

३ २ ३२३ १ २ ३ २ ३२ ३ १ २
एष प्रत्नेन मन्मना देवो देवेभ्यस्परि ।
३ १र २र
कविर्विप्रेण वावृधे ॥ २ ॥ ( ७५९ )

पदपाठः—एषः १ । प्रत्नेन ३ । मन्मना ३ । देवः १ । देवेभ्यः ४ । परि अ० । कविः १ । विप्रेण ३ । वावृधे क्रि० ॥

अन्वितपदार्थः—(एषः) सोमः (प्रत्नेन) प्राचीनेन (मन्मना) ज्ञानसाधनेन (देवः) द्योतमानः (कविः) बुद्धितत्त्वोद्बोधकः (विप्रेण) विदुषा ऋत्विजा (देवेभ्यः) वाय्वादिभ्यः (परि वावृधे) परितो वर्धते ॥ ऋग्वेदे तु ९ । ४२ । २ धारया पवते सुतः इति तृतीयः पादः ॥ २ ॥

भाषार्थः– (एषः) यह सोम (प्रत्नेन) पुराणे (मन्मना) ज्ञानसाधन से (देवः) प्रकाशमान (कविः) बुद्धि तत्त्व का उभारने वाला (विप्रेण) विद्वान् ऋत्विज् से (देवेभ्यः) वायु आदि के लिये (परि वावृधे) सब ओर बढ़ता है॥ ऋ० । ९ । ४२ । २ का पाठान्तर संस्कृतभाष्य में देखिये ॥ २ ॥

अथ तृतीया–

३ २ ३ १र २र ३ २ ३ १ २
दुहानः प्रत्नमित्पयः पवित्रे परिषिच्यसे ।
१ २ ३ १ २
क्रन्दन्देवाँ अजीजनः ॥ ३ ॥ [ १७ ] ( ७६० )

पदपाठः–दुहानः १ । प्रत्नम् २ । इत् अ० । पयः २ । पवित्रे ७ । परिषिच्यसे क्रि० । क्रन्दन् १ । देवान् २ । अजीजनः क्रि० ॥

अन्वितपदार्थः—(प्रत्नम् इत्) प्राचीनमेव (पयः) रसं (दुहानः) सन् (पवित्रे) दशापवित्रे (परिषिच्यसे) परितो धार्यसे। (क्रन्दन्) अग्नौ हुतश्चिटचिटाशब्दं कुर्वन् (देवान्) वाय्वादीन् (अजीजनः) जनयसि ॥ ऋग्वेदे तु ९ । ४२ । ३ प्रथमपुरुषप्रयोगः ॥ ३ ॥

भाषार्थः–(प्रत्नम्) पुराणे (इत्) ही (पयः) रस को (दुहानः) पूर्ण करता हुवा सोम (पवित्रे) दशापवित्र पर (परिषिच्यसे) सर्वतः सेचन किया जाता है। (क्रन्दन्) अग्नि में पड़ने से चटचट करता हुआ

(देवान्) वायु आदि देवों को ( अजीजनः ) जनता है ।। ऋ० ९ । ४२ । ३ का पाठभेद संस्कृत भाष्य में देखिये ।। ३ ।।

अथ तृतीयतृचसूक्तस्य—ऋष्यादयः पूर्ववत् ।।

तत्र प्रथमा—

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
उपशिक्षापतस्थुषो भियसमाधेहि शत्रवे ।
१ २ ३ २ १ २
पवमान विदा रयिम् ।। १ ।। ( ७६१ )

पदपाठः—उपशिक्ष क्रि० । अपतस्थुषः २ । भियसम् २ । आधेहि क्रि० । शत्रवे ४ । पवमान सं० । विदाः क्रि० । रयिम् २ ।।

अन्वितपदार्थः—( पवमान ) सोम ! (अपतस्थुषः) विरोधे स्थितान्शत्रून् (उपशिक्ष) दण्डेन शिक्षय (शत्रवे) ( भियसम् ) भयम् (आधेहि) ( रयिम् ) धनम् (विदाः) विजयेन लम्भय ।।

सोमसेविनां वीराणां शत्रुनाशो राज्यश्रीलाभश्च संजायते इति भावः ।। ऋग्वेदे ९ । १९ । ६ ऽपि ।। १ ।।

भाषार्थः—( पवमान ) सोम ! (अपतस्थुषः) विरोध में खड़े होने वालों को ( उपशिक्ष ) दण्ड से शिक्षा दे ( शत्रवे ) शत्रु के लिये ( भियसम् ) भय ( आधेहि ) रख ( रयिम् ) और राज्यलक्ष्मी का ( विदाः ) लाभ करा ।।

सोम सेवन करने वाले वीरों के शत्रुओं का नाश और राज्यलक्ष्मी की प्राप्ति होती है ।। ऋ० ९ । १९ । ६ में भी ।। १ ।।

अथ द्वितीया—

२ ३ २ ३ २ ३ २ ३ १ २ ३ १ २र
उपोषुजातमप्तुरं गोभिर्भङ्गं परिष्कृतम् ।
१ २ ३ १ २
इन्दुं देवा अयासिषुः ।।२।। (७६२) व्याख्याता (४८७)

अथ तृतीया—

१ २ ३ १२ ३ १ २ ३ २ ३ १
उपास्मै गायता नरः पवमानायेन्दवे । अभि देवाँ
२र
इयक्षते ॥३॥ [१८] (७६३) व्याख्याता (६५१)

अथ षष्ठे खण्डे प्रथमतृचसूक्तस्य—श्यावाश्व ऋषिः । सोमो देवता । गायत्री छन्दः ॥ तत्र प्रथमा—

१ २र ३ २ ३ १ २ ३ १ २
प्र सोमासो विपश्चितोऽपोनयन्त ऊर्मयः ।
१ २ ३ १ १
वनानि महिषा इव ॥ १ ॥ ( ७६४ ) व्याख्याता (४७८)

अथ द्वितीया—

३ १ २र ३ १ ३ ३ २ ३ २ ३ १ २
अभि द्रोणानि बभ्रवः शुक्रा ऋतस्य धारया ।
२ ३ १ २
वाजं गोमन्तमक्षरन् ॥ २ ॥ ( ७६५ )

पदपाठः—अभि अ० । द्रोणानि २। बभ्रवः, शुक्राः १। ऋतस्य ६ । धारया ३। वाजम् , गोमन्तम् २। अक्षरन् क्रि० ॥

अन्वितपदार्थः—( बभ्रवः ) पीतवर्णाः ( शुक्राः ) दीप्ताः सोमाः ( ऋतस्य ) यज्ञस्य ( धारया ) परिणतया वृष्ट्या (गोमन्तम् ) इन्द्रियवन्तम् ( वाजम् ) बलमन्नं वा (द्रोणानि) द्रोणोपलक्षितबहुपरिमाणयुक्तम् ( अभि अक्षरन् ) अभितो वर्षयन्ति॥ ऋग्वेदे ९ । ३३ । २ ऽपि ॥ २ ॥

भाषार्थः—(बभ्रवः) पीतवर्ण पके हुवे (शुक्राः) चमकीले सोम (ऋतस्य) यज्ञ की (धारया) परिणामरूप वर्षा से ( गोमन्तम् ) इन्द्रिययुक्त ( वाजम् )

बल वा अन्न को (द्रोणानि) धौनों अर्थात् मणों वा बहुत ( अभिक्षरन् ) सर्वतः वर्षाते हैं ।। ऋ० ९ । ३३ । २ में भी ।। २ ।।

अथ तृतीया–

२ १ २र ३ २ ३ १ २ ३ १ २
सुता इन्द्राय वायवे वरुणाय मरुद्भ्यः ।
१ २ ३ १ २
सोमा अर्षन्तु विष्णवे ॥३॥ [१९] ( ७६६ )

पदपाठः–सुताः १ । इन्द्राय, वायवे, वरुणाय, मरुद्भ्यः ४ । सोमाः १ । अर्षन्तु क्रि० । विष्णवे ४ ।।

अन्वितपदार्थः–( सुताः ) अभिषुताः ( सोमाः ) प्रसिद्धाश्चतुर्विंशतिप्रकारकाः ( इन्द्राय ) वृष्टिकर्त्रे देवाय ( वायवे ) मारुताय ( वरुणाय ) जलाय ( मरुद्भ्यः ) ऋत्विग्भ्यः[निघं० ३ । १८ ] (विष्णवे ) सूत्रात्मने वायवे च ( अर्षन्तु ) गच्छन्तु ऋग्वेदे तु ९ । ३३ । ३ अर्षन्तीति पाठः ॥ ३ ॥

भावार्थः–(सुताः) खींचे हुवे (सोमाः) प्रसिद्ध २४ प्रकार के सोम (इन्द्राय) इन्द्र (वायवे) वायु (वरुणाय) जल (मरुद्भ्यः) ऋत्विजों [निघं० ३ । १८] और (विष्णवे) व्यापक सूत्रात्मा वायु के लिये ( अर्षन्तु ) यज्ञद्वारा जावें ।। ऋ० ९ । ३३ । ३ में अर्षन्ति पाठ है ।। ३ ।।

अथ प्रगाथात्मकद्वितीयसूक्तस्य—भरद्वाजादयः सप्त ऋषयः ।
सोमो देवता । बृहती छन्दः ।। तत्र प्रथमा–

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १र २र ३ १र
प्र सोम देववीतये सिन्धुर्न पिप्ये अर्णसा । अंशोः पयसा मदिरो
२र ३ २ ३ १ २ ३ १ २
न जागृविरच्छा कोशं मधुश्चुतम् ॥१॥(७६७)व्याख्याता(५१४)

अथ द्वितीया–

१ २ ३ १र २र ३ १ २ ३ २ ३ १र २र १ २
आ हर्यतो अर्जुनो अत्के अव्यत प्रियः सूनुर्न मर्ज्यः । तमीं

३ २ ३ २ ३ १ २ ३ १र २र
हिन्वन्त्यपसो यथा रथं नदीष्वा गभस्त्योः ॥२॥ [२०] (७६८)

पदपाठः—आ० अ०। हर्यतः, अर्जुनः १। अत्के ७। अव्यत क्रि०। प्रियः, सूनुः १। न अ०। मर्ज्यः १। तम् २। ईम् अ०। हिन्वन्ति क्रि०। अपसः १। यथा अ०। रथम् २। नदीषु ७। आ अ०। गभस्त्योः ६॥

अन्वितपदार्थः—( हर्यतः ) स्पृहणीयः ( अर्जुनः ) श्वेतवर्णः (प्रियः) प्रीतिकृत् ( मर्ज्यः) मार्जनीयः ( सूनुः न ) पुत्र इव सोमः ( अत्के ) निक्ते प्रक्षालिते सति ( आ अव्यत ) आ वृणोति( तम् ईम् ) तमेनं सोमम् ( नदीषु ) नदमानासु वसतीवरीषु ( गभस्त्योः ) बाह्वोः अङ्गुलयः ( आहिन्वन्ति ) प्रेरयन्ति। तत्र दृष्टान्तः—( अपसः ) कर्मवन्तो वेगवन्तः शूराः (यथा) येन प्रकारेण ( रथम् ) रथं संग्रामेषु प्रेरयन्ति तद्वत् ॥

इत्थमेव पदार्थः सायणेनाऽपि सम्मानितः ॥ अत्के सोमे प्रक्षालिते इति विवरणकारः ॥ हर्यत इति हर्यतेःकान्तिकर्मणः निघं० २। ६ ॥ गभस्ती इति बाह्वोर्नाम निघं० २। ४ ॥ अप इति कर्मनाम निघं० २। १ आऽव्यत=आवृणोति इति सायणोऽपि ॥ ऋग्वेदे तु ९। १०७। १३ अर्जुने इति पाठः ॥ २॥

भाषार्थः—( हर्यतः ) इच्छा करने योग्य (अर्जुनः) श्वेत रङ्ग का (प्रियः) प्यारा ( मर्ज्यः ) शोधने योग्य ( सूनुः न ) पुत्र सा सोम ( अत्के ) पखालने पर ( आ अव्यत ) लिपट जाता है ( तम् ईम् ) उस इस सोम को (नदीषु) नाद करते हुए वसतीवरी नामक जलों में ( गभस्त्योः ) दोनों भुजाओं की अङ्गुलियें ( आहिन्वन्ति ) चलाती हैं। इस में दृष्टान्त—(यथा) जैसे (अपसः) शूरवीर लोग ( रथम् ) रथ को संग्रामों में चलाते हैं तद्वत् ॥

सायण, विवरणकार, निघं० २। ४, २। ६ के प्रमाण और ऋ० ९। १०७। १३ का पाठान्तर संस्कृत भाष्य में देखिये ॥ २॥

अथ तृतीयतृचसूक्तस्य–श्यावाश्व ऋषिः । सोमो देवता । गायत्री छन्दः ॥

तत्र प्रथमा–

१ २र ३ २ ३ १ २ ३ १ ३
प्र सोमासो मदच्युतः श्रवसे नो मघोनाम् ।
३ २ ३ १ २
सुता विदथे अक्रमुः ॥१॥ (७६९) व्याख्याता (४७७)

अथ द्वितीया–

१ २ ३ १ २र ३ १ २ ३ २
आदीं हंसो यथा गणं विश्वस्यावीवशन्मतिम् ।
२ ३ १ २र
अत्यो न गोभिरज्यते ॥ २ ॥ ( ७७० )

पदपाठः–आत्, ईम् अ० । हंसः १ । यथा अ० । गणम् २ । विश्वस्य ६ । अवीवशत् क्रि० । मतिम् २ । अत्यः १। न अ० । गोभिः ३ । अज्यते क्रि० ॥

अन्वितपदार्थः–( आत् ) अपि च ( ईम् ) अयं सोमः ( यथा हंसः ) येन प्रकारेण आदित्यः ( गणम् ) लोकसमूहम् वशं नयति तद्वत् (विश्वस्य) सर्वस्य जगतः ( मतिम्) बुद्धिम् ( अवीवशत् ) वशं नयति । (अत्यः) अश्वः (न)इव (गोभिः) रश्मिभिः प्रग्रहैः ( अज्यते ) वशं नीयते तद्वदयं सोमोऽपि अङ्गुलिभिः प्रग्रहभूतैः स्वायत्तीक्रियते ॥

हंसः आदित्यः इति विवरणकारः । भानुर्हंसः सहस्त्रांशुरित्यमरः १।३। ३१॥ अत्य इत्यश्वनाम निघं० १।१४॥ गाव इति रश्मिनाम निघं० १।५॥ ऋग्वेदे ९ । ३२। ३ ऽपि॥२॥

भाषार्थः–( आत् ) और ( ईम् ) यह सोम (यथा) जैसे ( हंसः ) सूर्य ( गणम् ) लोकसमूह को वश में करता है वैसे ( विश्वस्य ) सब की (मतिम्)

बुद्धि को ( अवीवशत् ) वश में करता है । ( अत्यः न ) अश्व के समान (गोभिः) लगामों के तुल्य अङ्गुलियों से (अज्यते) वश में किया जाता है।।

विवरणकार, अमर १ । ३ । ३१, निघं० १ । १४, १ । ५ के प्रमाण संस्कृत भाष्य में देखिये ।। ऋ० ९ । ३२ । ३ में भी ।। २ ।।

तत्र तृतीया–

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २

आदीं त्रितस्य योषणो हरिं हिन्वन्त्यद्रिभिः ।

२ २ १ २ ३ १ २

इन्दुमिन्द्राय पीतये ॥ ३ ॥ [ २१ ] ( ७७१ )

पदपाठः–आत्, ईम् अ० । त्रितस्य ६ । योषणः १ । हरिम् २ । हिन्वन्ति क्रि० । अद्रिभिः ३ । इन्दुम् २ । इन्द्राय४=६ । पीतये ४ ।।

अन्वितपदार्थः—( आत् ) अपि च ( ईम् ) इमं ( हरिम् ) हरितवर्णम् (इन्दुम्) सोमम् (त्रितस्य) विद्याशिक्षाब्रह्मचर्यान्वितस्यर्त्विजः ( योषणः ) मिश्रणकर्त्र्योऽङ्गुलयः (इन्द्राय) इन्द्रस्य विद्युतः (पीतये) पानाय शोषणाय ( अद्रिभिः ) ग्रावभिः ( हिन्वन्ति ) अभिषुण्वन्ति ॥

त्रित इति–त्रीन्विद्याशिक्षाब्रह्मचर्याख्यान्विषयांस्तनोति स त्रितः, त्र्युपपदात्तनोतेरौणादिको डः । त्रितस्तीर्णतमोमेधया निरु० ४ । ६ ॥ योषणोऽङ्गुलय इति सायणः ॥ ऋग्वेदे ९ । ३२ । २ ऽपि ॥ ३ ॥

भावार्थः–( आत् ) और ( ईम् ) इस ( हरिम् ) हरे ( इन्दुम् ) सोमको (त्रितस्य ) १ विद्या २ शिक्षा ३ ब्रह्मचर्य युक्त ऋत्विज् की (योषणः) मिलाने वाली अङ्गुलियें ( इन्द्राय ) वृष्टिकारक विद्युद्विशेष के ( पीतये ) पीने= शोषण के लिये ( अद्रिभिः ) पत्थरों से ( हिन्वन्ति ) अभिषुत करती हैं ।।

त्रित शब्द पर व्याकरण, निरुक्त ४ । ६ इत्यादि प्रमाण संस्कृत भाष्य में देखिये ।। ऋ० ९ । ३२ । २ में भी ।। ३ ।।

अथ चतुर्थतृचसूक्तस्य प्रथमायाः–श्यावाश्व ऋषिः । सोमो देवता । उष्णिक्छन्दः ॥

३ १ २ ३१र २र १ २ ३ १ २
अया पवस्व देवयूरेभन्पर्यैषि विश्वतः ।
२ ३ १ २
मधोर्धारा असृक्षत ॥ १ ॥ ( ७७२ )

पदपाठः–अया ३ । पवस्व क्रि० । देवयुः १ । रेभत् १ । पर्यैषि क्रि० । विश्वतः अ० । मधोः ६ । धाराः २ । असृक्षत क्रि० ॥

अन्वितपदार्थः–( देवयुः ) वाय्वादिदेवान्कामयमानः सोमः ( अया ) अनया हूयमानया धारया ( पवस्व ) पवते क्षरति । ततः ( रेभन् ) चटचटाशब्दं कुर्वन् ( विश्वतः ) सर्वतः ( पर्यैषि ) परिगच्छति । ततः (मधोः) रसस्य (धाराः) (असृक्षत) सृजति ॥

एतदादितिसृणामृचां पदकारनये, विवरणकारमते, मूले, गानग्रन्थे चैकमेव सूक्तं, परं सायणाचार्येणैकर्चानि त्रीणि सूक्तानि लिखितानि दृश्यन्ते । ऋग्वेदे तु ९ । १०६ । १४ अया पवस्व देवयुर्मधोर्धाराअसृक्षत । रेभन्पवित्रं पर्यैषि विश्वतः इति पाठः ॥१॥

भाषार्थः–( देवयुः ) देव=वायु आदि को चाहने वाला सोम ( अया ) इस हवन की जाती हुई धारा से ( पवस्व ) टपकता है । फिर ( रेभन् ) शब्द करता हुआ (विश्वतः) सब ओर को ( पर्यैषि ) फैलता है । अनन्तर ( मधोः ) रस की (धाराः) धारों को ( असृक्षत ) छोड़ता है ॥

यहां से लेकर अध्यायान्त ३ ऋचाओं का–पदकार, विवरणकार, मूल और गानग्रन्थ के मतों से १ ही सूक्त देखा जाता है, परन्तु सायणाचार्य ने तीनों ऋचाओं के पृथक् २ एक २ ऋचा का एक २ सूक्त करके ३ सूक्त लिखे हैं। ऋ० ९ । १०६ । १४ का पाठान्तर संस्कृत भाष्य में देखिये ॥१॥

अथ द्वितीयायाः–प्रजापतिर्ऋषिः । छन्दोदेवते उक्ते ॥

१२ ३ १उ ३२३ १२ ३ १ २
पवते हर्यतो हरिरति ह्वरांᳬसि रᳬंह्या ।
३क २र ३ १ २ ३२३१२
अभ्यर्ष स्तोतृभ्यो वीरवद्यशः ॥२॥(७७३) व्याख्याता(५७६)

अथ तृतीयायाः—अम्बरीष ऋषिः । सोमो देवता । अनुष्टुप्छन्दः ॥

१ २ ३ १र २र ३ २ ३ १२३ १र २र
प्र सुन्वायान्धसो मर्तो नवष्ट तद्वचः ।
३ १ २ ३१२ ३२ ३१र २र
अप श्वानमराधसᳬं हतामखं न भृगवः ॥३॥[२२](७७४)

इति द्वितीयोर्धप्रपाठकः प्रथमश्च प्रपाठकः समाप्तः ॥१॥

व्याख्याता ( ५५३ )

त्रिवृत्स्तौमिकं प्रथममहः समाप्तमिति विवरणकारः ॥

इति

श्रीमत्कण्ववंशावतंस पण्डित हज़ारीलालस्वामिसूनुना
हस्तिनापुरपार्श्ववर्त्ति—परीक्षितगढ़ निवासिना
तुलसीरामस्वामिना
कृते सामवेदभाष्ये उत्तरार्चिके द्वितीयोऽध्यायः ॥

भाषार्थः—इस की व्याख्या ( ५५३ ) में की गई ।।

द्वितीयार्धप्रपाठक और प्रथम प्रपाठक समाप्त हुवा ॥ १ ॥

विवरणकार कहते हैं कि त्रिवृत् स्तौमिक नामक प्रथम दिन समाप्त हुवा।

यह

कण्ववंशावतंस श्रीयुत पं० स्वामी हज़ारीलाल के पुत्र परीक्षितगढ़
( ज़िला—मेरठ ) निवासी तुलसीराम स्वामिकृत
सामवेदभाष्य उत्तरार्चिक में
द्वितीयाध्याय समाप्त हुवा ॥२॥

# अथ तृतीयाऽध्यायः ॥

तत्र–

पञ्चतृचात्मके प्रथमखण्डे प्रथमतृचसूक्तस्य–जमदग्निर्ऋषिः ।
पवमानः सोमो देवता । गायत्री छन्दः ॥

तत्र प्रथमा–

१ २ ३ १ २ १र २र ३ १ २ ३ १ २
पवस्व वाचो अग्रियः सोम चित्राभिरूतिभिः ।
३ १ २र १ २
अभि विश्वानि काव्या ॥ १ ॥ ( ७७५ )

पदपाठः–पवस्व क्रि० । वाचः २ । अग्रियः १ । सोम सं० । चित्राभिः, ऊतिभिः ३ । अभि अ० । विश्वानि २ । काव्या २ ॥

अन्वितपदार्थः–( सोम ) हे शान्तस्वरूप ! परमात्मन् ! ( अग्रियः ) सर्वेभ्यो मुख्यस्त्वं ( विश्वानि ) सर्वाणि (काव्या) काव्यरूपाणि स्तोत्राणि ( वाचः ) प्रार्थनाश्च (चित्राभिः) अनेकविधाभिः (ऊतिभिः) रक्षाभिः (अभिपवस्व) सर्वतः पवित्रीकुरु ॥

इदानीं द्वितीयमहरारभ्यते, द्वितीयश्च प्रपाठकः । पञ्चदशस्तौमिकं द्वितीयमहः इति विव० ॥ ऋग्वेदे९।६२।२५ऽपि ॥१॥

भावार्थः–( सोम ) हे शान्तस्वरूप ! परमात्मन् ! ( अग्रियः ) सब में मुख्य आप ( विश्वानि ) सब ( काव्या ) स्तोत्रों और ( वाचः ) प्रार्थनाओं को ( चित्राभिः ) अनेक प्रकार की ( ऊतिभिः ) रक्षाओं से ( अभि ) सर्वतः ( पवस्व ) पवित्र कीजिये ॥

विवरणकार लिखते हैं कि–अब द्वितीय दिन का आरम्भ होता है और दूसरे ही प्रपाठक का । पञ्चदश स्तोम का दूसरा दिन होता है ॥ ऋ० ९ । ६२ । २५ में भी ॥ १ ॥

अथ द्वितीया--

१ २ ३ १ २ ३ २ २ १र २र ३ १ २
त्वꣳसमुद्रिया अपोऽग्रियो वाच ईरयन्।
१ २
पवस्व विश्वचर्षणे ॥ २ ॥ ( ७७६ )

पदपाठः—त्वम् १ । समुद्रियाः,अपः २ । अग्रियः १ । वाचः २।ईरयन् १। पवस्व क्रि० । विश्वचर्षणे सं० ॥

अन्वितपदार्थः—( विश्वचर्षणे ) हे सर्वद्रष्टः ! ( अग्रियः ) मुख्यः ( त्वम् ) ( समुद्रियाः ) आन्तरिक्ष्याः ( अपः ) ( ईरयन् ) प्रेरयन्नास्से ( वाचः ) वेदवाणीश्च प्रेरयन्नसि स त्वं ( पवस्व ) अस्मान्पवित्रीकुरु ॥ ऋग्वेदे तु ९।६२ । २६ विश्वचर्षणे=विश्वमेजय इत्यन्तरम् ॥ २ ॥

भाषार्थः-( विश्वचर्षणे ) हे सर्वसाक्षिन् ! ( अग्रियः ) मुख्य ( त्वम् ) आप ( समुद्रियाः ) आकाशस्थ मेघ के ( अपः ) जलों और ( वाचः ) वेदवाणियों को ( ईरयन् ) प्रेरित करते हैं । वह आप ( पवस्व ) हमें पवित्र कीजिये ॥ ऋ० ९ । ६२ । २६ का पाठान्तर संस्कृत भाष्य में देखिये ॥ २ ॥

२ ३ १र २र ३ १ २
तुभ्येमा भुवना कवे महिम्ने सोम तस्थिरे ।
१ २ ३ १ २
तुभ्यं धावन्ति धेनवः ॥३॥ [१] ( ७७७ )

पदपाठः—तुभ्यम् ४=६ । इमा, भुवना १ । कवे सं० । महिम्ने ४ । सोम सं० । तस्थिरे क्रि० । तुभ्यम् ४ । धावन्ति क्रि०।धेनवः १ ॥

अन्वितपदार्थः—( कवे ) ज्ञानिन् ! (तुभ्यम् ) तव( महिम्ने ) महत्त्वाय (इमा) इमानि ( भुवना) भुवनानि ( तस्थिरे)

उपतिष्ठन्ति ( सोम ) हे शान्तात्मन् ! ( तुभ्यम् ) त्वदर्थम् ( धेनवः ) वेदवाचः ( धावन्ति ) गच्छन्ति ॥ वाचमेव तद्देवा धेनुमकुर्वत इति शतपथे ९ । १ । २।१७॥
ऋग्वेदे तु ९ । ६२ । २७ अर्षन्ति धेनव इत्यन्तरम् ॥ ३ ॥

भावार्थः-( कवे ) हे ज्ञानिन् ! (तुभ्यम् ) आप की ( महिम्ने ) महिमा के लिये ( इमा ) ये (भुवना) भुवन ( तस्थिरे ) उपस्थित हैं । ( तुभ्यम् ) आप के लिये ( धेनवः ) वेदवाणियें ( धावन्ति ) दौड़ती हैं ॥

शतपथ ९ । १ । २ । १७ का प्रमाण और ऋ० ९ । ६२ । २७ का पाठान्तर संस्कृत भाष्य में देखिये ॥ ३ ॥

अथ द्वितीयतृचसूक्तस्य-अमहीयुर्ऋषिः । छन्दोदेवते उक्ते ॥

तत्र प्रथमा-

१ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
पवस्वेन्दो वृषा सुतः कृधी नो यशसोजने ।
२ ३ २ ३ १ २
विश्वा अप द्विषो जहि ॥१॥ (७७८) व्याख्याता (४७९)

अथ द्वितीया-

१ २ २ २ ३ १ २ ३ १ २ ३ २
यस्य ते सख्ये वयं सासह्याम पृतन्यतः ।
१ २ ३ १ २ ३ २
तवेन्दो द्युम्न उत्तमे ॥ २ ॥ ( ७७९ )

पदपाठः-यस्य, ते ६ । सख्ये ७। वयम् १। सासह्याम क्रि०।पृतन्यतः २। तव ६ । इन्दो सं० । द्युम्ने, उत्तमे ७ ॥

अन्वितपदार्थः-( इन्दो ) हे परमेश्वर ! ( यस्य ) पूर्वोक्तस्य ( ते ) तव ( सख्ये ) सौहार्दे वर्त्तमानाः ( वयम् ) त्वत्सेवकाः (तव) त्वदीये (उत्तमे) प्रशस्ते (द्युम्ने) यशसि (पृतन्यतः) शत्रून् (सासह्याम) अभिभवेम तथाभूतस्त्वं कृपां विधेहि ॥

द्युम्नं द्योततेर्यशो वाऽन्नं वा निरु० ५ । ५ ॥ पृतना इति संग्रामनाम निघं० २।१७॥ऋग्वेदे तु ९।६१।२९ यस्य= अस्येति पाठः,सायणेन चात्राऽपि मूल–पद–गानग्रन्थविरुद्धः स एव व्याख्यातः॥ ऋग्वेदपाठे द्वितीयतृतीयपादौ च व्यत्यस्तौ दृश्येते॥२॥

भाषार्थः–( इन्दो ) हे परमेश्वर ! ( यस्य ) जिस (ते) आप के (सख्ये) मित्रभाव में रहने वाले (वयम्) हम(तव) आप के (उत्तमे)श्रेष्ठ (द्युम्ने) यश में (पृतन्यतः)शत्रुओं को(सासह्याम)तिरस्कृत करें वह आप ऐसी कृपा कीजिये ॥

निरुक्त ५ ।५।। निघण्टु २। १७ के प्रमाण और ऋ० ९ । ६१ । २९ का पाठभेद और सायणाचार्य के व्याख्यान का मूल, पद, गान से विरुद्ध होना संस्कृत भाष्य में देखिये ।। २ ।।

अथ तृतीया–

१ २ ३ १र २र ३ २ ३ २ ३ १ २

या ते भीमान्यायुधा तिग्मानि सन्ति धूर्वणे ।

३ २ ३ २

रक्षा समस्य नो निदः ॥ ३ ॥ [ २ ] ( ७८० )

पदपाठः–या १ । ते ६ । भीमानि, आयुधा, तिग्मानि १ । सन्ति क्रि०। धूर्वणे ४ । रक्ष क्रि० । समस्य ६ । नः २ । निदः क्रि० ॥

अन्वितपदार्थः–हे परमेश्वर ! (या) यानि ( ते ) त्वदीयानि अलौकिकानि ( तिग्मानि ) तीक्ष्णानि ( भीमानि ) भयानकानि ( आयुधा ) आयुधानि ( धूर्वणे ) दुष्टनाशार्थं (सन्ति) भवन्ति तैः ( समस्य ) सर्वदुष्टगणस्य ( निदः ) नितरां नाशं कुरु ( नः ) अस्मान्भवद्भक्तांश्च ( रक्ष ) पालय ॥

ऋग्वेदे ९ । ६१ । ३० ऽपि ॥ ३ ॥

भाषार्थः–हे परमेश्वर ! ( या ) जो ( ते ) तेरे ( तिग्मानि ) तीक्ष्ण ( भीमानि ) भयानक ( आयुधा ) विद्युदादि शस्त्रास्त्र ( धूर्वणे ) दुष्ट नाशार्थ ( सन्ति ) हैं, उन से ( समस्य ) सब दुष्ट गण का ( निदः ) नितरां

विदारण कीजिये और ( नः ) आप के भक्त हम लोगों की ( रक्ष ) रक्षा कीजिये ॥ ऋ० ९ । ६१ । ३० में भी ॥ ३ ॥

अथ तृतीयतृचसूक्तस्य-कश्यप ऋषिः । छन्दोदेवते उक्ते ॥

तत्र प्रथमा-

१ २ ३ १ २ ३ १ २ ३ १ २
वृषा सोम द्युमाँ असि वृषा देव वृषा व्रतः ।
२ ३ २ ३
वृषा धर्माणि दध्रिषे ॥ १ ॥ ( ७८१ ) व्याख्याता (५०४)

अथ द्वितीया-

१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ २
वृष्णस्ते वृष्ण्यं शवो वृषा वनं वृषा सुतः ।
१र २र ३ १र २र
स त्वं वृषन्वृषेदसि ॥ २ ॥ ( ७८२ )

पदपाठः-वृष्णः, ते ६ । वृष्ण्यम्, शवः, वृषा, वनम्, वृषा, सुतः, सः, त्वम् १ । वृषन् सं० । वृषा १ । इत् अ० । असि क्रि० ॥

अन्वितपदार्थः—( वृष्णः ) वीर्यकरस्य ( ते ) तव (शवः) बलं ( वृष्ण्यम् ) वीर्यकरमस्ति (वनं) सेवनं तव (वृषा) वीर्यकरमस्ति [ लिङ्गव्यत्ययः ] ( सुतः ) अभिषुतस्तव रसोऽपि ( वृषा ) वीर्यकरोऽस्ति । ( वृषन् ) वीर्यकर ! (सत्वं ) (वृषा) वर्षकः ( इत् ) एव ( असि ) भवसि ॥

यद्वा-( वृष्णः ) बलिनां बलिष्ठस्य (ते) तव परमेश्वरस्य ( शवः ) बलम् ( वृष्ण्यम् ) धर्मार्थकाममोक्षवर्षकम् ( वनं ) त्वत्सेवनं ( वृषा ) धर्मादिवर्षकं ( सुतः ) हृत्कमले साक्षात्कारस्तव ( वृषा ), ( सत्वं वृषन् वृषा इत् असि ) पूर्ववत् ॥

ऋग्वेदे तु ९ । ६४ । २ सुतः=मदः । सत्वं=सत्यमिति पाठान्तरम् ॥ २ ॥

भाषार्थः– ( वृष्णः ) वीर्यकारक ( ते ) तेरा ( शवः ) बल ( वृष्ण्यम् ) वीर्यकारक है। ( वनम् ) तेरा सेवन ( वृषा ) वीर्यकारक है। ( सुतः ) तेरा अभिषुत किया हुवा रस भी (वृषा) वीर्यकारक है। ( सः ) वह (त्वम्) तू ( वृषा ) वीर्यकारक ( इत् ) ही ( असि ) है॥

यद्वा–(वृष्णः) अतिबलिष्ठ ( ते ) आप का ( शवः ) बल ( वृष्ण्यम् ) धर्मार्थ काम मोक्ष का वर्षाने वाला है (वनम्) आपका सेवन (वृषा) धर्मादि वर्षक है। ( सुतः ) आप का साक्षात्कार भी ( वृषा ) धर्मादिपूरक है ( सः त्वम् ) वह आप (वृषा इत्) धर्मादिवृष्टिकारक ही (असि) हैं॥

ऋ० ९। ६४। २ का पाठान्तर संस्कृत भाष्य में देखिये॥ २॥

अथ तृतीया–

२ ३ १ २ ३ २ ३ १र २र ३ १र २र

अश्वो न चक्रदो वृषा सं गा इन्दो समर्वतः।

१ २ ३ १र २र

वि नो राये दुरो वृधि॥ ३॥ [ ३ ] ( ७८३ )

पदपाठः–अश्वः १। न अ०। चक्रदः क्रि०। वृषा १। सम् अ०। गाः २। इन्दो सं०। सम्। अर्वतः २॥ वि अ०। नः ६। राये ४। दुरः २। वृधि क्रि०॥

अन्वितपदार्थः–( इन्दो ) सोम ! त्वम् ( अश्वः ) विद्युत् (न) इव (चक्रदः) शब्दं करोषि। अपि च–(गाः) गवादिपशून् (सम्) संगमयसि ( अर्वतः ) अश्वांश्च (सम्) संगमयसि (नः) अस्माकं ( दुरः ) द्वाराणि (राये) ऐश्वर्याय ( विवृधि ) विवृतानिकुरु॥

सोमयाजिनः खलु गवाश्वादिसर्वधनधान्यादिसमृद्धियुक्ता भवन्ति इति भावः॥ ऋग्वेदे ९। ६४। ३ ऽपि॥ ३॥

भाषार्थः–( इन्दो ) सोम ! तू ( अश्वः ) विद्युत् के (न) समान (चक्रदः) शब्द करता और ( गाः ) गौआदि पशुओं को ( सम् ) मिलाता तथा ( अर्वतः ) अश्वादिकों को ( सम् ) संगत कराता है ( नः ) हमारे ( दुरः ) द्वारों को ( राये ) ऐश्वर्य के लिये ( विवृधि ) खोल॥

अर्थात् सोमयाजियों को गौ अश्व धन धान्यादि ऐश्वर्य प्राप्त होता है। ऋ० ९। ६४। ३ में भी॥ ३॥

अथ चतुर्थतृचसूक्तस्य—भृगुर्वारुणिर्जमदग्निर्वा ऋषिः । छन्दोदेवते उक्ते ॥

तत्र प्रथमा—

२३ १ २ ३ १२ ३१ २
वृषा ह्यसि भानुना द्युमन्तं त्वा हवामहे ।
१२ ३१२
पवमान स्वर्दृशम् ॥१॥ (७८४) व्याख्याता (४८०)

अथ द्वितीया—

२३१ २ २ १२ ३ १ २ ३ १ २
यदद्भिः परिषिच्यसे मर्मृज्यमान आयुभिः ।
१ २ ३२ ३ १ २
द्रोणे सधस्थमश्नुषे ॥ २ ॥ ( ७८५ )

पदपाठः—यद् अ० । अद्भिः ३ । परिषिच्यसे क्रि० । मर्मृज्यमानः १ । आयुभिः ३ । द्रोणे ७ । सधस्थम् २ । अश्नुषे क्रि० ॥

अन्वितपदार्थः—( यद् ) यदा ( आयुभिः ) मनुष्यैः [निघं० २ । ३] (मर्मृज्यमानः) अतिशयेन शोध्यमानः सोमः (अद्भिः) वसतीवर्याख्याभिः ( परिषिच्यसे ) सर्वतः सिच्यते तदा (द्रोणे) द्रोणकलशे ( सधस्थम् ) यज्ञम् (अश्नुषे) अश्नुते प्राप्नोति ॥

ऋग्वेदे तु ९ । ६५ । ६ मृज्यमानो गभस्त्योः । द्रुणा इति पाठभेदः ॥ २ ॥

भाषार्थः—(यद्) जब (आयुभिः) मनुष्यों से [ निघं० २ । ३ ] (मर्मृज्यमानः) अतिशयता से शोधा जाता हुवा सोम ( अद्भिः ) वसतीवरी संज्ञक जलों से (परिषिच्यसे) सर्वतः छिड़का जाता है, तब ( द्रोणे ) द्रोणकलश में ( सधस्थम् ) यज्ञ को ( अश्नुषे ) प्राप्त होता है ॥

ऋ० ९ । ६५ । ६ का पाठभेद संस्कृत भाष्य में देखिये ॥२॥

अथ तृतीया—

१ २ ३ २ ३ १ २
आपवस्व सुवीर्यं मन्दमानः स्वायुध ।

३ १ २ ३ १ २
इहोष्विन्दवागहि ॥३॥ [४] (७८६)

पदपाठः—आपवस्व क्रि० । सुवीर्यम् २ । मन्दमानः १ । स्वायुध सं० १ । इह, उ, सु, अ० । इन्दो सं० । आगहि क्रि० ॥

अन्वितपदार्थः—(स्वायुध) स्फ्य—कपालादीनि यज्ञपात्राणि आयुधानि तानि सन्तिशोभनानि यस्य तादृश ! (इन्दो) सोम! (इह) अस्मिन् यज्ञे [ (उ सु) पादपूरणौ ] (आगहि) प्राप्नुहि (मन्दमानः) मादयन् हर्षयन् (सुवीर्यम्) शोभनं वीर्यम् (आपवस्व) सर्वतः प्रापय ॥

मदस्य=हर्षस्य प्रापकेण यज्ञं प्राप्तेन स्वायुधेन सोमेन सुवीर्यं प्राप्यत इति भावः ॥ ऋ० ९ । ६५ । ५ ऽपि ॥ ३ ॥

भावार्थः—(स्वायुध) सुन्दर यज्ञपात्ररूप आयुधोंवाले (इन्दो) सोम! (इह) इस यज्ञ में [ (सु उ) पाद पूरणार्थ हैं ] (आगहि) प्राप्त हो और (मन्दमानः) हर्ष प्राप्त कराता हुवा (सुवीर्यम्) सुन्दर वीर्य को (आपवस्व) सर्वतः प्राप्त कराव ॥ ऋ० ९ । ६५ । ५ में भी ॥ ३ ॥

अथ पञ्चमतृचसूक्तस्य—अगह्वीयुर्ऋषिः । छन्दोदेवते उक्ते ॥

तत्र प्रथमा—

१ २ ३ २ ३ १ २ ३ २
पवमानस्य ते वयं पवित्रमभ्युन्दतः ।
३ १ २र
सखित्वमावृणीमहे ॥१॥ (७८७)

पदपाठः—पवमानस्य ६ । ते ६ । वयम् १ । पवित्रम् २ । अभ्युन्दतः ६ । सखित्वम् २ । आवृणीमहे क्रि० ॥

अन्वितपदार्थः—परमेश्वर! (पवित्रम्) प्राणम् (अभ्युन्दतः) शुद्धं कुर्वतः (पवमानस्य) पवित्रतासंपादकस्य (ते) तव (सखित्वम्) मित्रभावम् (वयम्) भवद्भक्ताः (आवृणीमहे) ॥

अयं वै पवित्रं योऽयं पवते सोऽयमेकइवैव पवते सोऽयं पुरुषेऽन्तः प्रविष्टः । श० १ । १ । ३ । २ अनेन प्राणस्य पवित्र-संज्ञा सूचिता ॥ ऋग्वेदे ९ । ६१ । ४ ऽपि ॥ १ ॥

भाषार्थः—हे परमेश्वर ! ( पवित्रम् ) प्राण को ( अभ्युन्दतः ) शुद्ध करते हुवे (पवमानस्य) शुद्धिसंपादक ( ते ) आप के ( सखित्वम् ) मित्रभाव का ( वयम् ) हम ( आवृणीमहे) वरण करते हैं ।।

शतपथ १ । १ । ३ । २ का प्रमाण संस्कृतभाष्य में देखिये ।। ऋ० ९ । ६१ । ४ में भी ।। १ ।।

अथ द्वितीया—

१ २ ३ १२ ३१ २ ३ १२ ३ १ २
ये ते पवित्रमूर्मयोभिक्षरन्ति धारया ।
१ २
तेभिर्नः सोम मृडय ॥ २ ॥ ( ७८८ )

पदपाठः—ये १ । ते ६ । पवित्रम् २ । ऊर्मयः १ । अभिक्षरन्ति क्रि० । धारया ३ । तेभिः ३ । नः २ । सोम सं० । मृडय क्रि० ।।

अन्वितपदार्थः—(सोम) अमृतस्वरूप ! परमात्मन् ! ( ये ) (ते) तव (ऊर्मयः) अमृततरङ्गाः (धारया) प्रवाहेण ( पवित्रम् ) प्राणम्( अभिक्षरन्ति) अभिषिञ्चन्ति (तेभिः) तैः (नः) अस्मान् (मृडय) सुखय ॥ ऋग्वेदे ९ । ६१ । ५ ऽपि ॥२॥

भाषार्थः—( सोम ) हे अमृतस्वरूप ! परमात्मन् ! ( ये ) जो ( ते ) आप की ( ऊर्मयः ) अमृत की लहरें ( धारया ) प्रवाह से ( पवित्रम् ) प्राण का ( अभिक्षरन्ति ) अभिषेक करती हैं (तेभिः) उन से ( नः ) हम को (मृडय) आनन्दित कीजिये ।। ऋ० ९ । ६१ । ५ में भी ।। २ ।।

अथ तृतीया—

१ २ ३ १र २र ३ २ ३ १२३ १ २
स नः पुनान आभर रयिं वीरवतीमिषम् ।

१ २ ३ १ २
ईशानः सोम विश्वतः ॥३॥ [५] ( ७८९ )

पदपाठः—सः १ । नः ४ । पुनानः १। आभर क्रि० । रयिम्, वीरवतीम्, इषम् २ । ईशानः १ । सोम सं० । विश्वतः अ० ॥

अन्वितपदार्थः—( सोम ) अमृतस्वरूप ! परमात्मन् ! ( विश्वतः ) सर्वस्य ( ईशानः ) स्वामी ( पुनानः ) पवित्रयन् ( सः ) पूर्वोक्तस्त्वम् ( नः ) अस्मभ्यं ( वीरवतीम् )पुत्राद्युपेतम् ( रयिं )धनम् ( इषम् ) अन्नं च (आभर) प्रापय॥ ऋग्वेदे ९ । ६१ । ६ ऽपि ॥ ३ ॥

भावार्थः—( सोम ) हे अमृतस्वरूप ! परमात्मन् ! ( विश्वतः ) सब के ( ईशानः ) स्वामी ( पुनानः ) पवित्र करते हुवे ( सः ) वह आप ( नः ) हमारे लिये ( वीरवतीम् ) पुत्रादिसहित ( रयिम् ) धन और ( इषम् ) अन्न ( आभर ) प्राप्त कीजिये ।। ऋ० ९ । ६१ । ६ में भी ।। ३ ॥

उक्तं बहिष्पवमानम्

( इति विधरणकारः )

अथ द्वितीयखण्डे प्रथमतृचसूक्तस्य—मेधातिथिः काण्व ऋषिः । अग्निर्देवता । गायत्री छन्दः ॥

तत्र प्रथमा—

३ २ ३ १ ३ १ २ ३ १ २
अग्निं दूतं वृणीमहे होतारं विश्ववेदसम् ।
३ २ ३ १ २ ३ १ २
अस्य यज्ञस्य सुक्रतुम् ॥ १ ॥ (७९०) व्याख्याता (३)

अथ द्वितीया—

३ १ २ ३ १ २ ३ १ २ ३ १ २
अग्निमग्निं हवीमभिः सदा हवन्त विश्पतिम् ।
३ १ २ ३ २
हव्यवाहं पुरुप्रियम् ॥ २ ॥ ( ७९१ )

पदपाठः—अग्निम्, अग्निम् २। हवीमभिः ३। सदा अ०। हवन्त क्रि०। विश्पतिम्, हव्यवाहम्, पुरुप्रियम् २॥

अन्वितपदार्थः—( विश्पतिं ) प्रजानां पालकं ( हव्यवाहं ) हव्यस्य वाय्वादिभ्यो वाहकं हव्यस्य भोक्तव्यस्य कर्मणो वा फल-प्रदातारं (पुरुप्रियं) बहूनां प्रीतिकरम् (अग्निम्, अग्निम्) भौतिकं परमेश्वरं वा ( हवीमभिः ) होमसाधनैराह्वानसाधनैर्वा स्तोत्रै-र्मन्त्रैः ( सदा ) सर्वदा ( हवन्त ) जुह्वति आह्वयन्ते वा॥

अग्निमग्निम्—नित्यवीप्सयोः ८।१।४ इति द्विर्भावः, तस्य परमाम्रेडितम् ८।१।२ इति परस्याम्रेडितसंज्ञायाम्, अनुदात्तं च ८।१।३ इत्यनुदात्तत्वम्॥ हवीमभिः—ह्वेञ् स्पर्धायां शब्दे च ( भ्वा० उभ० ) अन्येभ्योऽपि दृश्यन्ते ३।२।७५ इति कर्त्तरि मनिन्प्रत्ययः, तस्य छान्दसईडागमः, बहुलं छन्दसि ६।१। ३४ इति संप्रसारणम्, गुणावादेशौ, ञ्नित्यादिर्नित्यम् ६।१। १९७ इत्याद्युदात्तत्वम्॥ सदा—सर्वैकान्यकिंयत्तदः काले दा ५।३।१५ इति सर्वशब्दाद्दाप्रत्ययः, सर्वस्य सोऽन्यतरस्याम् ५।३।६ इति सः, व्यत्ययो बहुलम् ३।१।८५ इत्याद्यु-दात्तत्वम्॥ विश्पतिम्—पत्यावैश्वर्ये ६।२।१८ इति पूर्वपद-प्रकृतिस्वरे प्राप्ते, परादिश्छन्दसि बहुलम् ६।२।१९९ इत्युत्तर-पदाद्युदात्तत्वम्॥ हव्यवाहम्—वहश्च ३।२।६४ इति ण्विः॥ ऋग्वेदे १।१२।२ ऽपि॥ २॥

भाषार्थः-( विश्पतिम् ) प्रजापालक ( हव्यवाहम् ) द्रव्य वा भोग्य फल

पहुंचाने वाले ( पुरुप्रियम् ) बहुतों के प्यारे ( अग्निम् अग्निम् ) अग्नि वा परमेश्वर को (हवीमभिः) होमसाधनों वा पुकारने के मन्त्रों से ( सदा) सर्वदा ( हवन्त ) होम करते वा पुकारते हैं ॥

अष्टाध्यायी ८ । १ । ४, ८ । १ । २, ८ । १ । ३, ३ । २ । ७५, ६ । ४ । ३४, ६ । १ । १९७, ५ । ३ । १५, ५ । ३ । ६, ३ । १ । ८५, ६ । २ । १८, ६ । २ । १९९ और ३ । २ । ६४ के प्रमाण संस्कृत भाष्य में देखिये ।। ऋ०१ । १२ । २ में भी ।। २॥

अथ तृतीया–

१ २ ३ २ ३ १ २ ३ २ ३ १ २
अग्ने देवाँ इहावह जज्ञानो वृक्तबर्हिषे ।
२ ३ १ २ ३ १ २
असि होता न ईड्यः ॥३॥ [६] (७९२)

पदपाठः–अग्ने सं० । देवान् २ । इह अ० । आवह क्रि० । जज्ञानः १ । वृक्तबर्हिषे ४ । असि क्रि० । होता १ । नः ६ । ईड्यः १ ॥

अन्वितपदार्थः– ( अग्ने ) वा परमात्मन् ! ( देवान् ) वाय्वादीन् अथवा शीलसन्तोषादीन् ( इह ) यज्ञे वा ध्यानयज्ञे ( आवह ) प्रापय । ( वृक्तबर्हिषे ) निर्मितासनाय क्रियायज्ञयजमानाय, योगसाधकाय वा ( जज्ञानः) अरण्योरुत्पन्नः, हृत्कमले साक्षाद्भूतो वा ( नः ) अस्माकं ( होता ) होमसाधकोऽथवा कर्मफलप्रदः ( ईड्यः ) प्रशंसनीयः ( असि ) भवसि ॥

आग्नेयमाज्यमुक्तमिति विवरणकारः ऋग्वेदे १।१२।३ऽपि॥३॥

भाषार्थः–( अग्ने ) हे अग्नि ! वा परमेश्वर ! ( देवान् ) वायु आदि देवों वा शीलसन्तोषादि उत्तम दिव्यगुणों को ( इह ) इस यज्ञ में वा ध्यानयोगयज्ञ में (आवह) प्राप्त करा । ( वृक्तबर्हिषे ) यज्ञार्थ आसन रचने वाले यजमान वा योगी के लिये ( जज्ञानः ) अरणियों में प्रकट वा हृदयकमल में

साक्षात् हुवा ( नः ) हमारा ( होता ) होम का सिद्ध करनेवाला वा कर्म-फलदाता ( ईड्यः ) प्रशंसनीय ( अग्नि ) है ॥

विवरणकार कहते हैं कि "आग्नेय आज्य कहा गया" ॥ ऋ० १ । १२ । ३ में भी ॥ ३ ॥

अथ द्वितीयतृचसूक्तस्य—मेधातिथिः काण्व ऋषिः । मित्रावरुणौ देवते । गायत्री छन्दः ॥

तत्र प्रथमा—

३ २ ३ १ २ ३ १ २ ३ १ २
मित्रं वयं हवामहे वरुणं सोमपीतये ।
२ ३ २ ३ १ २
या जाता पूतदक्षसा ॥ १ ॥ ( ७९३ )

पदपाठः—मित्रम् २।वयम् १। हवामहे क्रि०।वरुणम् २। सोमपीतये ४। या, जाता, पूतदक्षसा १ ॥

अन्वितपदार्थः—( वयम् ) याज्ञिकाः ( सोमपीतये ) सोम-पानाय ( मित्रं ) प्राणं ( वरुणं ) अपानं च ( हवामहे ) आह्वयामः (या) यौ मित्रावरुणौ ( पूतदक्षसा ) पवित्रबलौ (जाता) जातौ यज्ञेनेति शेषः ॥

यथा मनुष्यदेहे तद्रक्षार्थौ प्राणापानौ भवतस्तथाऽत्र ब्रह्माण्डेऽपि प्राणाऽपानौ विद्येते । सोमादिहोमेन तयोः सदवस्थायां प्राबल्ये च शोभनो निर्वाहः प्राणिनां भवति॥प्राणो वै मित्रोऽपानो वरुणः । शतपथे १२ । ४ । ४ । १२॥ वरुणो मित्रश्चेति पद-नाम्नी निघं० ५।४ । निरुक्ते दशमाध्याये मध्यस्थानवायुविशेषेषु देवगणेषु—"वरुणो वृणोतीति सतः १।३ मित्रःप्रमीतेरित्यादि १०।२१॥ऋग्वेदे तु १।२३।४ जज्ञाना पूतदक्षसेति पाठः ॥ १ ॥

भावार्थः–(वयम्) हम याज्ञिक लोग (सोमपीतये) सोमपान के लिये (मित्रम्) प्राण और (वरुणम्) अपान को (हवामहे) पुकारते हैं। (या) जो दोनों (पूतदक्षसा) पवित्र बलयुक्त (जाता) हुवे हैं यज्ञ से यह शेष है॥

जैसे मनुष्य के देह में देहरक्षार्थ प्राण अपान हैं, वैसे इस ब्रह्माण्ड में भी प्राण अपान हैं। सोमादि के होम से इन की अवस्था सुधरने और प्रबल होने पर प्राणियों का उत्तम निर्वाह होता है॥ शतपथ १२।४।४।१; निरुक्त १०।३, १०।२१। निघण्टु ५।४ के प्रमाण और ऋ० १।१३।४ का पाठभेद संस्कृत भाष्य में देखिये॥१॥

अथ द्वितीया–

३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ऋतेन यावृतावृधावृतस्य ज्योतिषस्पती।
२ ३ १ र २ र
ता मित्रावरुणा हुवे॥२॥(७१४)

पदपाठः–ऋतेन ३। यौ, ऋतावृधौ १। ऋतस्य ६। ज्योतिषः ६। पती १, ता, मित्रावरुणा २। हुवे क्रि०॥

अन्वितपदार्थः–(यौ) (ऋतेन) यज्ञेन (ऋतावृधौ) यज्ञस्य वर्धकौ (ऋतस्य) सत्यस्य (ज्योतिषः) प्रकाशस्य (पती) पालकौ स्तः (ता) तौ (मित्रावरुणा) मित्रावरुणौ (हुवे) आह्वयामि॥ ऋग्वेदे १।१३।५ऽपि॥२॥

भावार्थः–(यौ) जो (ऋतेन) यज्ञ से (ऋतावृधौ) यज्ञ के बढ़ाने वाले (ऋतस्य) सच्ची (ज्योतिषः) ज्योति के (पती) पालक हैं (ता) उन (मित्रावरुणा) प्राण और अपान को (हुवे) पुकारता=चाहता हूं॥ ऋ० १।१३।५ में भी॥२॥

अथ तृतीया–

१ २ ३ १ २ ३ १ र २ र ३ १ २
वरुणः प्राविता भुवन्मित्रो विश्वाभिरूतिभिः।
१ २ ३ १ २
करतां नः सुराधसः॥३॥[७](७१५)

पदपाठः--वरुणः १। प्र अ० । अविता १।भुवत् क्रि० । मित्रः १ । विश्वाभिः, ऊतिभिः ३ । करताम् क्रि० । नः २ । सुराधसः २ ॥

अन्वितपदार्थः--(वरुणः) अपानः ( अविता ) रक्षकः (प्र, भुवत् ) प्रभवतु । (मित्रः) प्राणः(विश्वाभिः) सर्वाभिः (ऊतिभिः) रक्षाभिः रक्षकः प्रभवतु । तौ मित्रावरुणौ (नः) अस्मान् (सुराधसः ) प्रभूतधनयुक्तान् ( करताम् ) कुरुताम् ॥

करताम्--डुकृञ् करणे (उभ०) व्यत्ययो बहुलमिति ३ । १ । ८५ शप्, तिप्तस्झि० ३ । ४ । ७८ इति लोटस्तस्, तस्थस्थमिपां तान्तन्तामः ३ । ४ । १०१ इति तसस्ताम्, सार्वधातुकार्धधातुकयोः ७।३।८४ इति गुणः ॥ ऋग्वेदे १।२३।६ऽपि ॥ ३ ॥

भावार्थः--( वरुणः ) अपान (अविता) रक्षक ( प्र, भुवत् ) समर्थ होवे। ( मित्रः ) प्राण ( विश्वाभिः ) सब ( ऊतिभिः ) रक्षाओं से समर्थ होवे । वे दोनों ( नः ) हम को ( सुराधसः ) बहुत धनयुक्त ( करताम् ) करें ॥

अष्टाध्यायी ३ । १ । ८५, ३ । ४ । ७८, ३ । ४ । १०१, ७ । ३ ८४। के प्रमाण संस्कृत भाष्य में देखिये । ऋ० १ । २३ । ६ में भी ॥ ३ ॥

अथ चतुर्ऋचस्य तृतीयसूक्तस्य--मधुच्छन्दा वैश्वामित्र ऋषिः । इन्द्रो देवता। गायत्री छन्दः ।

तत्र प्रथमा--

२ ३ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
इन्द्रमिद्गाथिनो बृहदिन्द्रमर्केभिरर्किणः ।
२ ३ १ २
इन्द्रं वाणीरनूषत ॥ १ ॥ ( ७९६ ) व्याख्याता (१९८)

अथ द्वितीया--

२ ३ २उ ३ २ ३ १२ ३ १ २ ३ १ २
इन्द्र इद्धर्योः सचा संमिश्ल आ वचोयुजा ।

१ २ ३ १ २३ ११
इन्द्रो वज्री हिरण्ययः ॥ २ ॥ ( ७१७ )

पदपाठः—इन्द्रः १ । इत् अ०। हर्योः ६। सचा अ० । संमिश्लः १ । आ अ०। वचोयुजा ६ । इन्द्रः, वज्री, हिरण्ययः १ ॥

अन्वितपदार्थः—( इन्द्रः इत् ) परमेश्वर एव ( वचोयुजा ) वेदवचसा युक्तयोः (हर्योः)हारकयोः शुभाऽशुभकर्मणोर्मध्ये (सचा) सह (आ, संमिश्लः ) संमिश्रितः सर्वत्र ओतःप्रोतश्च विभुत्वात् ( इन्द्रः )परमेश्वरः ( हिरण्ययः ) ज्योतिःस्वरूपः ( वज्री ) दुष्टेषु दण्डस्य नेता अस्तीति शेषः ॥ ऋग्वेदे १ । ७। २ऽपि ॥ २ ॥

भावार्थः—( इन्द्रः इत् ) परमेश्वर ही ( वचोयुजा ) वेदवचन से बंधे हुवे ( हर्योः ) लेचलनेवाले शुभ और अशुभ कर्मों के मध्य ( सचा ) साथर ( आ, संमिश्लः ) सब जगह व्यापक है और ( इन्द्रः) परमेश्वर (हिरण्ययः) ज्योतिःस्वरूप तथा (वज्री) दुष्टों को दण्ड देने वाला है॥ ऋ०१।७।२में भी ॥२॥

अथ तृतीया—

२ ३ १ २ ३ १ २
इन्द्र वाजेषु नोव सहस्रप्रधनेषु च ।
३ १ ३ १ २ ३ १ २
उग्र उग्राभिरूतिभिः ॥ ३ ॥ ( ७१८ )

पदपाठः—इन्द्र सं०।वाजेषु ७।नः २ । अव क्रि० । सहस्रप्रधनेषु७।च अ०। उग्र सं० । उग्राभिः, ऊतिभिः ३ ॥

अन्वितपदार्थः—( उग्र ) हे अनाधृष्य ! इन्द्र! परमेश्वर! ( उग्राभिः ) अनाधृष्याभिः ( ऊतिभिः ) रक्षाभिः ( वाजेषु ) संग्रामेषु ( सहस्रप्रधनेषु ) असंख्यमहाधनेषु महायुद्धेषु ( च ) ( नः ) अस्मान् ( अव ) रक्ष ॥ ऋग्वेदे १ ।७। ४ऽपि ॥ ३ ॥

भावार्थः-( उग्र ) हे सर्वोपरिवर्त्तमान ! इन्द्र ! परमेश्वर ! ( उग्राभिः ) सर्वोपरि वर्त्तमान ( ऊतिभिः ) रक्षाओं से ( वाजेषु ) संग्रामों में ( च ) और ( सहस्रप्रधनेषु ) असंख्य महाधन वाले महायुद्धों में ( नः ) हमारी ( अव ) रक्षा कीजिये ॥ ऋ० १ । ७ । ४ में भी ॥ ३ ॥

अथ चतुर्थी-

१ २ ३ २ ३ १ २ ३ १र २र ३ २
इन्द्रो दीर्घाय चक्षस आ सूर्यꣳरोहयद्दिवि ।
२उ ३ १ ३
वि गोभिरद्रिमैरयत् ॥ ४ ॥ [८] ( ७९९ )

पदपाठः-इन्द्रः १।दीर्घाय,चक्षसे ४। आ अ० । सूर्यम् २ । रोहयत् क्रि० । दिवि ७ । वि अ० । गोभिः ३ । अद्रिम् २ । ऐरयत् क्रि० ॥

अन्वितपदार्थः-(इन्द्रः) परमेश्वरः (दीर्घाय) बृहते (चक्षसे) दर्शनाय ( दिवि ) द्युलोके ( सूर्यम् आ रोहयत् ) । स च सूर्यः ( गोभिः ) किरणैः ( अद्रिम् ) मेघम् ( वि, ऐरयत् ) विशेषेण प्रेरयति ॥ ऋग्वेदे १ । ७ । ३ ऽपि ॥ ४ ॥

भावार्थः-( इन्द्रः ) परमेश्वर ने ( दीर्घाय ) बड़ी ( चक्षसे ) आंख के लिये ( दिवि ) द्युलोक में ( सूर्यम् ) सूर्य को ( आ रोहयत् ) चढ़ाया है । वह सूर्य ( गोभिः ) किरणों से ( अद्रिम् ) मेघ को ( वि,ऐरयत् ) इधर उधर फैलाता है ॥ ऋ० १ । ७ । ३ में भी ॥ ४ ॥

इत्यैन्द्रमाज्यम्

( इति विवरणकारः )

अथ चतुर्थतृचसूक्तस्य वसिष्ठ ऋषिः । इन्द्राग्नी देवते । गायत्री छन्दः ॥

तत्र प्रथमा—

१ २ ३ १र २र ३ १ २ ३ १र २र
इन्द्रे अग्ना नमो बृहत्सुवृक्तिमीरयामहे ।
३ १र २र ३ १ २
धिया धेना अवस्यवः ॥ १ ॥ ( ८०० )

पदपाठः-इन्द्रे ७ । अग्ना ७ । नमः २ । बृहत् २ । सुवृक्तिम् २ । आ-ईरयामहे क्रि० । धिया ३ । धेनाः २ । अवस्यवः १ ॥

अन्वितपदार्थः-(इन्द्रे) सूर्य्ये विद्युति वा (अग्ना) अग्नौ च निमित्ते ( बृहत् ) प्रभूतम् (नमः ) अन्नम् हव्यमिति यावत् ( आ-ईरयामहे) प्रेरयामो जुहुम इत्यर्थः । अथ च (अवस्यवः) आत्मनोरक्षणमिच्छन्तो वयं (धिया) यज्ञकर्मणा सह ( धेनाः ) स्तुतिरूपा वाचः आ-ईरयामहे उच्चारयामः । तथा (सुवृक्तिम् ) शोभनं वरणम् आ-ईरयामहे=कुर्म इत्यर्थः ॥

अग्ना-सुपां सुलुगिति ७ । १ । ३९ विभक्तेर्डादेशः ॥ नम इत्यन्ननाम निघं० २ । ७॥ धीरिति कर्मनाम निघं० २ । १॥ धेनेति वाङ्नाम निघं० १।११॥ ऋग्वेदे ७।९४।४ऽपि ॥ १ ॥

भावार्थः-( इन्द्रे ) सूर्य वा विद्युत् और ( अग्ना ) अग्नि के निमित्त ( बृहत् ) बहुत ( नमः ) हव्य का ( आ-ईरयामहे ) हम होम करते हैं। और ( अवस्यवः ) अपनी रक्षा चाहते हुवे हम ( धिया ) यज्ञ कर्म के साथ ( धेनाः ) वेदवाणियों को उच्चारित करते हैं । तथा ( सुवृक्तिम् ) [ ऋत्विज् आदिकों का ] भले प्रकार वरण करते हैं ॥

अष्टाध्यायी ७ । १ । ३९ निघण्टु २ । ७,२ । १, १ । ११ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ ७ । ९४ । ४ में भी ॥ १ ॥

अथ द्वितीया-

१र २र ३ १२ ३१र २र ३१२
ता हि शश्वन्त ईडतइत्था विप्रासऊतये ।
३२३ ३२
सबाधो वाजसातये ॥ २ ॥ ( ८०१ )

पदपाठः- ता २ । हि अ० । शश्वन्तः १ । ईडते क्रि० । इत्था अ० । विप्रासः १ । ऊतये ४ । सबाधः १ । वाजसातये ४ ॥

अन्वितपदार्थः—(ता) तौ इन्द्राग्नी (वाजसातये) अन्नस्य लाभाय ( ऊतये ) रक्षायै च ( विप्रासः ) विद्वांसः (शश्वन्तः) बहवः ( सबाधः ) ऋत्विजः ( हि ) यस्मात् ( इत्था ) इत्थम् (ईडते) प्रशंसन्ति वर्णयन्तीति यावत् तस्माद्वयमपि हवामहे इत्युत्तरेण सम्बन्धः ॥

शश्वदिति बहुनाम निघं० ३ । १, विप्रइति मेधाविनाम निघं० ३ । १५, सबाध इति ऋत्विङ्नाम निघं० ३ । १८, वाज इत्यन्ननाम निघं० २।७॥ ऋग्वेदे ७ । ९४ । ५ ऽपि॥२॥

भावार्थः—(ता) उन दोनों इन्द्र और अग्नि की ( वाजसातये ) अन्नलाभ के लिये और (ऊतये) रक्षा के लिये (विप्रासः) बुद्धिमान् (शश्वन्तः) बहुत से (सबाधः) ऋत्विज् लोग (इत्था) ऐसे (हि) जिस कारण (ईडते) प्रशंसा करते हैं। इस कारण हम भी प्रशंसा करते हैं। यह अगले मन्त्र से अन्वय है ॥

निघण्टु ३।१, ३।१५, ३ । १८, २ । ७ के प्रमाण संस्कृतभाष्य में देखिये ॥ ऋ० ७ । ९४ । ५ में भी ॥ २ ॥

अथ तृतीया—

१ २ २ १ २ ३ २ ३ १ २
ता वां गीर्भिर्विपन्यवः प्रयस्वन्तो हवामहे ।
३ १ २ ३ १ २
मेधसाता सनिष्यवः ॥ ३ ॥ [ ९ ] ( ८०२ )

पदपाठः—ता २ । वाम् २ । गीर्भिः ३ । विपन्यवः, प्रयस्वन्तः १ । हवामहे क्रि० । मेधसाता ४ । सनिष्यवः १ ॥

अन्वितपदार्थः—( ता ) तौ ( वाम् ) युवाम् इन्द्राग्नी (मेधसाता) यज्ञस्य सेवनाय ( सनिष्यवः ) संभागमात्मन इच्छन्तः (प्रयस्वन्तः) हविष्मन्तः (विपन्यवः) मेधाविनो वयम् (गीर्भिः) वेदवाग्भिः ( हवामहे ) प्रशंसामः ॥

विपन्यवः इति मेधाविनाम निघं० ३ । १५, प्रयइत्यन्न-नाम निघं० २ । ७, मेध इति यज्ञनाम निघं० ३ । १७॥ ऋग्वेदे ७ । १४ । ६ ऽपि ॥ ३ ॥

भाषार्थः-(ता) उन (वाम्) तुम दोनों इन्द्र और अग्नि को (मेधसाता) यज्ञसेवनार्थ (सनिष्यवः) सेवन को चाहते हुवे ( प्रयस्वन्तः ) हव्य अन्न वाले (विपन्यवः) बुद्धिमान् हम (गीर्भिः) वेदवाणियों से (हवामहे) प्रशंसा करते हैं॥

निघण्टु ३ । १५, २ । ७, ३ । १७ के प्रमाण संस्कृत भाष्य में देखिये॥ ऋ० ७ । ९४ । ६ में भी ॥ ३ ॥

## उक्तं प्रातःसवनम्

( इति विवरणकारः )

## इदानीं माध्यन्दिनं सवनमभिधीयते

( इति च विवरणकारः )

अथ तृतीयखण्डे प्रथमतृचसूक्तस्य-भृगुर्वारुणिर्जमदग्निर्वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः ॥ तत्र प्रथमा-

१२ ३ १ २ ३ १ २ ३ २
वृषा पवस्व धारया मरुत्वते च मत्सरः ।
२ ३ १ २ ३ १ २
विश्वा दधान ओजसा ॥१॥ (८०३) व्याख्याता (४६९)

अथ द्वितीया-

१ २ ३ १ २ ३ २ १ २ ३ १ २
तं त्वा धर्त्तारमोण्यो३ऽऽऽष्पवमान स्वर्दृशम् ।
३ १र २र ३ १ २
हिन्वे वाजेषु वाजिनम् ॥ २ ॥ ( ८०४ )

पदपाठः-तम्,त्वा,धर्त्तारम् २ । ओण्योः ६ । पवमान सं० । स्वर्दृशम् २ । हिन्वे क्रि० । वाजेषु ७ । वाजिनम् २ ॥

अन्वितपदार्थः-( पवमान ) शुद्धिसंपादक ! सोम ! ( तम् ) पूर्वमन्त्रोक्तम् ( ओण्योः ) द्यावापृथिव्योः ( धर्त्तारम् ) स्वप्रभावेन धारकं ( स्वर्दृशम् ) स्वः=सूर्य्यमिव दृष्टेः सहायकं ( वाजिनम् ) बलवन्तं बलप्रदं च ( त्वा ) त्वाम् ( वाजेषु ) बलेषु निमित्तभूतेषु ( हिन्वे ) प्रीणयामि ॥

ओण्याविति द्यावापृथिव्योर्नाम निघं० ३ । ३०, स्वरिति दिव आदित्यस्य च साधारणं नाम निघं० १ । ४, हिन्वतिः प्रीणनार्थो भौवादिकः ॥ ऋग्वेदे ९ । ६५ । ११ऽपि ॥२॥

भाषार्थः- ( पवमान ) पवित्रतासंपादक ! सोम ! ( तम् ) पूर्व मन्त्र में वर्णित ( ओरयोः धर्त्तारम् ) द्युलोक और पृथिवी लोक को अपने प्रभाव से धारण करने वाले ( स्वर्दृशम् ) सूर्य्य के समान दृष्टि के सहायक (वाजिनम्) बलयुक्त और बलदायक ( त्वा ) तुझ को ( वाजेषु) बलों के निमित्त (हिन्वे) प्रसन्न=आत्मानुकूल करता हूं ॥

निघण्टु ३ । ३०, १ । ४ इत्यादि का प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ९ । ६५ । ११ में भी ॥ २ ॥

अथ तृतीया-

३ २ ३ २ ३२उ ३ १ २ ३ १ २
अया चित्तो विपानया हरिः पवस्व धारया ।
२ ३ १ २
युजं वाजेषु चोदय ॥ ३ ॥ [ १० ] ( ८०५ )

पदपाठः-अया ३ । चित्तः १ । विपा ३ । अनया ३ । हरिः १ । पवस्व क्रि० । धारया ३ । युजम् २ । वाजेषु ७ । चोदय क्रि० ॥

अन्वितपदार्थः-पूर्वमन्त्रानुवृत्तेः पवमान ! सोम ! त्वम् ( अया ) गतिमत्या ( अनया ) हूयमानया ( धारया ) (विपा) मेधाविना ऋत्विजा हुतः ( हरिः ) हरितवर्णः सन् ( चित्तः )

निर्गतः ( पवस्व ) क्षर । तथा-( युजम् ) सहयोगिनं सखाय-मिन्द्रम् ( वाजेषु ) मेघयुद्धेषु ( चोदय ) प्रवर्त्तय ॥

अय गतौ (भ्वा० आ०) नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ३ । १ । १३४ इति पचाद्यच्, सुपां सुलुगिति ७ । १ । ३९ तृतीयाया आकारः॥चित्तः-चिती संज्ञाने इत्यस्मान्निष्ठान्तः। धातूनामनेकार्थत्वान्निर्गतः ॥ विपइति मेधाविनाम निघं० ३ । १५, वाजे इति संग्रामनाम निघं० २।१७॥ऋग्वेदे ९।६५।१२ ऽपि॥३॥

भावार्थः-पूर्व मन्त्र से अनुवृत्ति लेकर-हे पवमान ! सोम ! तू ( अया) जाने वाली ( अनया ) इस (धारया) धारा से (विपा) विद्वान् ऋत्विज् द्वारा हवन किया हुवा (हरिः) हरितवर्ण ( चित्तः ) निकला हुवा (पवस्व) फैल। और (युजम्) सहयोगी इन्द्र को (वाजेषु) मेघयुद्धों में (चोदय) प्रवृत्त कर॥

अर्थात् जब विद्वान् ऋत्विज् चलती धार से सोम का हवन करते हैं तब वह हरितवर्ण धूम्ररूप में परिणत होता हुवा मेघों तक पहुंचता और वर्षा का हेतु होता है ॥

अष्टाध्यायी ३ । १ । १३४, ७ । १ । ३९ और निघण्टु ३ । १५, २ । १७ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ९ । ६५ । १२ में भी ॥ ३ ॥

अथ द्वितीयतृचसूक्तस्य-उपमन्युर्वासिष्ठऋषिः । पवमानः सोमो देवता। त्रिष्टुप्छन्दः ॥ तत्र प्रथमा-

२ ३ १ २ ३ १ २ ३ ३ १ २ ३ २ ३ २
वृषा शोणो अभि कनिक्रदद्गा नदयन्नेषि पृथिवीमुत द्याम् ।
१ २ ३ १र २र ३ १ २ ३ १ २ ३ २ ३ २
इन्द्रस्येव वग्नुराश्रृण्व आजौ प्रचोदयन्नर्षसि वाचमेमाम् ॥१॥(८०६)

पदपाठः-वृषा १ । शोणः १ । अभि अ० । कनिक्रदत् क्रि० । गाः २।नदयन् १ । एषि क्रि० । पृथिवीम् २ । उत अ० । द्याम् २ । इन्द्रस्य ६ । इव अ० । वग्नुः १ । आश्रृण्वे क्रि० । आजौ ७ । प्रचोदयन् १ । अर्षसि क्रि०।वाचम् २ । आ अ० । इमाम् २ ॥

अन्वितपदार्थः—( इव ) यथा ( वृषा ) वृषभः ( गाः ) धेनूः ( अभि ) अभिलक्ष्य ( कनिक्रदत् ) शब्दायते तथैव सोम ! त्वमपि ( पृथिवीम् उत द्याम् ) द्यावाभूमी ( नदयन् ) शब्देन पूरयन् ( एषि ) गच्छस्याकाशम् । तदा च ( इन्द्रस्य ) विद्युतः ( वग्नुः ) शब्दः ( आजौ ) मेघसूर्ययोःसंग्रामे ( आशृण्वे ) आश्रूयते । एवं ( शोणः ) पीतवर्णस्त्वम् ( इमाम् ) श्रूयमाणां ( वाचम् ) चटचटाशब्दरूपाम् वाणीम् ( प्रचोदयन् ) उत्पादयन् ( आ ) समन्ततः ( अर्षसि ) गच्छसि ॥

दाधर्त्तिदर्धर्त्तिबोभूत्वित्यादिना ७ । ४ । ६५ कनिक्रददिति निपातितः ॥ वग्नुरिति वाङ्नाम निघं० १ । ११ ॥ आजाविति संग्रामनाम निघं० २ । १७ ॥ ऋग्वेदे तु ९ । ९७ । १३ प्रचोदयन्= प्रचेतयन्निति पाठःस एवचाऽत्रापिसायणाचार्येणभ्रान्त्याव्याख्यातः १

भावार्थः—(इव) जैसे ( वृषा ) सांड वा बैल ( गाः ) गौओं को ( अभि ) देखकर ( कनिक्रदत ) शब्द करता है ऐसे ही सोम ! तू भी ( पृथिवीम् उत द्याम् ) पृथिवी और द्युलोक को (नदयन्) शब्द से पूरित करता हुआ (एषि) आकाश को जाता है । तब ( इन्द्रस्य ) विद्युत् का (वग्नुः) शब्द (आजौ) मेघ और सूर्य के संग्राम में (आशृण्वे) सब ओर सुना जाता है । इस प्रकार ( शोणः ) पीतवर्ण सोम ! तू (इमाम्) इस चट चटा शब्दरूपिणी (वाचम्) वाणी को ( प्रचोदयन् ) बोलता हुआ (आ) सब ओर (अर्षसि) जाता है॥

अष्टाध्यायी ७ । ४ । ६५ ॥ निघण्टु १ । ११, २ । १७ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ९ । ९७ । १३ में प्रचोदयन् के स्थान में प्रचेतयन् पाठ है और सायणाचार्य ने भ्रान्ति से उसी की व्याख्या यहां भी करदी है ॥१॥

अथ द्वितीया-

३२ ३ १२ ३ १ २ ३१२ ३ १२ ३ ३ २
रसाय्यः पयसा पिन्वमान ईरयन्नेषि मधुमन्तमꣳशुम् ।
१२ ३ १ २ ३ १ २र ३ १ २
पवमान सन्तनिमेषि कृण्वन्निन्द्राय सोम परिषिच्यमानः २(८०७)

पदपाठः—रसाय्यः १ । पयसा ३ । पिन्वमानः, ईरयन् १ । एषि क्रि० । मधुमन्तम्, अंशुम् २ । पवमान सं० । संतनिम् २ । एषि क्रि० । कृण्वन् १ । इन्द्राय ४ । सोम सं० । परिषिच्यमानः १ ॥

अन्वितपदार्थः—( पवमान ) शोध्यमान ! ( सोम ) (रसाय्यः ) रसालुः ( पयसा ) प्राणेन ( पिन्वमानः ) वृद्धिंगतः ( इन्द्राय ) सूर्याय (ईरयन् ) ऊर्ध्वं गच्छन् त्वम् (मधुमन्तम्) माधुर्योपेतम् (अंशुम्) किरणगतं जलकणम् ( एषि ) प्राप्नोषि (परिषिच्यमानः) सर्वतो वर्षन् (सन्तनिम्) विस्तारम् (कृण्वन्) कुर्वन् (एषि) गच्छसि ॥

पयसा=प्राणेन । प्राणः पयः । श० ६ । ४ । २ । १५॥ रसाय्य इत्यत्र रसेरौणादिक आय्यप्रत्ययः (३ । ९६ उणा०) सन्तनिमित्यत्र संपूर्वात् (तनुविस्तारे) धातोरिप्रत्ययः ॥ ऋग्वेदे ९ । ९७ । १४ ऽपि ॥ २ ॥

भावार्थः-( पवमान ) शोधे जाते हुवे ( सोम ) सोम ! तू ( रसाय्यः) रसालु और (पयसा पिन्वमानः) प्राण से वृद्धि को प्राप्त होता हुवा (इन्द्राय) सूर्य के लिये(ईरयन्)ऊपर चढता हुवा (मधुमन्तम्)मधुरतायुक्त(अंशुम्)किरणगत जलकण को ( एषि ) प्राप्त होता है ( परिषिच्यमानः ) सब ओर वर्षता और ( सन्तनिम् ) विस्तार ( कृण्वन् ) करता हुवा (एषि) जाता है ॥

शतपथ ६ । ५ । २ । १५ उणादि ३ । ९६ इत्यादि प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ९ । ९७ । १४ में भी ॥ २ ॥

अथ तृतीया–

३ १ २ ३ १र २र ३ १ २ ३ १ २ ३ २ २ ३ २ ३
एवा पवस्व मदिरो मदायोदग्राभस्य नमयन्वधस्नुम् । परि वर्णं
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २
भरमाणो रुशन्तं गव्युर्नो अर्ष परि सोम सिक्तः॥३॥[११](८०८)

पदपाठः–एवा अ० । पवस्व क्रि० । मदिरः १ । मदाय ४ । उदग्राभस्य ६ । नमयन् १ । वधस्नुम् २ । परि अ० । वर्णम् २ । भरमाणः १ । रुशन्तम् २ । गव्युः १ । नः ६ । अर्ष क्रि० । परि अ० । सोम सं० । सिक्तः १ ॥

अन्वितपदार्थः–(सोम) ओषधिराज ! (एवा) एवम् (मदिरः) हर्षप्रदः (रुशन्तम्) आरोचमानं श्वेतं (वर्णम्) (परि) सर्वतः (भरमाणः) धारयन् (सिक्तः) अग्नावाहुतः (गव्युः) गाः किरणानिच्छुः (उदग्राभस्य) मेघस्य (वधस्नुम्) वधेन जातं प्रस्रवन्तं सानुम् (नमयन्) प्रह्वीकुर्वन् (नः) अस्माकं (मदाय) हर्षाय (परि अर्ष) सर्वतः प्रसृतो भव ॥ ऋग्वेदे तु ९।९७।१५ वधस्नैरित्यन्तरम् ॥ २ ॥

भाषार्थः–(सोम) ओषधिराज ! (एवा) इस प्रकार (मदिरः) हर्षदायक, (रुशन्तं, वर्णं, परि, भरमाणः) प्रकाशित श्वेत, रङ्ग को, सर्वतः, धारण करता हुवा (सिक्तः) सींचा=अग्नि में टपकाया हुवा (गव्युः) सूर्यकिरणों को मानो चाहता हुवा (उदग्राभस्य, वधस्नुं, नमयन्) मेघ के, टपकते सानु को, नमाता हुवा (नः) हमारे (मदाय) हर्ष के लिये (परि–अर्ष) सब ओर फैल ॥ ऋ० ९ । ९७ । १५ में–वधस्नैः पाठ है ॥ २ ॥

अथ चतुर्थखण्डे प्रथमस्य प्रगाथस्य सूक्तस्य शंयुर्बार्हस्पत्य ऋषिः । इन्द्रो देवता । बृहती छन्दः ॥ तत्र प्रथमा–

१र २र ३ १ २र ३ १ २ २ ३ १ २ ३
त्वामिद्धि हवामहे सातौ वाजस्य कारवः । त्वां वृत्रेष्विन्द्र

१ २ ३ २३ २उ ३ १ २
सत्पतिं नरस्त्वां काष्ठास्वर्वतः॥१॥ (८०९) व्याख्याता (२३४)

अथ द्वितीया–

१र २र ३ २ ३ १ २ ३ १ २
स त्वं नश्चित्र वज्रहस्त धृष्णुया महः स्तवानो अद्रिवः।
१ २र ३ २र ३ १ २ ३ २उ ३ २ ३ १ २
गामश्वं रथ्यमिन्द्र सङ्किर सत्रा वाजं न जिग्युषे॥२॥ [१२] (८१०)

पदपाठः–सः १। त्वम् १। नः ४। चित्र, वज्रहस्त सं०। धृष्णुया १। महः १। स्तवानः १। अद्रिवः सं०। गाम्, अश्वम्, रथ्यम् २। इन्द्र सं०। संकिर क्रि०। सत्रा अ०। वाजम् २। न अ०। जिग्युषे ४॥

अन्वितपदार्थः—( चित्र ) आश्चर्यस्वरूप ! ( वज्रहस्त ) वज्रं हस्ते सुखमये स्वरूपे यस्य तत्संबुद्धौ ( अद्रिवः ) मेघानां स्वामिन् ! ( इन्द्र ) परमेश्वर ! ( सः ) पूर्वमन्त्रोक्तः ( त्वम् ) ( धृष्णुया ) धृष्णुः शत्रूणां धर्षयिता (महः) महान् ( स्तवानः ) सन् (नः) अस्मभ्यम् (गाम्, अश्वम्) गवाश्वादिकम् (रथ्यम्) रथेसाधु वाहकम् ( सत्रा ) सदा ( संकिर ) प्रयच्छ ( न ) यथा ( जिग्युषे ) जितवते वीराय ( वाजम् ) अन्नाद्युपहारं भोगार्थं प्रयच्छन्ति तद्वत् ॥

धृष्णुयेत्यत्र–सुपां सुलुगित्यादिना७।१।३९प्रथमैकवचनस्य याऽऽदेशः ॥ वज्रहस्त इत्यत्र–हसिमृग्रिणवामिदमिल्पूधूर्विभ्यस्तन् ॥ (उणा० ३। ८६) इत्यनेन हस हसने इति धातोस्तन् ऋग्वेदे ६।४६।२ऽपि ॥ २ ॥

भावार्थः–( चित्र ) हे आश्चर्यमय ! ( वज्रहस्त ) अपने सुखस्वरूप में दुष्टदमनार्थ दण्डधारण करने वाले ! ( अद्रिवः ) मेघों के स्वामी ! ( इन्द्र ) परमेश्वर ! ( सः ) पूर्ववर्णित ( त्वम् ) आप ( धृष्णुया ) शत्रुओं को दबाने वाले ( महः ) महान् (स्तवानः) स्तुति किये जाते हुवे ( नः ) हमारे लिये

( गाम् अश्वम् ) गौ बैल घोड़े आदि पशु (रथ्यम्) वाहनयोग्य (मत्रा) सदा ( संकिर ) दीजिये । ( न ) जैसे (जिग्युषे ) जीतने वाले वीर को ( वाजम् ) अन्नादि उपहार भोगार्थ देते हैं तद्वत् ।।

अष्टाध्यायी ७ । १ । ३९ उणादि ३ । ८६ के प्रमाण संस्कृत भाष्य में देखिये ।। ऋ० ६ । ४६ । २ में भी ।। २ ॥

अथ प्रगाथस्य द्वितीयसूक्तस्य —प्रस्कण्वः काण्व ऋषिः ।

इन्द्रो देवता । बृहती छन्दः । तत्र प्रथमा—

३ १र २र ३ १ २ ३ १ २ ३ १ २ ३ २ १ २ ३ १ २ ३ १ २

अभि प्र वः सुराधसमिन्द्रमर्च यथाविदे । यो जरितृभ्यो मघवा

३ १ २ ३ १ २ ३ १ २

पुरूवसुः सहस्रेणेव शिक्षति ॥१॥ (८११) व्याख्याता (२३५)

अथ द्वितीया—

३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३

शतानीकेव प्रजिगाति धृष्णुया हन्ति वृत्राणि दाशुषे । गिरेरिव

१र २र ३ १ २ ३ १ २

प्र रसा अस्य पिन्विरे दत्राणि पुरुभोजसः॥२ ॥ [१३](८१२)

पदपाठः— शतानीकेव अ०। प्रजिगाति क्रि०। धृष्णुया १ । हन्ति क्रि०। वृत्राणि २ । दाशुषे ४ । गिरेरिव अ० । प्र अ० । रसाः १ । अस्य ६ । पिन्विरे क्रि० । दत्राणि १ । पुरुभोजसः ६ ।।

अन्वितपदार्थः—( धृष्णुया ) धर्षणशीलः पुरुषः ( शतानीकेव) बहूनि शत्रुसैन्यानीव, इन्द्रः ( वृत्राणि ) पापानि (प्रजिगाति) जयति (हन्ति) नाशयति च । तथा ( पुरुभोजसः )असंख्यधनस्य ( अस्य ) इन्द्रस्य परमेश्वरस्य ( दत्राणि ) दानानि ( दाशुषे ) दानशीलाय यजमानाय ( प्र पिन्विरे) प्रवहन्ति । दृष्टान्तः—( गिरेरिव रसाः ) यथा पर्वतस्य जलप्रवाहास्तद्वत् ॥ ऋग्वेदे ८ । ४९ । २ ऽपि ॥ २ ॥

भावार्थः-(धृष्णुया) तेजस्वी वीर (शतानीकेव) बहुत सी शत्रुसेनाओं को जीतता और नष्ट करता है वैसे ही परमेश्वर (वृत्राणि) पापों को (प्रशिणाति) जीतता और (हन्ति) नष्ट करता है। तथा (पुरुभोजसः) असंख्य धन वाले (अस्य) इस परमेश्वर के (दत्राणि) दान (दाशुषे) दान यज्ञादि करने वाले यजमान के लिये (प्रपिन्विरे) प्रवाह से बहते हैं। दृष्टान्त-(गिरेरिव रसाः) जैसे पर्वत के जल बहते हैं तद्वत्। ऋ०८।४९।२ में भी ॥२॥

अथ तृतीयप्रगाथस्य-नृमेधा ऋषिः। इन्द्रो देवता। बृहती छन्दः॥

तत्र प्रथमा-

२ ३१र २र ३ १ २ १२३ १ २
त्वामिदाह्योनरो पीप्यन्वज्रिन्भूर्णयः। सइन्द्र स्तोमवाहस
३ २ ३ २ ३ १ २ ३ १ २
इह श्रुध्युप स्वसरमागहि ॥१॥ (८१३) व्याख्याता(३०२)

अथ द्वितीया-

१ २ ३ १ २ ३ १ २ ३ १ २ २ ३ १
मत्स्वा सुशिप्रिन्हरिवस्तमीमहे त्वयाभूषन्तिवेधसः। तव श्र-
२ ३ १ २ २ १ २
वांस्युपमान्युक्थ्य सुतेष्विन्द्रगिर्वणः ॥२॥ [१४] (८१४)

पदपाठः-मत्स्व क्रि०। सुशिप्रिन्, हरिवः सं०। तम् २। ईमहे क्रि०। त्वया ३। भूषन्ति क्रि०। वेधसः १। तव ६। श्रवांसि, उपमानि १। उक्थ्य सं०। सुतेषु ७। इन्द्र, गिर्वणः सं०॥

अन्वितपदार्थः-(सुशिप्रिन्) शोभनव्याप्तिमन्! (हरिवः) कर्मवन्! (उक्थ्य) स्तुत्य! (गिर्वणः) गीर्भिर्वननीय! (इन्द्र) परमेश्वर! (तम्) त्वाम् (ईमहे) याचामहे प्रार्थयामहे (त्वया) त्वत्साहाय्येन (वेधसः) मेधाविनउपासकाः (भूषन्ति) शोभिताभवन्ति (तव) (श्रवांसि) यशांसि (उपमानि) उपमानानि सन्ति नतूपमेयानि कैश्चित्। स त्वम् (सुतेषु) पुत्रतुल्येषूपासकेषु (मत्स्व) प्रसन्नो भव॥

सुशिप्रिन् इत्यत्र—स्फायितञ्चिवञ्चिशकिशिपीत्यादिना ( उणा० २ । १३ ) सृप्लृगतौ इत्यस्माद्धातोः रक् । बाहुलकात्सृशब्दस्य शिभावः ( पा० ३ । १ । ८५) ॥ ऋग्वेदे तु ८ । ९९।२ सुशिप्र । तदीमहे । त्वे आ भूषन्ति । उक्थ्या इत्यनन्तरम् ॥ २ ॥

भाषार्थः—( सुशिप्रिन् ) हे उत्तम व्याप्ति वाले ! (हरिवः) कर्मों की धरोहर रखने वाले ! ( उक्थ्य ) स्तुत्य ! (गिर्वणः) वाणियों से भजनीय ! (इन्द्र) परमेश्वर ! ( तम् ) पूर्वोक्त गुणगरिष्ठ आप से (ईमहे) हम मांगते हैं प्रार्थना करते हैं कि ( त्वया ) आप की सहायता से ( वेधसः ) बोधयुक्त उपासक लोग (भूषन्ति) शोभमान होते हैं । ( तव ) आपके (श्रवांसि) यश (उपमानि) उपमान हैं न कि किसी से उपमेय । वह आप ( सुतेषु ) पुत्रतुल्य भक्तों पर ( मत्स्व ) प्रसन्न हूजिये ॥

उणादि २ । १३ इत्यादि के प्रमाण और ऋ० ८ । ९९ । २ के पाठभेद संस्कृतभाष्य में देखिये ॥ २ ॥

पञ्चमखण्डे प्रथमतृचसूक्तस्य-असहीयुर्ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः ॥ तत्र प्रथमा—

२ ३ २३ १२ ३ १ २ ३ १ २
यस्ते मदो वरेण्यस्तेनापवस्वान्धसा ।
३ १२ ३ २
देवावीरघशꣳसहा ॥१॥ (८१५) व्याख्याता ( ४७० )

अथ द्वितीया—

१ २ ३१२ ३२ ३ २ ३ १ २ ३ १ २
जघ्निर्वृत्रममित्रियं सस्निर्वाजं दिवे दिवे ।
१ २ ३ १ २
गोषातिरश्वसा असि ॥ २ ॥ ( ८१६ )

पदपाठः–जघ्निः १। वृत्रम्, अमित्रियम् २। सस्निः १। वाजम् २। दिवे दिवे अ०। गोषातिः १। अश्वसाः १। असि क्रि०॥

अन्वितपदार्थः—सोमः ( अमित्रियं वृत्रं जघ्निः ) अमित्रकर्मकरस्य शत्रोर्नाशको घातको वा (दिवे दिवे) प्रतिदिनं (वाजं सस्निः) बलस्य दाता (गोषातिः) इन्द्रियदायकः (अश्वसाः) प्राणप्रदः ( असि ) भवति॥

ऋग्वेदे तु ९।६१।२० गोषा उ अश्वसा इत्यन्तरम्॥२॥

भावार्थः–सोम ( अमित्रियं वृत्रं जघ्निः ) अमित्रकर्मकारक त्रुश का घातक, ( वाजं सस्निः ) बल का दायक, ( गोषातिः ) इन्द्रियों का दाता और ( अश्वसाः ) प्राणप्रद (असि) है ॥ ऋ० ९। ६१। २० में " गोषा उ अश्वसा" ऐसा पाठ है ॥ २ ॥

अथ तृतीया–

१ २ ३ १ २ ३ २ ३ २ ३ १ २
संमिश्लो अरुषो भुवः सूपस्थाभिर्न धेनुभिः ।
१ २ ३ २उ ३ २
सीदञ्छ्येनो न योनिमा ॥३॥ [ १५ ] ( ८१७ )

पदपाठः–संमिश्लः १। अरुषः १। भुवः क्रि०। सूपस्थाभिः ३। न अ०। धेनुभिः ३। सीदन् १। श्येनः १। न अ०। योनिम् २। आ अ०॥

अन्वितपदार्थः—सोमः ( सूपस्थाभिः ) शोभनोपस्थानाभिः (धेनुभिः) गोभिः ( न ) इव वाग्भिः सह ( संमिश्लः ) मिश्रितः ( योनिम् ) वेदिम् (आसीदन् ) हूयमानः सन् (श्येनः न) श्येन इव (अरुषः) गतिमान् (भुवः) भवति ॥

वाचमेव तद्देवा धेनुमकुर्वत तथैवैतद्यजमानो वाचमेव धेनुं कुरुते० शतपथे ९।१।२।१७॥ ऋहनिभ्यामूषन् (उणा० ४। ७३) इति गत्यर्थादृच्छतेरूषनि वर्ण०व्यत्ययेनोकारस्य ह्रस्वत्वे अरुषः ॥ ऋग्वेदे तु ९।६१।२१ भुवः=भवेति पाठः ॥ ३ ॥

भाषार्थः—सोम (सूपस्थाभिः) सुन्दर उपस्थान वाली (धेनुभिः) गौओं के (न) समान वेदवाणियों के साथ (संमिश्लः) मिला हुवा (योनिम्) वेदी में (आसीदन्) होम होते हुवे स्थित हुवा (श्येनः) श्येन पक्षी (न) सा (अरुषः) तीव्रगामी (भुवः) होता है ॥

शतपथ ९।१।२।१७ उणादि ४।७३ निघण्टु १।११ इत्यादि प्रमाण और ऋ० ९।६१।२१ का पाठभेद संस्कृतभाष्य में देखिये ॥ ३ ॥

अथ द्वितीयतृचस्य—नहुषो मानव ऋषिः। पवमानः सोमो देवता। अनुष्टुप्छन्दः॥ तत्र प्रथमा—

३ २ ३ २ ३ २उ ३ १ २ ३ १ २ २ ३ १ २ ३

**अयं पूषा रयिर्भगः सोमः पुनानो अर्षति। पतिर्विश्वस्य**

१ २३क २र ३ १ २ ३ २

**भूमनो व्यख्यद्रोदसी उभे॥१॥(८१८)व्याख्याता(५४६)**

अथ द्वितीया—

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

**समु प्रिया अनूषत गावो मदाय घृष्वयः।**

१ २ ३ १र २र ३ १ २

**सोमासः कृण्वते पथः पवमानास इन्दवः ॥२॥ (८१९)**

पदपाठः—सम्, उ अ०। प्रियाः १। अनूषत क्रि०। गावः १। मदाय ४। घृष्वयः, सोमासः १। कृण्वते क्रि०। पथः २। पवमानासः, इन्दवः १॥

**अन्वितपदार्थः—(उ) प्रसिद्धौ (प्रियाः) प्रीतिकर्यः (घृष्वयः) अत्यन्तदीप्ताः (गावः) वाचः (मदाय) हर्षाय (सम् अनूषत) सोमं सम्यग्वर्णयन्ति प्रशंसन्ति (पवमानासः) शुद्धिं संपादयन्तः (इन्दवः) दीप्ताः (सोमासः) सोमाः (पथः) मार्गान् (कृण्वते) आकाशगमनाय कुर्वन्ति॥ऋग्वेदे ९।१०१।८ ऽपि ॥२॥**

भाषार्थः—(उ) प्रसिद्ध है कि (प्रियाः) प्रीतिकरी (घृष्वयः) अत्यन्त दीप्त (गावः) वाणियें (मदाय) हर्ष के लिये (सम् अनूषत) सोम का भले

प्रकार वर्णन करती हैं और (पवमानासः) शुद्धि करते हुवे (इन्दवः) दीप्तिमान् (सोमासः) सोम (पथः) मार्गों को (कृण्वते) आकाश गमनार्थ करते हैं ।। ऋ० ९ । १०१ । ८ में भी ।। २ ।।

अथ तृतीया–

१ २र ३१र २र३ १ २ ३ १ २
य ओजिष्ठस्तमाभर पवमान श्रवाय्यम् ।
१ २र ३ २ ३ २ ३२उ ३ १ २
यः पञ्च चर्षणीरभि रयिं येन वनामहे ॥३॥[१६](८२०)

पदपाठः–यः, ओजिष्ठः १ । तम् २ । आभर क्रि० । पवमान सं० । श्रवाय्यम् २ । यः १ । पञ्च, चर्षणीः २ । अभि अ०। रयिम् २।येन ३।वनामहे क्रि०॥

अन्वितपदार्थः–(पवमान) सोम ! वा शुद्धस्वरूप परमात्मन् ! (यः) (ओजिष्ठः) ओजस्वितमः त्वद्रसः, भवदीयानन्दो वास्ति (यः) (पञ्च चर्षणीः) यजमानपञ्चमांश्चतुरोहोत्रादीनृत्विजः, यद्वा पञ्च जनान्पञ्च ज्ञानेन्द्रियाणि (अभि) व्याप्य वर्त्तते (येन) (रयिम्) धनाद्यैश्वर्यं (वनामहे) संभजामहे (तम्) (श्रवाय्यम्) श्रवणीयं प्रशस्यम् (आभर) आहर प्रापयाऽस्मानिति शेषः ॥ ऋग्वेदे ९ । १०१ । ९ ऽपि ॥३॥

भावार्थः–(पवमान) सोम! वा शुद्धस्वरूप परमात्मन्! (यः) जो (ओजिष्ठः) अति बलवान् तेरा रस वा आप के आनन्द का रस है और (यः) जो (पञ्च) पांच (चर्षणीः) १ यजमान और ४ होता आदि ऋत्विज् इन ५ मनुष्यों को वा पाञ्चज्ञानेन्द्रियों को (अभि) व्याप कर वर्त्तमान है और (येन) जिस से (रयिम्) धनादि ऐश्वर्य को (वनामहे) हम संभजन करते हैं (तम्) उस (श्रवाय्यम्) श्रवण करने योग्य प्रशंसनीय रस वा आनन्द रस को (आभर) हमें प्राप्त करा, वा कराइये ।। ऋ० ९ । १०१ । ९ में भी ।। ३ ।।

अथ तृतीयतृचस्य–आद्ययोर्द्वयोःसिकतानिवारी, तृतीयायाः पृश्नयोऽजा ऋषयः । पवमानः सोमो देवता । जगती छन्दः ॥

तत्र प्रथमा–

१ २ ३ १ २ ३ २उ ३ १ २ ३ १ २र
वृषा मतीनां पवते विचक्षणः सोमो अह्नां प्रतरीतोषसां
३ २ ३ १र २र ३ १ ३ ३ १ २ ३ १ २
दिवः । प्राणा सिन्धूनां कलशां अचिक्रददिन्द्रस्य हार्दा-
३ १ २ ३ १ २
विशन्मनीषिभिः ॥ १ ॥ ( ८२१ ) व्याख्याता ( ५५९ )

अथ द्वितीया–

३ १ २ ३ २ ३ १र २र ३ २उ ३ १ २
मनीषिभिः पवते पूर्व्यः कविर्नृभिर्यतः परि कोशां असिष्यदत् ।
३ २ ३ १ २ ३ १ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
त्रितस्य नाम जनयन्मधु क्षरन्निन्द्रस्य वायुं सख्याय वर्धयन् ॥
॥ २ ॥ ( ८२२ )

पदपाठः–मनीषिभिः ३ । पवते क्रि० । पूर्व्यः, कविः १ । नृभिः ३ । यतः १ । परि अ० । कोशान् २ । असिष्यदत् क्रि० । त्रितस्य ६ । नाम २ । जनयन् १ । मधु २ । क्षरन् १ । इन्द्रस्य ६ । वायुम् २ । सख्याय ४ । वर्धयन् १॥

अन्वितपदार्थः—अयं सोमः ( मनीषिभिः ) मेधाविभिर्ऋत्विग्भिः ( पवते ) पूयते । ततः ( पूर्व्यः ) पुराणःपक्षः (कविः ) बुद्धितत्त्ववान् ( नृभिः यतः ) नेतृभिः पुरुषैर्यत्नेन प्रयुक्तः सन् ( कोशान् ) द्रोणकलशान् ( परि ) वर्जयित्वा ततो निःसृत्येति यावत् ( त्रितस्य ) त्रिषु लोकेषु विस्तृतस्य [इति सायणोऽपि] ( इन्द्रस्य ) विद्युत्तत्त्वस्य ( नाम ) नामकमुदकम् ( जनयन् ) उत्पादयन् ( मधु ) मधुरं रसं ( क्षरन् ) वर्षयन् ( सख्याय ) सखित्वाय ( वायुम् ) प्रसिद्धम् ( वर्धयन् )प्रवृद्धं कुर्वन् (असिष्यदत् ) स्यन्दते ॥

ऋग्वेदे तु ९ । ८६ । २० असिष्यदत्=अचिक्रदत् । वायुं=वायोः । वर्धयन्=कर्त्तवे इति पाठाः ॥ २ ॥

भाषार्थः—यह सोम ( मनीषिभिः ) विद्वानों द्वारा ( पवते ) शुद्ध किया जाता है । फिर ( पूर्व्यः ) पुराना ( कविः ) बुद्धि तत्त्ववाला ( नृभिः यतः ) कर्मकर्त्ता पुरुषों से यत्नपूर्वक प्रयोग में लाया जाता हुवा ( कोशान् ) द्रोणकलशों को ( परि ) छोड़ कर=उन से निकल कर ( त्रितस्य ) तीनों लोकों में फैले हुवे [ यहां सायणाचार्य ने भी यही अर्थ किया है, त्रित नामक ऋषि अर्थ नहीं किया ] ( इन्द्रस्य ) वायुविशेष के (नाम) निवाने वाले जल को ( जनयन् ) उत्पन्न करता हुवा ( मधु ) मधुर रस को ( क्षरन् ) वर्षाता हुवा ( सख्याय ) स्नेह वा मित्रता के लिये ( वायुम् ) इन्द्रनामक वायु विशेष को ( वर्धयन् ) बढ़ाता हुवा ( असिष्यदत् ) वर्षता है ।। ऋ० ९ । ८६ । २० के पाठभेद संस्कृत भाष्य में देखिये ।। २ ।।

अथ तृतीया—

३१ २ ३ २ ३१ २ ३ २१ २ २ ३ २
अयं पुनान उषसो अरोचयदयं सिन्धुभ्यो अभवदु लोककृत् ।
३ २उ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
अयं त्रिःसप्त दुदुहान आशिरं सोमो हृदे पवते चारु मत्सरः
॥ ३ ॥ [ १७ ] ( ८२३ )

पदपाठः—अयम्, पुनानः १ । उषसः २ । अरोचयत् क्रि० । अयम् १ । सिन्धुभ्यः ५ । अभवत् क्रि० । उ अ० । लोककृत्, अयम् १ । त्रिःसप्त २ । दुदुहानः १ । आशिरम् २ । सोमः १ । हृदे ४ । पवते क्रि० । चारु २ । मत्सरः १ ॥

अन्वितपदार्थः—( अयम् ) सोमः ( पुनानः ) पवित्रयन्सन् (उषसः) प्रभातान् ( अरोचयत् ) दीपयति ( उ ) च ( अयम् ) सोमः (सिन्धुभ्यः) नदीभ्यः ( लोककृत् ) लोकानां कर्त्ता [ वर्षकत्वात् ] ( अभवत् ) भवति ( अयम् ) एषः (सोमः) (त्रिःसप्त)

एकविंशतिसंख्याकानि=एकं मनो दश प्राणान् दशेन्द्रियाणि(आ-शिरम्) रसं (दुदुहानः) अतिशयेन प्रपूरयन् (हृदे) हृदयाय (चारु) शोभनं यथा स्यात्तथा (मत्सरः) हर्षकरः (पवते) पवनवद्वाति ॥

सोमयागेन सुवृष्ट्यादिना शोभनाः प्रभाता जायन्ते। नदीप्रवाहवृद्ध्या लोकस्य ऋद्धिर्भवति। सोमसेवनेन प्राणादीनां बलं वर्धते। एष सोमो वायुं व्याप्य चित्तप्रसादकरस्तद्वाति ॥ ऋग्वेदे तु ९। ८६। २१ विरोचयत् इति पाठः ॥ ३ ॥

भाषार्थः—(अयम्) यह सोम (पुनानः) पवित्र करता हुवा (उषसः) प्रभातसमयों को (अरोचयत्) प्रकाशित करता है (उ) और (अयम्) यह सोम (सिन्धुभ्यः) नदियों से (लोककृत्) लोकों का कर्त्ता (अभवत्) है (अयम्) यह (सोमः) सोम (त्रिःसप्त) एक मन, १० इन्द्रियें, १० प्राण=सब एक्कीसों को (आशिरम्) रस से (प्रपूरयन्) भरता हुवा (हृदे) हृदय के लिये (चारु) उत्तम (मत्सरः) हर्षकारक (पवते) पवन के समान वहता है ॥

अर्थात् सोमयाग से सुवृष्टि आदि होकर सुन्दर प्रभात समय होते हैं, नदियों के प्रवाह बढ़ कर लोक की ऋद्धि होती है, सोमसेवन से प्राणादि का बल बढ़ता है। यह सोम वायु को व्याप कर चित्त को हर्षदायक होता हुवा वायु के समान वहता है॥ ऋ० ९।८६।२१ में विरोचयत् पाठ है ॥३॥

अथ षष्ठे खण्डे प्रथमतृचस्य आङ्गिरसः श्रुतकक्षोवा ऋषिः। इन्द्रो देवता।

गायत्री छन्दः॥ तत्र प्रथमा—

३ १ २र ३ २ ३ १ २र ३ २ ३ २
एवा ह्यसि वीरयुरेवा शूर उत स्थिरः।
३ २ ३ २ ३ १ २
एवा ते राध्यं मनः॥ १॥ (८२४) व्याख्याता(२३२)

अथ द्वितीया–

३ २ ३ १ २ ३ १ २ ३ १ २
एवा रातिस्तुवीमघ विश्वेभिर्धायि धातृभिः ।
१ २ ३ १ २
अधा चिदिन्द्र नः सचा ॥ २ ॥ ( ८२५ )

पदपाठः–एव अ० । रातिः १ । तुवीमघ सं० । विश्वेभिः ३ । धायि क्रि० । धातृभिः ३ । अध, चित् अ० । इन्द्र सं० २ । नः ६ । सचा अ० ॥

अन्वितपदार्थः–(तुवीमघ ) हे बहुधन ! ( इन्द्र ) राजन् ! (विश्वेभिः) सर्वैः (धातृभिः ) कर्मधारकैराजपुरुषैस्तव ( रातिः) वेतनादिदानं (धायि) धार्यते । ( अध ) अथ च हे राजन् ! त्वं (नः) अस्माकं प्रजाजनानाम् (चित्) अपि ( सचा ) धनादिदानेन ( एव ) निश्चयेन व्यापारसहायो भव ॥

ऋग्वेदे तु ८ । ९२ । २९ इन्द्रमेसचा इतिपाठः ॥ धायि इति दधातेर्लुङि कर्मणि रूपम् ॥ २ ॥

भाषार्थः–( तुवीमघ) हे बहुत कोष धन वाले ! ( इन्द्र ) राजन् ! ( विश्वेभिः ) सब ( धातृभिः ) कर्मधारक राजपुरुषों से [ आप का ] ( रातिः ) [ वेतनादि ] देना ( धायि ) धारण किया जाता है ( अध ) और आप ( नः ) हम प्रजाजनों के ( चित् ) भी ( सचा ) धनादि देने से ( एव ) ही व्यापारसहायक हूजिये ।। ऋ० ८ । ९२ । २९ में–इन्द्र मे सचा–पाठ है ॥ २ ॥

अथ तृतीया–

२उ ३ १ २ ३ १र २र
मो षु ब्रह्मेव तन्द्रयुर्भुवो वाजानां पते ।
१ २ ३ २ ३ १ २
मत्स्वा सुतस्य गोमतः ॥ ३ ॥ ( ८२६ )

पदपाठः–मा, उ, सु अं० । ब्रह्मेव अ० । तन्द्रयुः १ । भुवः क्रि० । वाजानांपते सं० । मत्स्व क्रि० । सुतस्य, गोमतः ।। ६ ॥

अन्वितपदार्थः-(वाजानांपते)बलानांपते!राजन्! त्वं(गोमतः) इन्द्रियोत्तेजकस्य(सुतस्य) सोमस्य पानेन(सु)(मत्स्व) माद्य हृष्टो-भव(मा उ) न च (तन्द्रयुः) आलस्यवान् (भुवः) भव। तत्र दृष्टान्तः-(ब्रह्मेव) यथा ब्रह्मा चतुर्वेदविद् ब्राह्मणः सदाऽतन्द्रो जागरूकोऽनलसो भवति तद्वत् ॥

अयंभावः-ब्राह्मणा हि धनाद्यर्जनरत्यभावेन प्रायो निर्धना अत-एवालस्यजनकधनसम्पत्त्याद्यभावेनाऽतन्द्रा भवन्त्येव। परं क्षत्रि-येण राज्ञा धनादिभोगसाधनबाहुल्यवतापि न तज्जनितालस्यादि-प्रमादः कार्य इति ॥ ऋग्वेदे ८।९२।३०ऽपि ॥३॥

भाषार्थः-(वाजानांपते) हे सेना वा बलों के रक्षक! राजन्! तू (गोमतः) इन्द्रियों की शक्ति के उत्तेजक (सुतस्य) अभिषुत सोम के पान से (सु मत्स्व) अच्छे प्रकार हृष्ट हो (उ) और (तन्द्रयुः) धनादि सम्पत्ति के प्रमाद से आ-लस्ययुक्त (मा) मत (भुवः) हो। दृष्टान्त-(ब्रह्मेव) जैसे ब्राह्मण लोग प्रायः धनादि भोगसाधनों में रति न होने से उन का सञ्चय नहीं करते और इसी से प्रमाद नहीं करते तद्वत् ॥ ऋ० ८। ९२। ३० में भी ॥ ३ ॥ [ १८ ]

अथ द्वितीयतृचस्य-जेता माधुच्छन्दस ऋषिः। इन्द्रो देवता। अनुष्टुप्छन्दः॥

तत्र प्रथमा-

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३
इन्द्रं विश्वा अवीवृधन्त्समुद्रव्यचसं गिरः। रथीतमं रथीनां
१ २ ३ १ २ ३ १ २
वाजानां सत्पतिं पतिम् ॥१॥ (८२७)(व्याख्याता ३४३)

अथ द्वितीया-

३ १ २ २ ३ २ १ २
सख्ये त इन्द्र वाजिनो मा भेम शवसस्पते।
२ ३ १ २र ३ १ २ ३ १ २
त्वामभि प्रनोनुमो जेतारमपराजितम् ॥२॥ (८२८)

पदपाठः—सख्ये ४। ते ६। इन्द्र सं०। वाजिनः १। मा अ०। भेम क्रि०। शवसस्पते सं०। त्वाम् २। अभि प्रनोनुमः क्रि०। जेतारम्, अपराजितम् २॥

अन्वितपदार्थः—(इन्द्र) हे परमेश्वर ! वा हे राजन् ! वयं (ते) तव (सख्ये) सखित्वे आनुकूल्ये वर्त्तमानाः (वाजिनः) अन्नवन्तो बलवन्तश्च सन्तः (मा भेम) कुतश्चिद्भयं न प्राप्नुयाम। (शवसस्पते) हे बलपते ! (जेतारम्) सर्वोत्कृष्टत्वेन वर्त्तमानम् (अपराजितम्) न कस्माच्चिदऽपि पराभवं प्राप्नुवन्तम् (त्वाम्) (अभि प्र नोनुमः) सर्वतः प्रकर्षेण प्रशंसामः॥

नोनुम इत्यत्र णु स्तुतौ इत्यस्माद्धातोर्यङि—णोनः ६।१।६५ इति नत्वम्, यङोऽचि च २।४।७४ इति यङोलुक्, प्रत्ययलोपे प्रत्ययलक्षणम् १।१।६२ इति प्रत्ययलक्षणेन—सन्यङोः ६।१।९ इति धातोर्द्वित्वम्, गुणोयङ्लुकोः ७।४।८२ इति अभ्यासस्य गुणः, सनाद्यन्ताधातवः ३।१।३२ इति धातुसंज्ञायां, तिप्तस्झीत्यादिना ३।४।७८ लटोमस्, अदादिवद्भावात् अदिप्रभृतिभ्यः शपः २।४।७२ इति शपोलुक्॥ ऋग्वेदे तु १।११।२ प्रणोनुम इत्यन्तरेण णपाठः॥ २॥

भावार्थः—(इन्द्र) हे परमेश्वर ! वा हे राजन् ! (ते) तेरी (सख्ये) मित्रता= अनुकूलता में हम (वाजिनः) अन्न और बल वाले होते हुवे (मा भेम) किसी से न डरें। (शवसस्पते) हे बलपते ! (जेतारम्) जीतने वाले (अपराजितम्) किसी से भी न हारने वाले (त्वाम्) तुझ को (अभि प्र नोनुमः) सर्वतः अत्यन्त स्तुत करते हैं॥

अष्टाध्यायी ६।१।६५, २।४।७४, १।१।६२, ६।१।९, ७।४।८२, ३।१।३२, ३।४।७८, २।४।७२ के प्रमाण और ऋ० १।११।२ का पाठभेद संस्कृत भाष्य में देखिये॥ २॥

अथ तृतीया-

३ १र २र ३ २ ३ १ २र ३ १ २ ३ १र २र ३
पूर्वीरिन्द्रस्य रातयो न विदस्यन्त्यूतयः। यदा वाजस्य
१ २ ३ २ ३ १२ ३ २
गोमतः स्तोतृभ्यो मंहते मघम् ॥ ३ ॥ [१९](८२९)

पदपाठः-पूर्वीः १। इन्द्रस्य ६। रातयः १। न अ०। विदस्यन्ति क्रि०। ऊतयः १। यदा अ०। वाजस्य,गोमतः ६। स्तोतृभ्यः ४। मंहते क्रि०। मघम् २॥

अन्वितपदार्थः-(यदा) यस्मिन्काले (गोमतः) गोदक्षिणा-युक्तस्य (वाजस्य) विविधतण्डुलादिधान्यस्य (मघम्) धनं (स्तोतृभ्यः) ऋत्विग्भ्यः (मंहते) ददाति श्रद्धया तदा (इन्द्रस्य) परमेश्वरस्य (पूर्वीः) पूर्व्यः सनातन्यः (ऊतयः) रक्षाः (रातयः) अतुलदानक्रियाश्च (न) नैव (विदस्यन्ति) तस्य यजमानस्य श्रद्धालोरुपरि उपक्षिता भवन्ति ॥

अयं भावः-यो यजमानः श्रद्धापूर्वकं यज्ञं सदक्षिणं संपादयति परमात्मा कृपया तदधिकं धनधान्यादि तस्य वर्धयति तद्रक्षां च करोति भृशम् ॥

ऋग्वेदे तु ९। ११। ३ यदा=यदीति पाठः॥ मघमिति-धननाम निघं० २। १०॥ मंहते इति दानकर्मा निघं० ३। २०॥ पूर्वीरिति-वा छन्दसि ६। १। १०६ इति पूर्वसवर्णदीर्घः ॥३॥

भाषार्थः-(यदा) जब (गोमतः) गौ के सहित (वाजस्य) अन्न का (मघम्) धन (स्तोतृभ्यः) ऋत्विजों को (मंहते) कोई यजमान श्रद्धा से दान करता है तब (इन्द्रस्य) परमात्मा की (ऊतयः) रक्षायें और (रातयः) दानक्रियायें जो (पूर्वीः) सनातन हैं (न विदस्यन्ति) उस यजमान पर क्षीण नहीं होतीं॥

अर्थात् श्रद्धा और विधि से यज्ञ करते हुवे गौ आदि धन धान्य की दक्षिणा देने वाले यजमान को परमात्मा कृपया अनेक प्रकार के धन धान्यादि दान से उपस्कृत करता है और उस की रक्षा करता है ॥

ऋ० १ । ११ । ३ का पाठान्तर और निघण्टु २ । १०, ३ । १० अष्टाध्यायी ६ । १ । १०६ के प्रमाण संस्कृत भाष्य में देखिये ॥ ३ ॥

## इति द्वितीयप्रपाठके प्रथमोऽर्धः ॥

इति श्रीमत्कण्ववंशावतंस पण्डित हज़ारीलाल स्वामिसूनुना, हस्तिनापुरपार्श्ववर्त्तिपरीक्षितगढ़निवासिना तुलसीरामस्वामिना कृते सामवेदभाष्ये उत्तरार्चिके तृतीयाध्यायस्य षष्ठः खण्डः समाप्तः ॥

तृतीयोऽध्यायश्च समाप्तः ॥ ३ ॥

ओ३म्

# अथ चतुर्थोऽध्यायः

तत्र

प्रथमखण्डे—एते असृग्रमिति प्रथम तृचस्य—जमदग्निर्ऋषिः। पवमानः सोमोदेवता। गायत्री छन्दः॥ तत्र प्रथमा—

३१ २ ३ १ २ ३२ ३ १ २ ३ १ २
एते असृग्रमिन्दवस्तिरः पवित्रमाशवः।
१ २ ३ १ २र
विश्वान्यभि सौभगा॥ १॥ (८३०)

पदपाठः—एते १। असृग्रम् क्रि०। इन्दवः १। तिरः अ०। पवित्रम् २। आशवः १। विश्वानि २। अभि अ०। सौभगा २॥

अन्वितपदार्थः—(तिरः पवित्रम्) तिर्यग्गच्छन्तं दशापवित्रं प्रति (आशवः) शीघ्रगामिनः (एते) प्रत्यक्षाः (इन्दवः) सोमाः (विश्वानि) सर्वाणि (सौगभा) सौभगानि ऐश्वर्याणि (अभि) अभिलक्ष्य (असृग्रम्) सृज्यन्ते अग्नाविति शेषः॥

इदानीं तृतीयमहरारभ्यते इति विवरणकारः। ऋग्वेदे ९। ६२। १ ऽपि॥ १॥

भावार्थः—(तिरः पवित्रम्) तिरछे दशापवित्र के प्रति (आशवः) शीघ्र जानने वाले (एते) ये (इन्दवः) सोम (विश्वा) सब (सौभगा) सौभाग्यों को (अभि) लक्ष्य में रख कर (असृग्रम्) [अग्नि में] छोड़े जाते हैं॥

विवरणकार कहते हैं कि "अब तृतीय दिन का आरम्भ किया जाता है।" ऋ० ९। ६२। १ में भी॥ १॥

अथ द्वितीया—

३ १ २ ३ २ ३२ ३ २ ३ १ २ ३ १ २
विघ्नन्तो दुरिता पुरु सुगा तोकाय वाजिनः।

१ २ ३ २ ३ १२
त्मना कृण्वन्तो अर्वतः ॥ २ ॥ ( ८३१ )

पदपाठः—विघ्नन्तः १। दुरिता २। पुरु २। सुगा २। तोकाय ४। वाजिनः १। त्मना ३। कृण्वन्तः १। अर्वतः २॥

अन्वितपदार्थः—प्रकरणात्सोमाः (दुरिता) दुरितानि दुःखानि (विघ्नन्तः) नाशयन्तः (वाजिनः) बलवन्तो बलप्रदाश्च (तोकाय) सन्तानाय (पुरु) पुरून्बहून् (सुगा) सुगमान् (अर्वतः) अश्वान्प्राणान् [शतपथे ५।२।४।९](त्मना) आत्मना सह (कृण्वन्तः) कुर्वन्तः सन्तीति हेतोः सोमाः सेवनीया इति भावः॥ ऋग्वेदे तु९।६२।२ त्मना=तना, अर्वतः = अर्वते इति पाठः॥२॥

भाषार्थः—[प्रकरण से] सोम (दुरिता) दुःखों को (विघ्नन्तः) नष्ट करते हुवे (वाजिनः) बलयुक्त और बलदायक हैं तथा (तोकाय) सन्तान के लिये (पुरु) बहुत (सुगा) सुगम (अर्वतः) प्राणों के [शतपथ ५।२।४।९] (त्मना) आत्मा के सहित (कृण्वन्तः) करने वाले हैं इस लिये सोम सेवनीय हैं॥

ऋ० ९।६२।२ के पाठभेद संस्कृत भाष्य में देखिये॥२॥

अथ तृतीया—

३ २ ३ १ २ ३ २ ३ क २ र ३ २
कृण्वन्तो वरिवो गवेऽभ्यर्षन्ति सुष्टुतिम्।
१ २ ३ १ २ ३ १ २
इडामस्मभ्यꣳ संयतम् ॥३॥[१](८३२)

पदपाठः—कृण्वन्तः १। वरिवः २। गवे ४। अभ्यर्षन्ति क्रि०। सुष्टुतिम् २। इडाम् २। अस्मभ्यम् ४। संयतम् २॥

अन्वितपदार्थः—(गवे) इन्द्रियसमूहाय (इडाम्) अन्नं तद्रसं (संयतं कृण्वन्तः) संबद्धं कुर्वन्तस्तथा (अस्मभ्यम्) सोमसेविभ्यो नः (वरिवः) धनैश्वर्यं कुर्वन्तः सोमाः(सुष्टुतिम्)

शोभनां प्रशंसाम् ( अभ्यर्षन्ति ) अभितः प्राप्नुवन्ति ॥ ऋग्वेदे ९ । ६२ । ३ ऽपि ॥ ३ ॥

भाषार्थः-( गवे ) इन्द्रियों के लिये ( इडाम् ) अन्न के रस को ( संयतं कृण्वन्तः ) संबद्ध करते हुवे और ( अस्मभ्यम् ) हम सोमसेवियों के लिये ( वरिवः ) धनैश्वर्य करते हुवे सोम ( सुष्टुतिम् ) शोभन प्रशंसा को ( अभ्यर्षन्ति ) सर्वतः प्राप्त होते हैं ॥ ऋ० ९ । ६२ । ३ में भी ॥ ३ ॥

अथ द्वितीय तृचस्य-भृगुर्वारुणिर्जमदग्निर्वा ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः॥ तत्र प्रथमा-

१ २ ३ १ २   ३ १ २   ३ १र २र

राजा मेधाभिरीयते पवमानो मनावधि ।

३ १२ ३ १ २

अन्तरिक्षेण यातवे ॥ १ ॥ ( ८३३ )

पदपाठः-राजा १ । मेधाभिः ३ । ईयते क्रि० । पवमानः १। मनौ ७ । अधि अ० । अन्तरिक्षेण ३ । यातवे ४ ॥

अन्वितपदार्थः-( पवमानः ) शुद्धिं कुर्वन् (राजा ) सोमः [ सोमं राजानम् इत्यादिषु दृष्टत्वात् इति सायणोऽपि ] ( अन्तरिक्षेण ) आकाशमार्गेण (यातवे) यातुं (मनौ अधि) मनुर्यज्ञस्तस्मिन् ( मेधाभिः ) बुद्धितत्त्वैः सह (ईयते) प्राप्यते ॥ ऋग्वेदे ९ । ६५ । १६ ऽपि ॥ १ ॥

भाषार्थः-(पवमानः) शुद्धि करता हुवा ( राजा ) सोम [ सायणाचार्य ने भी "सोमं राजानम्" इत्यादि देखने से यही अर्थ किया है ] ( अन्तरिक्षेण) आकाशमार्ग से ( यातवे ) जाने के लिये ( मनौ अधि ) यज्ञ में (मेधाभिः ) बुद्धितत्त्वों के सहित ( ईयते ) प्राप्त होता है ॥ ऋ० ९। ६५ । १६ में भी ॥१॥

अथ द्वितीया-

१ २   ३ २३ १ २ ३ १   २र

आ नः सोम सहो जुवो रूपं न वर्चसे भर ।

३ २ ३१२
सुष्वाणो देववीतये ॥ २ ॥ ( ८३४ )

पदपाठः—आ अ० । नः ४ । सोम सं० । सहः, जुवः, रूपम् २ । न अ० । वर्चसे ४ । भर क्रि० । सुष्वाणः १ । देववीतये ४ ॥

अन्वितपदार्थः—(सोम) सोमः (देववीतये) देवेभ्यो दानाय होमाय ( सुष्वाणः ) अभिषूयमाणःसन् (नः) अस्मभ्यं (वर्चसे) तेजसे (सहः) शत्र्वभिभवनसमर्थं (जुवः) बलं ( रूपं ) सौन्दर्यं (न) च ( आभर ) आभरति आहरति प्रयच्छति ॥ ऋग्वेदे ९।६५।१८ ऽपि ॥ २ ॥

भाषार्थः—(सोम) सोम (देववीतये) देवतों को देने=होम के लिये ( सुष्वाणः ) अभिषुत किया हुवा ( नः ) हमारे लिये (वर्चसे ) तेज के निमित्त (सहः) शत्रुदमनयोग्य ( जुवः ) बल (न) और ( रूपम् ) सौन्दर्य ( आभर ) देता है ॥ ऋ० ९ । ६५ । १८ में भी ॥ २ ॥

अथ तृतीया—

१ २ ३ २ ३ २ ३ २ ३१ २
आ न इन्दो शातग्विनं गवां पोषं स्वश्व्यम् ।
२ ३ १ २ ३ १ २
वहा भगत्तिमूतये ॥ ३ ॥ [ २ ] ( ८३५ )

पदपाठः—आ अ० । नः ४ । इन्दो सं० । शातग्विनम् २ । गवाम् ६ । पोषम् , स्वश्व्यम् २ । वह क्रि० । भगत्तिम् २ । ऊतये ४ ॥

अन्वितपदार्थः—(इन्दो) इन्दुःसोमः (नः) अस्मभ्यं ( शातग्विनं ) बहुत्वविशिष्टेन्द्रियशक्तिमतीम् अतएव (गवाम् ) इन्द्रियाणां ( पोषं) पुष्टिं (स्वश्व्यं) शोभनानामश्वानां प्राणानां भावं (भगत्तिं) भगस्यैश्वर्यस्य दानम् ( ऊतये ) रक्षायै ( आ—वह ) आवहति प्रापयति ॥ ऋग्वेदे ९।६५।१७ऽपि ॥ ३ ॥

भावार्थः—( इन्दो ) सोम ( नः ) हमारे लिये ( शतग्विनम् ) बहुतसी इन्द्रियों की शक्ति वाली [ इसी से ] ( गवाम् ) इन्द्रियों की (पोषम्) पुष्टि, ( स्वश्व्यम् ) उत्तम अश्वों के भाव और ( भगत्तिम् ) ऐश्वर्य का दान ( ऊतये रक्षा के लिये ( आ—वह ) प्राप्त कराता है ॥ ऋ० ९ । ६५ । १७ में भी ॥३॥

तन्त्वा नृम्णानीति पञ्चर्चस्य तृतीयसूक्तस्य—कविर्भार्गवऋषिः ।
छन्दोदेवते उक्ते ॥ तत्र प्रथमा—

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २
तं त्वा नृम्णानि बिभ्रतꣳ सधस्थेषु महोदिवः ।
१ २ ३ १ २
चारुꣳ सुकृत्ययेमहे ॥ १ ॥ ( ८३६ )

पदपाठः—तम्, त्वा २ । नृम्णानि २ । बिभ्रतम् २ । सधस्थेषु ७ । महोदिवः ६। चारुम् २ । सुकृत्यया ३ । ईमहे क्रि० ॥

अन्वितपदार्थः—हे सोम!शान्तस्वरूप!परमात्मन्!(महोदिवः) महतआकाशस्य (सधस्थेषु) सहस्थानेषु सर्वलोकेषु ततोबहिश्च व्यापकं (नृम्णानि) धनानि बलानि वा ( बिभ्रतम् ) धारयन्तं (चारुं) शोभनमानन्दस्वरूपं (तं) वैदिकाऽनेकसूक्तस्तुतं (त्वा) त्वां (सुकृत्यया) सुकर्मणा (ईमहे) प्राप्नुमः ॥

नृम्णमिति धनबलयोर्नाम निघं० २।९, १०॥ऋग्वेदे९।४८।१ ऽपि ॥ १ ॥

भावार्थः—हे शान्तस्वरूप ! सोम ! परमात्मन् ! (महोदिवः) अनन्त आकाश के (सधस्थेषु) साथ वाले सब लोकों में और उस से भी बाहर व्यापक, ( नृम्णानि ) धनों वा बलों को (बिभ्रतम् ) धारते हुवे (चारुम् ) आनन्दस्वरूप (तम् ) उस अनेक वैदिक स्तोत्रों से स्तुत (त्वा) आप को ( सुकृत्यया ) सुकर्म से (ईमहे) हम पाते हैं ॥

निघण्टु २। ९, १० के प्रमाण संस्कृतभाष्य में देखिये॥ ऋ० ९।४८।१ में भी ॥१॥

अथ द्वितीया–

१ २ ३क २र ३ १ २ ३ १ २
संवृक्तधृष्णुमुक्थ्यं महामहिव्रतंमदम् ।
३ २ २र ३ १ २
शतं पुरो रुरुक्षणिम् ॥ २ ॥ ( ८३७ )

पदपाठः–संवृक्तधृष्णुम्, उक्थ्यम्, महामहिव्रतम्, मदम् २। शतम् २। पुरः २। रुरुक्षणिम् २ ॥

अन्वितपदार्थः—हे सोम ! परमात्मन् ! ( संवृक्तधृष्णुम् ) संवृक्ताधृष्णवोदुष्टा अनेन तम् ( उक्थ्यं ) स्तुत्यं ( महामहिव्रतं ) महनीयानन्तकर्माणं ( मदम् ) आनन्दस्वरूपं (शतं पुरः) असंख्यानि प्राणिशरीराणि ( रुरुक्षणिं ) मृत्युना नाशयन्तम् [ त्वा ईमहे ] इति पूर्वेण सम्बन्धः॥

महामहिव्रतमित्यत्र महदर्थकशब्दद्वयश्रुतेरतिमहत्त्वंगम्यते॥ ऋग्वेदे ९।४८।२पि ॥२॥

भावार्थः–हे सोम! परमात्मन्! (संवृक्तधृष्णुम्) शत्रुविनाशक (उक्थ्यम्) स्तुतियोग्य (महामहिव्रतम्) प्रशंसनीय अनन्त कर्मोंके कर्त्ता, (मदम्) आनन्दस्वरूप, ( शतम् ) असंख्य ( पुरः ) प्राणिदेहों के ( रुरुक्षणिम् ) मृत्यु द्वारा विनाशक (आप को हम पाते हैं) यह पूर्व मन्त्र से अनुवृत्ति है।।

महामहिव्रतम्–यहां महान् अर्थ के लिये दो शब्दों के प्रयोग से अत्यन्त महान् अर्थ लिया जाता है ॥ ऋ० ९।४८।२ में भी।।२।।

अथ तृतीया —

१ २ ३ २ ३क२र ३ १ २ ३ २
अतस्त्वा रयिरभ्ययद्राजानं सुक्रतो दिवः ।
३ १ २ ३ १ २
सुपर्णो अव्यथी भरत् ॥ ३ ॥ ( ८३८ )

पदपाठः–अतः५ । त्वा २ । रयिः १ । अभ्ययत् क्रि०।राजानम् २।सुक्रतो सं० । दिवः ६ । सुपर्णः, अव्यथी १ । भरत् क्रि० ।।

अन्वितपदार्थः—सोम ! शान्तस्वरूप ! परमात्मन् ! ( सुक्रतो ) हे प्रशस्तकर्मन् ! यतो भवान् ( सुपर्णः ) शोभनपालनः ( अव्यथी) निरञ्जनो निर्दुःखः (भरत् ) त्रिलोकीं पुष्णाति ( अतः ) अस्मात्कारणात् ( रयिः ) ऐश्वर्यकामः पुरुषः ( दिवः राजानं त्वा ) आकाशगतसर्वलोकलोकान्तराणां राजानं त्वाम् (अभ्ययत् ) अभितः शरणमागच्छति ॥ ऋग्वेदे तु९।४८।३ रयिमभि राजानम् इति अव्यथिरिति च पाठभेदः ॥ ३ ॥

भावार्थः—(सुक्रतो) हे उत्तम कर्मों के अधिष्ठाता! सोम! शान्तस्वरूप ! परमात्मन् ! क्योंकि ( सुपर्णः ) सुन्दर पालनादि गुणों वाले ( अव्यथी ) दुःखरहित निरञ्जन आप ( भरत् ) त्रिलोकी का पोषण करते हैं ( अतः ) इस से ( रयिः ) ऐश्वर्य और उसका चाहने वाला पुरुष ( दिवः ) आकाशगत लोकलोकान्तरों के (राजानम्) राजा (त्वा) आप को(अभ्ययत्) सब ओर से शरण लेता है ।। ऋ० ९ ।४८।३ का पाठान्तर संस्कृत भाष्य में देखिये ।। ३ ।।

अथ चतुर्थी—

१ २    ३ १ २   ३१    २र   ३ १ २

अधा हिन्वान इन्द्रियं ज्यायो महित्वमानशे ।

३    १   २र

अभिष्टिकृद्विचर्षणिः ॥ ४ ॥ ( ८३९ )

पदपाठः—अध अ० । हिन्वानः १ । इन्द्रियम् २ । ज्यायः, महित्वम् २ । आनशे क्रि० । अभिष्टिकृत्, विचर्षणिः १ ॥

अन्वितपदार्थः—( अध ) अथ च ( अभिष्टिकृत् ) अभीष्टफलदः ( विचर्षणिः ) विविधानां चर्षणीनां मनुष्याणां स्वामी, यद्वा—विशेषेण द्रष्टा साक्षी परमात्मा ( इन्द्रियम् ) इन्द्रेण परमात्मना स्वेन जुष्टं जगत् ( हिन्वानः ) प्रेरयन् ( ज्यायः ) प्रशस्तं ( महित्वं ) महत्त्वम् ( आनशे) प्राप्तो वर्त्तते ॥

इन्द्रियम्—इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रजुष्टमिन्द्रदत्तमि-

तिवा ५।२।९३ इति निपातनात् ॥ आनशे इति अशूङ् व्याप्तौ इत्यस्य रूपम् ॥ ऋग्वेदे ९।४८।५ ऽपि ॥ ४ ॥

भाषार्थः—( अध ) और ( अभिष्टिकृत् ) अभीष्टफलदाता ( विचर्षणिः ) विविध मनुष्यों का स्वामी, वा विशेष द्रष्टा जगत् का साक्षी परमात्मा ( इन्द्रियम् ) अपने आप से व्याप्त जगत् को ( हिन्वानः ) प्रेरित करता हुआ ( ज्यायः ) बड़े उत्तम ( महित्वम् ) महत्त्व को ( आनशे ) प्राप्त है ॥

अष्टाध्यायी ५।२।९३ इत्यादि प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ९।४८।५ में भी ॥ ४ ॥

अथ पञ्चमी—

१र २ ३ १ २ ३ २र ३ १ २
विश्वस्माइत्स्वर्दृशे साधारणꣳरजस्तुरम् ।
३ २ ३ २ ३ १ २
गोपामृतस्य विर्भरत् ॥ ५ ॥ ( ८४० )

पदपाठः—विश्वस्मै ४। इत् अ०। स्वर्दृशे ४। साधारणम्, रजस्तुरम्, गोपाम् २। ऋतस्य ६। विः १। भरत् क्रि० ॥

अन्वितपदार्थः—(रजस्तुरम्) रजसां लोकानां प्रेरयितारम् ( ऋतस्य ) यज्ञस्य ( गोपाम् ) गोपयितारम् (विश्वस्मै) सर्वस्मै ( स्वर्दृशे ) आनन्ददर्शनाय (साधारणम् इत्) सामान्येनैव वर्त्तमानं परमेश्वरं सौम्यं (विः) पक्षी जीवात्मा ( भरत् ) धारयेत् ध्यायेदित्यर्थः ॥

लोका रजांस्युच्यन्ते। निरु० ४।१९ परमात्मना धूलिगताणुवद्धारितत्वात् ॥ ऋग्वेदे ९।४८।४ ऽपि ॥ ५ ॥

भाषार्थः—(रजस्तुरम्) सूर्यादि लोकों के घुमाने वाले, (ऋतस्य) यज्ञ के ( गोपाम् ) रक्षक, ( विश्वस्मै ) सर्व (स्वर्दृशे) आनन्द दिखाने के लिये (साधारणम् ) साधारण (इत्) ही वर्त्तमान सोम शान्तस्वरूप परमात्मा का (विः) पक्षी जीवात्मा ( भरत् ) ध्यान करे ॥

निरुक्त ४।१९ का प्रमाण संस्कृत भाष्य में देखिये ।। लोकों को रज इस लिये कहा जाता है कि धूलिकण के समान परमात्मा ने धार रक्खे हैं ।। ऋ० ९। ४८। ४ में भी ।। ५ ।।

अथ तृचात्मकस्य चतुर्थसूक्तस्य–कश्यप ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः ।। तत्र प्रथमा–

३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
इषे पवस्व धारया मृज्यमानो मनीषिभिः। इन्दो
३ १ २र
रुचाभिगा इहि ।।१।। (८४१) व्याख्याता (५०५)

अथ द्वितीया–

३ १ २र ३ २ ३ १ २
पुनानोवरिवस्कृध्यूर्जं जनाय गिर्वणः ।
१२ ३ २ ३ १ २
हरे सृजान आशिरम् ।। २ ।। ( ८४२ )

पदपाठः–पुनानः १। वरिवः २। कृधि क्रि०। ऊर्जम् २। जनाय ४। गिर्वणः, हरे सं०। सृजानः १। आशिरम् २।।

अन्वितपदार्थः–(गिर्वणः) गीर्भिः प्रशस्य ! सोम ! परमात्मन् ! वा ओषधे! (हरे) धारक! वा हरितवर्णपरिणत!(आशिरम्) प्राणं ( सृजानः ) ददमानः ( पुनानः ) पवित्रतां कुर्वन् ( जनाय ) ध्यानयज्ञानुष्ठात्रे, वा देवयज्ञानुष्ठात्रे यजमानाय (वरिवः ) धनं सुखं वा ( ऊर्जं ) बलं च ( कृधि ) कुरु ।।

चिन्त्यमानः परमात्मा, हूयमानःसोमश्च यजमानस्य धनधान्यबलपौरुषादि वर्धयति ।।

पयः प्राणः ( शतपथे १२। ३। ५। २० ) इति ।। वरिव इति धननाम निघं० २। १० ।। ऋग्वेदे १। ६४। १४ ऽपि ।। २ ।।

भाषार्थः–( गिर्वणः ) वाणियों से प्रशंसनीय ! सोम ! परमात्मन् ! वा ओषधि ! (हरे) जगद्धर्ता ! वा हरित वर्ण हुवा सोम ( पुनानः ) शुद्धि करता

हुवा और ( आशिरम्) प्राण को (सृजानः) देता हुवा ( जनाय ) ध्यानयज्ञ वा देवयज्ञ के यजमान के लिये (वरिवः) धन वा सुख और (ऊर्जम्) बल संपादन ( कृधि ) कीजिये वा करता है ॥

ध्यान स्मरण किया परमात्मा वा हवन किया हुवा सोम यजमान के धन धान्य बल पौरुषादि को बढ़ाता है ॥

शतपथ १२ । ३ । ५ । २० निघण्टु २ । १० के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ९ । ६४ । १४ में भी ॥ २ ॥

अथ तृतीया–

३ २ ३१२ ३ १ २ ३ २
पुनानो देववीतय इन्द्रस्य याहि निष्कृतम् ।
३ २ ३ १ २ ३ २
द्युतानो वाजिभिर्हितः ॥३॥ [४] ( ८४३ )

पदपाठः–पुनानः १ । देववीतये ४। इन्द्रस्य ६। याहि क्रि० । निष्कृतम् २। द्युतानः १ । वाजिभिः ३ । हितः १ ॥

अन्वितपदार्थः–हे सोम ! शान्तस्वरूप ! परमात्मन् ! (पुनानः) पवित्रीकुर्वन् (द्युतानः) प्रकाशमानः ( वाजिभिः ) प्राणैः प्राणायामैः सह ( हितः ) धारितो ध्यातः ( देववीतये ) देवेषु विद्वत्सु भवद्भक्तेषु वीतये गतये ( इन्द्रस्य ) इन्द्रियाधिष्ठातुर्जीवस्य (निष्कृतं)संस्कृतं शुद्धमन्तःकरणं स्थानं (याहि) सर्वगत्वेन वर्त्तमानोऽपि साक्षाद्भावेन प्राप्तो भव ॥

ओषधिपक्षे–सोम ! ( पुनानः) पवित्रयन् (द्युतानः)प्रकाशमानः (वाजिभिः) हविष्मद्भिर्होत्रादिभिः ( हितः ) धारितः (देववीतये ) वाय्वादिषु गतये (इन्द्रस्य) विद्युतः ( निष्कृतं ) स्थानं (याहि) प्राप्नुहि होमद्वारेति शेषः ॥

वाजिभिरश्वैःप्राणैरिति (शतपथस्य ५ । २ । ४ । ९) तात्पर्यम्॥ ऋग्वेदे तु ९।६४।१५ वाजिभिर्यतः इति पाठः ॥ ३ ॥

भावार्थः-हे सोम ! शान्तस्वरूप ! निरुपद्रव ! परमात्मन् ! ( पुनानः ) अपवित्रों को पवित्र करने वाले, ( द्युतानः) अन्धियारे को उजियाला करने वाले, (वाजिभिः) प्राणाणामों के साथ ( हितः ) ध्यान=धारण किये हुवे आप ( देववीतये ) विद्वान् भक्त जनों को प्राप्त होने के लिये ( इन्द्रस्य ) इन्द्रियों के अधिष्ठाता जीव के ( निष्कृतम् ) शुद्ध किये हुवे अन्तःकरण स्थान में (याहि) सर्वग होने से वर्त्तमान भी साक्षात् अनुभूत हूजिये ॥

ओषधि के पक्ष में-सोम ! ( पुनानः ) पवित्रता और (द्युतानः) प्रकाश करता हुवा ( वाजिभिः ) हविष् वाले होता आदि से (हितः) धारण किया हुवा ( देववीतये ) वायु आदि देवों के प्राप्त होने के लिये ( इन्द्रस्य ) विजुली के ( निष्कृतम् ) स्थान अन्तरिक्ष को ( याहि ) प्राप्त हो [होमद्वारा]॥

शतपथ ५ । २ । ४ । ९ का प्रमाण और ऋ० ९ । ६४ । १५ का पाठभेद संस्कृत में देखिये ।। ३ ॥

बहिष्पवमानमुक्तम्, अथ सप्तदशस्तौमिकं भेदमाह-

इदानीमाज्यानि। तत्राग्नेयमाज्यमिति विवरणकारः

अथ द्वितीयखण्डे प्रथमतृचस्य-मेधातिथिःकाण्वऋषिः । अग्निर्देवता । गायत्री छन्दः ।। तत्र प्रथमा-

३ २ ३ १ २र ३ २ ३ १ २ ३ १ २
अग्निनाऽग्निः समिध्यते कविर्गृहपतिर्युवा ।
३ २ ३क २र
हव्यवाड् जुह्वास्यः ॥ १ ॥ ( ८४४ )

पदपाठः-अग्निना ३ । अग्निः १ । समिध्यते क्रि० । कविः, गृहपतिः, युवा, हव्यवाट्, जुह्वास्यः १ ।।

अन्वितपदार्थः-( कविः ) मेधातत्त्वोद्बोधकः ( गृहपतिः ) यज्ञानुष्ठानगृहस्य पालकः ( युवा ) नित्यतरुणः ( हव्यवाट् ) हविषां वाढा ( जुह्वास्यः ) जुहूमुखः ( अग्निः ) आहवनीयाख्यः ( अग्निना ) निर्मन्थनप्रणीतेनाग्निना सह ( समिध्यते ) सम्यक् प्रदीप्यते ॥

अध्यात्मपक्षे–( कविः ) ज्ञानी ( गृहपतिः ) गृहस्य देहस्य स्वामी ( युवा ) अमरोऽजरश्च [स्वरूपेण] ( हव्यवाट् ) कर्मफलस्य भोक्ता (जुह्वास्यः) वागास्यः (अग्निः) चेतनो जीवः(अग्निना)अनन्तज्ञानेनपरमात्मना(समिध्यते)प्राप्ततेजस्कोजायते॥

वागेव जुहूः। श० ११।५।६।३॥ हव्यवाडित्यत्र–वहश्च ३।२।६४ इति हव्ये ण्विः। णित्वात्–अचोञ्णितीति ७।२।११५ वृद्धिः। अन्तःपादत्वात्–हव्येऽनन्तःपादमिति ३।२।६४ न ञ्युट्। गतिकारकोपपदात्कृदिति ६।२।१३९ पूर्वपदप्रकृतिस्वरत्वम्॥ जुह्वास्यः–हूयतेऽनयेति जुहूः,हुवःश्लुवच्चेति (उणा० २।६१) क्विप्–अन्येभ्योऽपि दृश्यते ३।२।१७८ इत्यत्र–दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम् क्वचिद्दीर्घः क्वचित्संप्रसारणं क्वचिद्द्वे क्वचिद्ध्रस्वश्च, तथा च–क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणांदीर्घोऽसंप्रसारणं चेति वार्त्तिकेन दीर्घः, श्लुवद्भावात्–श्लौ ६।१।१० इति धातोर्द्वे, कुहोश्चुरिति ७।४।६२ चुत्वम् अभ्यासे चर्च ८।४।५४ इति जश्त्वम्, जुहूरास्यं यस्येति, बहुव्रीहौ प्रकृत्या पूर्वपदम् ६।२।१,पूर्वत्रासिद्धम् ८।२।१ इति पूर्वपदप्रकृतिस्वर एव शिष्यते। यणादेशे ( ६।१।६७ ) उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य ८।२।४ इति आकारस्य स्वरितः॥ ऋग्वेदे १।१२।६ ऽपि॥ १॥

भाषार्थः–विवरणकार कहते हैं कि–बहिष्पवमान कहा गया, अब सप्तदश स्तोम के भेद कहते हैं कि यहां से आज्यों का वर्णन है, जिस में यह आग्नेय आज्य का आरम्भ है॥ ( कविः ) मेधावत्त्वोद्बोधक ( गृहपतिः ) यज्ञानुष्टानसंपन्न घर का रक्षक ( युवा ) कभी वृद्ध न होने वाला ( हव्यवाट् ) हव्य पहुंचाने वाला (जुह्वास्यः) यज्ञपात्र जुहू जिस का मुख है (अग्निः) सो आवहवनीय अग्नि ( अग्निना ) अरणिमंथन से उत्पन्न हुवे अग्नि द्वारा ( समिध्यते ) भले प्रकार सुलगाया जाता है॥

अध्यात्मपक्ष में-( कविः ) ज्ञानी ( गृहपतिः ) गृहरूप देहका स्वामी ( युवा ) वास्तविक स्वरूप से अजर अमर ( हव्यवाट् ) कर्म फल का भोक्ता (जुह्वास्यः ) वाणीरूप मुख वाला ( अग्निः ) चेतन जीवात्मा ( अग्निना ) अनन्त ज्ञान वाले परमात्मा से (समिध्यते) भले प्रकार तेज प्राप्त करता है ॥

शतपथ ११ । ५ । ६ । ३ अष्टाध्यायी ३ । २ । ६४, ७ । २ । ११५, ३ । २ । ६४, ६ । २ । १३९, ३ । २ । १७८, ६ । १ । १०, ७ । ४ । ६२, ८ । ४ । ५४, ६ । २ । १, ८ । २ । १, ६ । १ । ६७, ८ । २ । ४ उणादि २ । ६१ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० १ । १२ । ६ में भी ॥ १॥

अथ द्वितीया-

१ २र ३ १ २ ३ १ २ ३ १ २
**यस्त्वामग्ने हविष्पतिर्दूतं देव सपर्यति ।**
१ २ ३ १ २
**तस्य स्म प्राविता भव ॥ २ ॥ ( ८४५ )**

पदपाठः- यः १ । त्वाम् २ । अग्ने सं० । हविष्पतिः १ । दूतम् २ । देव सं० । सपर्यति क्रि० । तस्य ६ । स्म अ० । प्राविता १ । भव क्रि० ॥

अन्वितपदार्थः-( देव ) दिव्यगुण! ( अग्ने ) (हविष्पतिः) हविष्मान् ( यः ) यजमानः ( दूतं ) देवानां हविःप्रापकं (त्वा) त्वां ( सपर्यति ) जुहोति ( तस्य ) यज्ञकर्तुः [ ( स्म ) पादपूरणे ] ( प्राविता ) प्रकर्षेण रक्षकः ( भव ) एधि ॥

ईश्वरपक्षे-( देव ) ( अग्ने ) ज्ञानस्वरूप! ( हविष्पतिः ) सुकर्मभागी ( यः ) उपासकः ( दूतं ) कर्मफलप्रापकं ( त्वा ) ( सपर्यति ) अर्चति उपास्ते (तस्य स्म प्राविता भव ) ॥ ऋग्वेदे १ । १२ । ८ ऽपि ॥ २ ॥

भाषार्थः-( देव ) दिव्यगुणयुक्त ! (अग्ने) अग्ने ! (हविष्पतिः) सामग्री वाला (यः) जो यज्ञकर्त्ता ( दूतम् ) हव्य पहुंचाने वाले ( त्वा ) तेरा (सपर्यति) होम करता है, ( तस्य ) उस का [ (स्म) पादपूरणार्थ है ] (प्राविता) अत्यन्त रक्षक ( भव ) हो ॥

ईश्वरपक्ष में-( देव ) हे देव ! ( अग्ने ) हे ज्ञानस्वरूप ! ( हविष्पतिः ) सुकर्म वासना रूप कर्मफल का भागी (यः) जो उपासक भक्त ( दूतम् ) कर्मफल पहुंचाने वाले ( त्वा ) आप की ( सपर्यति ) पूजा=उपासना करता है (तस्य स्म प्राविता भव ) उस के रक्षक हूजिये ।। ऋ०१ । १२ । ८ में भी ॥ २ ॥

अथ तृतीया-

२ ३ २ ३१२ ३१ २ ३ १ २
यो अग्निं देववीतये हविष्माँ आविवासति ।
१ २
तस्मै पावक मृडय ॥ ३ ॥ [ ५ ] ( ८४६ )

पदपाठः-यः १ । अग्निम् २ । देववीतये ४ । हविष्मान् १ । आविवासति क्रि० । तस्मै ४ । पावक सं० । मृडय क्रि० ॥

अन्वितपदार्थः-( यः हविष्मान् ) (देववीतये) देवेषु हव्यस्य गतये (अग्निं) प्रसिद्धम् (आविवासति) जुहोति (पावक ) अग्ने! ( तस्मै ) यजमानाय ( मृडय ) सुखं कुरु ॥

ईश्वरपक्षे-( यः ) ( हविष्मान् ) सुकर्मणामनुष्ठातोपासकः (देववीतये) दिव्यगतये (अग्निं) त्वां ज्ञानस्वरूपं परमात्मानम् ( आविवासति ) परिचरति ( तस्मै ) भवद्भक्ताय ( पावक ) पवित्र ! (मृडय) सुखमानन्दं प्रयच्छ ॥ विवासतिः परिचरणकर्मा निघं० ३ । ५ ॥ ऋग्वेदे १ । १२ । ९ ऽपि ॥३॥

भावार्थः-(यः) जो ( हविष्मान् ) हव्य सामग्री वाला (देववीतये) देवयजन के लिये ( अग्निम् ) अग्नि को ( आविवासति ) होमता है (तस्मै) उस के लिये ( पावक ) शोधक ! अग्ने ! ( मृडय ) सुख कर ॥

ईश्वरपक्ष में (यः) जो ( हविष्मान् ) सुकर्मानुष्ठाता उपासक (देववीतये) दिव्य गति के लिये ( अग्निम् ) ज्ञानस्वरूप परमात्मा को ( आविवासति ) उपासना=पूजन करता है [ निघं० ३ । ५ ] (तस्मै) उस के लिये ( पावक ) हे अपवित्रों को पवित्र करने वाले ! ( मृडय ) आनन्द दीजिये ।। ऋ० १ । १२ । ९ में भी ॥ ३ ॥

## अथ मैत्रावरुणमाज्यम्

(इति विवरणकारः)

अथ द्वितीयतृचस्य—मधुच्छन्दा वैश्वामित्र ऋषिः। मित्रावरुणौ देवते। गायत्री छन्दः॥ तत्र प्रथमा—

३ १ २ ३१२३ १२ ३ १ २
मित्रं हुवे पूतदक्षं वरुणं च रिशादसम्।
१२ ३२३ १ २
धियं घृताचीं साधन्ता॥ १॥ (८४७)

पदपाठः—मित्रम् २। हुवे क्रि०। पूतदक्षम्, वरुणम् २। च अ०। रिशादसम् २। धियम्, घृताचीम् २। साधन्ता २॥

अन्वितपदार्थः—अहं यजमानः (पूतदक्षं) पवित्रबलं (मित्रं) प्राणं, (रिशादसम्) रिशानां हिंसकानां मारकाणामणूनामदसं भक्षकं (वरुणम्) अपानं (च) (हुवे) उद्दिश्य जुहोमि। किं भूतौ प्राणापानौ (घृताचीं धियं) घृतमुदकमञ्चते भूमिं प्राप्यते यया धिया[येन कर्मणा] तां (साधन्ता) साध्नुवन्तौ॥

यथा मनुष्यादिप्राणिशरीरेषु प्राणाऽपानौ वर्त्तेते तथैवाऽन्तरिक्षेऽपि निरुक्तोक्तान्तरिक्षस्थानदेवतासु परिगणितौ प्राणाऽपानौ मित्रवरुणपदवाच्यौ व्याप्तौ भवतस्ततएव च मनुष्यादिप्राणिनां देहगौ प्राणाऽपानौ आप्यायितौ भवतस्तौ च मित्रावरुणावत्र होमेन यज्ञकर्मणा तर्पणीयाविति प्रतिपाद्यते। मित्रशब्दः प्राणाऽपरपर्यायः शतपथे६।३।६।५प्राणो वै मित्र इति, वरुणशब्दोऽपानाऽपरपर्यायश्च शतपथे१२।४।४।१२।अपानो वरुण इति। निरुक्तदशमाऽध्याये चारम्भ एव—अथातो मध्यस्थाना देवताः इत्युपक्रम्य, वरुणोवृणोतीति सतः। तस्यैषा भवति—नीचीनवारं वरुणःकवन्धं

प्रससर्ज रोदसी अन्तरिक्षम्। तेन विश्वस्य भुवनस्य राजा यवं न वृष्टिर्व्युनत्ति भूम। ऋ० ५।८५।३। नीचीनद्वारं वरुणः कवन्धं मेघम्। कवनमुदकं भवति तदस्मिन्धीयत उदकमपि कवन्धमुच्यते बन्धिरनिभृतत्वे कमनिभृतं च। प्रसृजति द्यावापृथिव्यौ चान्तरिक्षं च। महत्त्वेन तेन सर्वस्य भुवनस्य राजा यवमिव वृष्टिर्व्युनत्ति भूमिम् इत्यादि। तथा तत्रैव दशमाध्याये २१ खण्डे मित्रः प्रमीतेस्त्रायते संमिन्वानो द्रवतीति वा मेदयतेर्वा। तस्यैषा भवति २१—मित्रोजनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम्। मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत। ऋ० ३।५९।१ मित्रो जनानाऽऽयातयति ब्रुवाणः शब्दं कुर्वन् मित्र एव धारयति पृथिवीं च दिवं च। मित्रः कृष्टीरनिमिषन्विपश्यतीति कृष्टय इति मनुष्यनाम कर्मवन्तो भवन्ति विकृष्टदेहा वा। मित्राय हव्यं घृतवज्जुहोतेति व्याख्यातम्। जुहोतिर्दानकर्मा। निरु० १०।२२॥ इत्थं निरुक्तकृता भगवता यास्केनापि मित्रावरुणयोः कर्माणि निर्दिष्टानि अन्तरिक्षस्थानदेवतात्वं च॥

यजुर्वेदे ३३।५७ तथा ऋग्वेदे १।२।७ ऽपि॥ साधन्तावित्यत्र—साध संसिद्धावित्यस्माद्धातोः (स्वा० ५०) अन्तर्भावितण्यर्थाल्लटः श्नुं बाधित्वा—व्यत्ययोबहुलमिति ३।१।८५ शप्, अदुपदेशत्वाच्छतृप्रत्ययस्य लसार्वधातुकानुदात्तत्वम्, द्वितीयाद्विवचनस्य शपश्च—अनुदात्तौ सुप्पित्तौ ३।१।४ इत्यनुदात्तत्वे, धातोः ६।१।१६२ इति अन्तोदात्तः स्वरः। सुपां सुलुगित्यादिना ७।१।३९ विभक्तेराकारादेशः॥ १॥

भावार्थः—मैं यज्ञकर्त्ता यजमान ( पूतदक्षम् ) पवित्र बल वाले (मित्रम्) प्राणवायु ( च ) और ( रिशादसम् ) हिंसक दुःखदायक वायु आदि के शत्रुओं के नाश करनेवाले ( वरुणम् ) अपानवायु को ( हुवे ) उद्देश करके होम करता हूं। जो कि प्राण और अपान (घृताचीं,धियम्) जल वर्षाने वाले, कर्म को ( साधन्ता ) साधनेवाले हैं ॥

जिस प्रकार मनुष्यादिप्राणियों के शरीर में प्राण अपान वायु हैं इसी प्रकार अन्तरिक्ष में भी प्राण और अपान व्याप्त हैं,जोकि निरुक्त के अनुसार अन्तरिक्षस्थान देवतों में गिने गये हैं।उन का दूसरा नाम यहां मित्र और वरुण है। वे ही अन्तरिक्ष में फैले हुवे मित्रावरुण=प्राणाऽपान मनुष्यादिदेहस्थ प्राणाऽपान का आप्यायन करते हैं, उन के उत्तम शुद्ध तृप्त बनाने के लिये इस मन्त्र में होम करने का विधान सिद्धानुवाद से वर्णित है। शतपथ ६। ३। ६। ५ में मित्र=प्राण और श० १२। ४। ४। १२ में वरुण=अपान का नाम है। निरुक्त अ० १० खण्ड १ और ३ में मध्यस्थान देवतों के शीर्षक ( हेडिङ्ग ) में वरुण का व्याख्यान है और ऋ० ५। ८५। ३ ( देखो मूलमन्त्र पृ० ९९३ पं०२२ में ) का प्रमाण देकर निरुक्तकार ने वरुण=अपान वायु के काम बताये हैं कि वह मेघ को वर्षाता है, नीचा करता है, वह द्युलोक, पृथिवीलोक और अन्तरिक्ष लोक को तर करता है, इस से वह सब भुवन का राजा कहाता है, वह जैसे वृष्टि खेती को तर करती है, वैसे पृथिवी को गीला और तर करता है। फिर उसी अ० १० खण्ड २१। २२ में मित्र=प्राण वायु का व्याख्यान करते हुवे ऋ० ३।५९।१ का प्रमाण देकर (देखो मन्त्र पृ० ९९४ पं० ८) मित्र=प्राण के काम बताये हैं कि वह शब्द करता है, प्राणियों को जीवित रखता=मृत्यु से बचाता है, इस लिये प्राण पृथिवी और द्युलोक के प्राणिवर्ग का धारक है, प्राण प्रतिक्षण मनुष्यादि प्राणियों पर अपना प्रभाव रखता है,जिस से मनुष्यादि कर्म करने में समर्थ होते हैं। उस प्राण के लिये घृत मिले चरु से होम करो इत्यादि ॥

अष्टाध्यायी ३। १। ८५, ३। १। ४, ६। १। १६२, ७। १। ३९ इत्यादि के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० १।२।७ और यजुः ३३।५७ में भी॥१॥

अथ द्वितीया—

३ १ २

ऋतेन मित्रावरुणावृतावृधावृतस्पृशा ।

१२ ३१२
क्रतुं बृहन्तमाशाथे ॥ २ ॥ ( ८४८ )

पदपाठः—ऋतेन ३। मित्रावरुणौ, ऋतावृधौ १। ऋतस्पृशा १। क्रतुम्, बृहन्तम् २। आशाथे क्रि० ॥

अन्वितपदार्थः—( ऋतावृधौ ) यज्ञेन वृद्धिशीलौ ( ऋतस्पृशा ) अतएव यज्ञस्पर्शशीलौ ( मित्रावरुणौ ) प्राणाऽपानौ ( ऋतेन ) अनुष्ठितेन यज्ञेन ( बृहन्तं क्रतुम् ) महत् कर्म (आशाथे) अश्नुतः ॥

ऋतमित्युदकनाम निरु० २।२५ (निघं० १।१२) सत्यं वा यज्ञं वा। निरु० ४।१९ ॥ ऋग्वेदे १।२।८ ऽपि ॥ २ ॥

भाषार्थः—( ऋतावृधौ ) यज्ञ से बढ़ने और ( ऋतस्पृशौ ) यज्ञ को स्पर्श करने के स्वभाव वाले ( मित्रावरुणौ ) प्राण और अपान ( ऋतेन ) अनुष्ठित किये यज्ञ से ( बृहन्तं क्रतुम् ) बड़े कर्म को ( आशाथे ) व्यापते हैं॥ निरुक्त २।२५, ४। १९ और निघण्टु १।१२ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० १।२।८ में भी ॥ २ ॥

अथ तृतीया—

३१ २ ३१ २र ३१ २३१२
कवी नो मित्रावरुणा तुविजाता उरुक्षया।
१२ ३१२
दक्षं दधाते अपसम् ॥ ३ ॥ [ ६ ] ( ८४९ )

पदपाठः—कवी १। नः। ६ मित्रावरुणा, तुविजाता, उरुक्षया १। दक्षम् २। दधाते क्रि ०। अपसम् २॥

अन्वितपदार्थः— ( कवी ) बुद्धिवर्धकौ ( तुविजाता ) बहुजातौ (उरुक्षया) बहुनिवासौ (मित्रावरुणा) प्राणाऽपानौ ( नः ) अस्माकं (दक्षं) बलम् ( अपसम् ) कर्म पुरुषार्थं च (दधाते) ॥

मित्रावरुणौइत्यत्र–देवताद्वन्द्वे च ६ । ३ । २६ इति पूर्वपदस्याऽऽनङ् । मित्रशब्दः–फिषोऽन्तउदात्तः (१ । १) इतिफिट्सूत्रेणान्तोदात्तः ॥ वरुणशब्दः–ञ्नित्यादिर्नित्यम् ( ६।१।१९७) इत्याद्युदात्तः ॥ तुविजातौ–तुविइति बहुनाम निघं० ३ । १ तुवीनां बहूनामुपकारकतया जातौ । उरुक्षयौ–उरुइतिबहुनाम निघं० ३।१ क्षि निवासगत्योः (तु० प०) क्षियन्त्यस्मिन्निति क्षयो-निवास इत्यधिकरणेऽच् तस्य च, चितः ६।१।१६३ इतिअन्तोदात्तत्वे प्राप्ते, क्षयोनिवासे ६।१।२०१ इत्याद्युदात्तत्वं विहितम्, समासे तु–समासस्य ६ । १ । २२३ इत्यन्तोदात्तत्वंबाधित्वा, गतिकारकोपपदात्कृदिति ६ । २ । १३९ प्राप्तमुत्तरपदाद्युदात्तत्वं यद्यपि थाऽथघञ्क्ताऽजबित्रकाणाम् ६ । २ । १४४ इत्यन्तोदात्तत्वेन बाध्यते, तथापि–परादिश्छन्दसि बहुलम् ६ । २ । १९९ इत्युत्तरपदाद्युदात्तत्वं ज्ञेयम् । दक्षम् इति–दक्षतेरुत्साहकर्मणो ञित्वादाद्युदात्तः (६ । १ । १९७) ॥ दक्ष इति बलनाम निघं० २ । ९अप इति कर्मनाम निघं०२।१॥ ऋग्वेदे १।२।९ऽपि ॥ ३ ॥

भावार्थः—( कवी ) बुद्धिवर्धक ( तुविजाता) बहुतों के उपकारक होकर उत्पन्न ( उरुक्षया ) बहुत निवास वाले ( मित्रावरुणा ) प्राण और अपान (नः) हमारे (दक्षम्) बल और (अपसम्) कर्म का (दधाते) धारण करते हैं ॥

अष्टाध्यायी ६ । ३ । २६, ६ । १ । १९७, ६ । १ । १६३, ६ । १ । २०१, ६ । १ । २२३, ६ । २ । १४४, ६ । २ । १९९ फिट्सूत्र १ । १ निघण्टु ३ । १, २ । १, २ । ९ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ १ । २ । ९ में भी ॥ ३॥

## अथैन्द्रमाज्यम्

( इति विवरणकारः )

अथ तृतीयतृचस्य–मधुच्छन्दाः वैश्वामित्र ऋषिः । मरुद्गण इन्द्रश्च देवता। गायत्री छन्द : ॥ तत्र प्रथमा–

१ २ १ ३ २र ३ १ २र
इन्द्रेण सं हि दृक्षसे संजग्मानो अबिभ्युषा।
३ १ २ ३ १ २
मन्दू समानवर्चसा ॥ १ ॥ ( ८५० )

पदपाठः–इन्द्रेण ३। सं, हि अ०। दृक्षसे क्रि०। संजग्मानः १। अबिभ्युषा ३। मन्दू, समानवर्चसा १॥

अन्वितपदार्थः– हे जीवात्मन्! त्वं (हि) निश्चयेन (अबिभ्युषा) निर्भयेनाद्वितीयेन (इन्द्रेण) परमात्मना (संजग्मानः) संगतः मोक्षंप्राप्तः (संदृक्षसे) यदा ज्ञायसे तदा परमेश्वरः त्वं च (मन्दू) आनन्दितौ (समानवर्चसा) चेतनत्वसामान्येन समानतेजस्कौ [ न तु सर्वांशेषु ] भवतः ॥

भौतिकपक्षे–मरुद्गणः (हि) (अबिभ्युषा) अधृष्येण (इन्द्रेण) विद्युत्तत्वेन (संजग्मानः) संगतः (संदृक्षसे) संप्रकाशते यदा तदा (मन्दू) मरुद्गण इन्द्रश्च प्रकाशमानौ (समानवर्चसा) समतेजस्कौ भातः॥ आकाशगतमेघेषु या सौदामिनी पुनः पुनः प्रकाशते सा मरुतां संघर्षेण प्रकाशते इति ह्यत्रोपदिष्टं बोध्यम्॥ ऋग्वेदे१।६।७ ऽपीयमृग्वर्त्तते तत्रत्या च भगवता यास्केनैवं व्याख्याता निरुक्ते ४।१२ "इन्द्रेणहिसंदृश्यसे संगच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम्" इति ॥ १ ॥

भावार्थः–हे जीवात्मन्! तू (अबिभ्युषा) भयरहित निर्भय (इन्द्रेण) परमात्मा से (हि) ही (संजग्मानः) मिला हुवा [ मुक्त हुवा ] (संदृक्षसे) जब जाना जाता है तब (मन्दू) तुम परमात्मा और जीवात्मा दोनों आनन्दयुक्त (समानवर्चसा) समान तेज वाले होते हो। यह समानता चेतनत्वधर्म को लेकर कही गई है, सर्वांश में नहीं ॥

भौतिकपक्ष में—मरुद्गण (हि) निश्चय करो कि (अबिभ्युषा) अधृष्य (इन्द्रेण) बिजुली से (संजग्मानः) सङ्गत हुवा जब ( संदृक्षसे ) चमकता है तब (मन्दू) मरुद्गण और बिजुली दोनों खिले हुवे(समानवर्चसा) समतेज जान पड़ते हैं॥

इस से यह उपदेश किया गया है कि यह जो आकाश में बिजुली (मेघों में ) चमकती है सो वायुवों (मरुतों) की रगड़ से चमकती है ॥ यह ऋचा ऋ० १ । ६ । ७ में भी आई है सो निरुक्त ४ । १२ में यास्कमुनि ने इसप्रकार व्याख्यात किई है कि ( देखो संस्कृतभाष्य पृ० ९९८ पं० १६ ) " अधृष्य गण बिजुली से मिलता हुवा दीखता ( चमकता ) है, दोनों प्रकाशमान होते हैं वा 'समानवर्चसा' को तृतीया का १ वचन मान कर यह व्याख्या समझो कि सम तेज वाले, ( मन्दू=मन्दुना ) प्रकाशयुक्त विद्युत्तत्त्व से मरुद्गण प्रकाशित होता है" ।। १ ।।

अथ द्वितीया—

१ २र ३ २उ ३ १ २३ १ २ ३ २
आदह स्वधामनु पुनर्गर्भत्वमेरिरे ।
१ २ ३ १ २ ३ १ २
दधाना नाम यज्ञियम् ॥२॥(८५१)

पदपाठः—आत्, अह अ० । स्वधाम् २ । अनु, पुनः अ० । गर्भत्वम् २। एरिरे क्रि० । दधानाः १ । नाम, यज्ञियम् २ ।।

अन्वितपदार्थः—जीवात्मन् ! इन्द्र ! ( स्वधाम् ) पृथिवीं द्यां च ( अनु) अनुलक्ष्य ( आत् अह) मोक्षानन्दाऽनुभवानन्तरमाश्चर्यं यथा स्यात्तथा ( यज्ञियम) यज्ञसंबन्धि (नाम ) नामकं बलं (दधानाः) धारयन्तः प्राणादयो मरुतः ( पुनः ) पुनरावृत्त्या (गर्भत्वम् ) गर्भभावम् (एरिरे) प्रेरयन्ति ॥

भौतिकपक्षे—( यज्ञियम् ) यज्ञसंपन्नं (नाम ) नामकमुदकं (दधानाः) धारयमाणाः मरुतः ( स्वधां ) जलमन्नं वा ( अनु ) अनुलक्ष्य ( आत् अह ) वर्षर्त्तोरनन्तरं साश्चर्यं ( पुनः ) पुनः

पुनः प्रतिसंवत्सरं (गर्भत्वम्) गर्भभावमिन्द्रस्य विद्युतः (एरिरे) प्रेरयन्ति ॥

स्वधे इति द्यावापृथिव्योर्नाम निघं० ३ । ३० ॥ अहइति च ह इति च विनिग्रहार्थीयौ पूर्वेण संप्रयुज्येते । निरु० १।५॥ निपातौ–निपाता आद्युदात्ता इति शान्तनवेन फिट्सूत्रेण ४। १२ आद्युदात्तौ, अनुपुनःशब्दौ च तथा ॥ स्वं दधातीति स्वधा, स्वधेति जलनाम निघं० १ । १२ अन्ननाम च तत्रैव २ । ७॥ ऋग्वेदे १ । ६ । ४ ऽपि ॥ २ ॥

भाषार्थः–जीवात्मन् ! इन्द्र ! (स्वधाम्) पृथिवी और द्युलोक को लक्ष्य करके ( आत् अह ) मोक्षानन्द के अनुभव के अनन्तर आश्चर्य के साथ (यज्ञियम् ) यज्ञसंबन्धी ( नाम ) नमाने वाले बल को (दधानाः ) धारण करते हुवे मरुद्गण वायु तुझ को ( पुनः ) फिर ( गर्भत्वम् ) गर्भभाव को ( एरिरे) प्राप्त करते हैं ।।

भौतिक पक्ष में–( यज्ञियम् ) यज्ञ से संपन्न ( नाम ) नमाने वाले जल को ( दधानाः ) धारण करते हुवे मरुद्गण (स्वधाम् ) जल वा अन्न को (अनु) लक्ष्य करके ( आत् अह ) वर्षा ऋतु के पश्चात् आश्चर्य के साथ (पुनः) पुनः पुनः प्रतिवर्ष (गर्भत्वम्) इन्द्र और बिजली के गर्भभाव को (एरिरे)प्राप्त करते हैं॥

निघण्टु ३ । ३०,१ । १२ फिट्सूत्र ४ । १२ निरुक्त १ । ५ के प्रमाण संस्कृत भाष्य में देखिये । ऋ० १ । ६ । ४ में भी ॥ २ ॥

अथ तृतीया–

३ १ २ ३ २ ३ १ २ ३ १ २
वीळु चिदारुजत्नुभिर्गुहा चिदिन्द्र वन्हिभिः ।
१ २ ३ २ ३ १ २
अविन्द उस्त्रिया अनु ॥ ३ ॥ [७] ( ८५२ )

पदपाठः–वीळु २ । चित् अ० । आरुजत्नुभिः ३ । गुहा १ । चित् अ० । इन्द्र सं० । वह्निभिः ३ । अविन्दः क्रि० । उस्त्रियाः २ । अनु अ० ॥

अन्वितपदार्थः-( इन्द्र ) इन्द्रियाधीश ! जीवात्मन् ! एवं जन्म गृह्णन् त्वं ( गुहा ) गुहायां ( चित् ) अपि दुर्गेऽपि (वीळु) दृढं ( चित् ) अपि आवरणम् ( आरुजत्नुभिः ) अभिभञ्जद्भिः (वह्निभिः) वोढृभिः पथदर्शकैर्ज्ञानाग्निभिः (उस्त्रियाः) गाः पञ्चज्ञानेन्द्रियाणि (अनु) अनुसृत्य (अविन्दः) प्राप्तव्यं विषयं प्राप्नोषि॥

भौतिकपक्षे-( इन्द्र ) विद्युत् वा सूर्य ! ( गुहा चित् ) गह्वरेष्वपि ( वीळु चित् ) दृढमपि हर्म्यादिकम् ( आरुजत्नुभिः ) अभिभञ्जद्भिः ( वह्निभिः ) अग्निभिः किरणैर्वा ( उस्त्रियाः ) गाः पृथिव्यादिलोकान् (अनु) अनुलक्ष्य (अविन्दः) प्राप्नोषि ॥

वीळु इति बलनाम निघं० २ । ९ तद्युक्तं दृढम् ॥ उस्त्रिया इति गोनाम निघं० २ । ११ ॥ गौरिति पृथिवीनाम निघं० १ । १ ॥ ऋग्वेदे १ । ६ । ५ ऽपि ॥ ३ ॥

भाषार्थः-( इन्द्र ) इन्द्रियों के प्रवर्त्तक जीवात्मन् ! इस [ पूर्वमन्त्रोक्त ] रीति से जन्म ग्रहण करता हुआ तू ( गुहा ) छिपी जगह में ( चित् ) भी और (वीळु) दृढ को (चित्) भी (आरुजत्नुभिः) वेधन करने वाले (वह्निभिः) मार्गदर्शक ज्ञानाग्नियों से ( उस्त्रियाः ) पञ्चज्ञानेन्द्रियों के ( अनु ) अनुसार होकर ( अविन्दः ) प्राप्तव्य विषय को प्राप्त होता है ।।

भौतिक पक्ष में-( इन्द्र ) विजुली वा सूर्य ( गुहा चित् ) गह्वरस्थानोंमें भी ( वीळु चित् ) दृढ महल आदि को भी (आरुजत्नुभिः) भङ्ग कर डालने वाले ( वह्निभिः ) अग्नियों वा किरणों से ( उस्त्रियाः ) पृथिव्यादि लोकों को ( अनु अविन्दः ) प्राप्त होता है ।।

निघण्टु २ । ९, २ । ११, १ । १ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० १ । ६ । ५ में भी ।। ३ ॥

अथ चतुर्थतृचस्य-भरद्वाज ऋषिः । इन्द्राग्नी देवते । गायत्री छन्दः ॥

तत्र प्रथमा-

१ २३ १२ ३२ ३१ २र ३ २ ३ २
ता हुवे ययोरिदं पप्ने विश्वं पुरा कृतम् ।
३ १ २र
इन्द्राग्नी न मर्धतः ॥ १ ॥ ( ८५३ )

पदपाठः—ता २ । हुवे क्रि० । ययोः ६ । इदम् १ । पप्ने क्रि० । विश्वम् १ । पुरा अ० । कृतम् १ । इन्द्राग्नी १ । न अ० । मर्धतः क्रि० ॥

अन्वितपदार्थः—अथैन्द्राग्नमाज्यम्—( ययोः ) इन्द्राग्न्योः सूर्याग्न्योः (पुरा) सृष्ट्यारम्भकाले ( कृतम् ) साहाय्येन संपन्नम् ( इदं विश्वम् ) चराऽचरं ( पप्ने ) प्रशस्यते (ता) तौ इन्द्राग्नी उद्दिश्य (हुवे) जुहोमि । यतः (इन्द्राग्नी ) तावुभौ (न मर्धतः) न हिंस्ताम् दुःखदौ न भवेताम् ॥

पप्ने इति पन्यतेरूपम् ॥ ऋ० ६।६०।४ऽपि ॥ १ ॥

भाषार्थः—अब इन्द्राग्नि के उद्देश का आज्य कहते हैं—( ययोः ) जिन दोनों की ( पुरा ) सृष्टि के आरम्भ काल में ( कृतम् ) सहायता से बना ( इदं विश्वम् ) यह चराऽचर जगत् ( पप्ने ) प्रशंसित किया जाता है (ता) उन इन्द्र और अग्नि को (हुवे) उद्देश करके होम करता हूं, जिस से (इन्द्राग्नी ) वे सूर्य और अग्नि ( न मर्धतः ) दुःखदायक न हों ॥

ऋ० ६ । ६० । ४ में भी ॥ १ ॥

अथ द्वितीया—

३ १ २ ३ २ ३ १ २ ३ १ २
उग्रा विघनिता मृध इन्द्राग्नी हवामहे ।
१ २ ३ १ २
ता नो मृडात ईदृशे ॥ २ ॥ ( ८५४ )

पदपाठः—उग्रा, विघनिता २ । मृधः २ । इन्द्राग्नी २ । हवामहे क्रि० । ता १ । नः २ । मृडातः क्रि० । ईदृशे १ ॥

अन्वितपदार्थः—वयम् (उग्रा) उग्रौ उद्गीर्णबलौ ( मृधः विघनिता ) रोगादिशत्रून् हतवन्तौ ( इन्द्राग्नी ) सूर्यमग्निं च ( हुवामहे) उद्दिश्य होमं करवाम ।(ईदृशे)एवं भूते यज्ञेऽनुष्ठिते सति (ता) तौ ( नः ) अस्मान् (मृडातः) सुखयताम् ॥ ऋग्वेदे ६ । ६० । ५ ऽपि ॥ २ ॥

भावार्थः—( उग्रा ) बलिष्ठ ( मृधः विघनिता ) रोगादि शत्रुओं को नष्ट करने वाले ( इन्द्राग्नी ) सूर्य और अग्नि को ( हुवामहे) उद्दिष्ट करके हम होम करें ।(ईदृशे) ऐसा यज्ञ करने पर (ता) वे दोनों (नः) हम को (मृडातः) सुखदायक हों ॥ ऋ० ६ । ६० । ५ में भी ॥ २ ॥

अथ तृतीया—

२ २ २१ २र ३ १ २र
हथो वृत्राण्यार्या हथो दासानि सत्पती ।
३ २उ ३ २ ३ १ २
हथो विश्वा अप द्विषः ॥३॥ [८] (८५५)

पदपाठः—हथः क्रि० । वृत्राणि २ । आर्या ६।हथः । दासानि २। सत्पती१। हथः । विश्वाः २ । अप अ० । द्विषः २ ॥

अन्वितपदार्थः—( सत्पती ) सतां यज्ञानुष्ठातॄणां रक्षकौ सूर्याग्नी ( आर्या ) आर्याणां धर्मात्मनां (वृत्राणि) अवरोधकानि द्रव्याणि ( हथः ) नाशयताम् ( दासानि ) तेषामुपक्षयकराणि (हथः) । (विश्वाः) समस्ताः ( द्विषः ) हानिकरीः प्रजाः ( अप हथः ) दूरस्ताः कुरुताम् ॥

अग्न्यादिदेवानुकूल्येन रोगादिनिवृत्त्या सुखमस्माकं भवेदिति तात्पर्यम् ॥ ऋग्वेदे तु ६ । ६० । ६ हथः = हत इति भेदः॥३॥

भाषार्थः–( सत्पती ) यज्ञानुष्ठानी सत्पुरुषों के रक्षक सूर्य और अग्नि ( आर्या ) आर्यों के ( वृत्राणि ) रोकने वाले द्रव्यों का ( हथः ) नाश करें। ( दासानि ) उन के उपक्षयकारक पदार्थों का (हथः) निवारण करें और उन की (विश्वाः द्विषः) सब हानिकारिणी प्रजाओं को ( अप हथः ) दूर करें॥

अग्न्यादि दिव्य पदार्थों की अनुकूलता से रोगादि की निवृत्तिद्वारा हम को सुख हो, यह भाव है ।।

ऋ० ६ । ६० । ६ का पाठान्तर संस्कृत भाष्य में देखिये ।। ३ ।।

## उक्तं प्रातःसवनम् ॥

(इति विवरणकारः)

## इदानीं माध्यंदिनं सवनमुच्यते इति विवरणकारः॥

विवरणकार कहते हैं कि " अब माध्यन्दिन सवन का आरम्भ किया जाता है" ।।

अथ तृतीयखण्डे प्रथमतृचस्य विश्वामित्र ऋषिः ।
सोमो देवता । बृहती छन्दः ॥ तत्र प्रथमा–

३ १ २र ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २र
अभि सोमास आयवः पवन्ते मद्यं मदम्। समुद्रस्याधि-
३ १ २ ३ १ २ ३ १ २ ३ १ २
विष्टपे मनीषिणो मत्सरासो मदच्युतः ॥१॥ (८५६)

व्याख्याता (५१८)

अथ द्वितीया–

१ २ ३ १ २र ३ २ ३ १ २ ३ २ ३ २॰३ २ १ २
तरत्समुद्रं पवमान ऊर्मिणा राजा देव ऋतं बृहत् । अर्षा
३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २
मित्रस्य वरुणस्य धर्मणा प्रहिन्वान ऋतं बृहत्॥२॥ (८५७)

पदपाठः–तरत् क्रि० । समुद्रम् २ । पवमानः १ । ऊर्मिणा ३ । राजा, देवः १ । ऋतम्,बृहत् २ । अर्ष क्रि० । मित्रस्य,वरुणस्य ६ । धर्मणा ३ । प्र अ० हिन्वानः १ । ऋतम्, बृहत् २ ।।

अन्वितपदार्थः-(राजा) प्रकाशमानः (देवः) दिव्यस्वरूपः सोमः शान्तात्मा पुरुषः (पवमानः) स्वयं पवित्रोऽन्येषां पावकः (ऊर्मिणा) तरङ्गेण वेगेन सह वर्त्तमानं (बृहत्) महत् (ऋतम्) सत्यसंकल्पं (समुद्रम्) मनः (तरत्) तरति मनोनिग्रहं करोति। अथ च (मित्रस्य) प्राणस्य (वरुणस्य) अपानस्य च (धर्मणा) धारणेन प्राणायामेन (हिन्वानः) उन्नतिं कुर्वन् (बृहत्) महत् (ऋतम्) सत्यं ब्रह्म (प्राऽर्ष) प्रार्षति प्राप्नोति ॥

मनो वै समुद्रो मनसो वै समुद्राद्वाचाभ्रया देवास्त्रयीं विद्यां निरखनन् । श० ७ । ४ । २ । ५२ ॥ ऋग्वेदे तु ९।१०७। १५ अर्षा = अर्षदिति पाठः ॥ २ ॥

भावार्थः-(राजा) प्रकाशमान (देवः) दिव्यस्वरूप (पवमानः) स्वयं पवित्र और दूसरों को पवित्रशिक्षा देने वाला पुरुष (ऊर्मिणा) तरङ्गसहित (बृहत्) बड़े (ऋतम्) सत्यसंकल्प (समुद्रम्) मन को (तरत्) पार हो जाता है=मन का निग्रह करलेता है और (मित्रस्य) प्राण और (वरुणस्य) अपान के (धर्मणा) धारण=प्राणायाम द्वारा (हिन्वानः) उन्नति करता हुवा (बृहत्) बड़े (ऋतम्) सत्य ब्रह्म को (प्राऽर्ष) प्राप्त होजाता है ॥

शतपथ ७ । ४ । २ । ५२ का प्रमाण, जिस का अर्थ यह है कि "मन ही समुद्र है, मनरूपी समुद्र में से विद्वानों ने वाणीरूप फावड़े से त्रयीविद्या को खोदा" और ऋ० ९ । १०७ । १५ का पाठान्तर संस्कृत भाष्य में देखिये ॥ २ ॥

अथाऽध्यास्यारूपा तृतीया-

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ २र

नृभिर्येमाणो हर्यतो विचक्षणो राजा देवःसमुद्र्यः॥३॥[९](८५८)

पदपाठः-नृभिः ३ । येमानः, हर्यतः, विचक्षणः, राजा, देवः, समुद्र्यः १।

अन्वितपदार्थः-(नृभिः) नेतृभिर्योगशिक्षकैः (येमानः)

शिक्ष्यमाणः (हर्यतः) स्पृहणीयः (विचक्षणः) तीव्रबुद्धिः (राजा) प्रकाशमानः (देवः) दिव्यस्वरूपः (समुद्र्यः) समुद्राय मनसे हितो "जायते" इति शेषः ॥ ऋग्वेदे ९।१०७।१६ऽपि ॥ ३ ॥

भाषार्थः—(नृभिः) योगशिक्षकों से (येमानः) शिक्षा पाया हुवा पुरुष (हर्यतः) मनभावना (विचक्षणः) तीव्रबुद्धि (राजा) प्रकाशमान (देवः) दिव्यस्वरूप (समुद्र्यः) मन को हित "होजाता है" ॥ ऋ० ९। १०७। १६ में भी ॥ ३॥

अथ द्वितीयतृचस्य—पराशरऋषिः। सोमो देवता। त्रिष्टुप्छन्दः ॥

तत्र प्रथमा—

३ १ २र ३ १ २र ३ १ २ ३ १ २र
तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो
३ २ १ २ ३ १ २ ३ १ २ ३ १ २
मनीषाम् । गावो यन्ति गोपतिं पृच्छमानाः सोमं
३ १ २ ३ २
यन्ति मतयोवावशानाः१(८५९)व्याख्याता(५२५)

अथ द्वितीया—

१ ३ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
सोमं गावो धेनवो वावशानाः सोमं विप्रा मतिभिः
३ १ २ १ २ ३ १ २ ३ १ २ ३ १ २
पृच्छमानाः। सोमः सुत ऋच्यते पूयमानः सोमे
३ २ ३ २ ३ १ २
अर्कास्त्रिष्टुभः संनवन्ते ॥ २ ॥ (८६०)

पदपाठः—सोमम् २। गावः, धेनवः, वावशानाः १। सोमम्। विप्राः १ मतिभिः ३। पृच्छमानाः १। सोमः, सुतः १। ऋच्यते क्रि०। पूयमानः १। सोमे ७। अर्काः १। त्रिष्टुभः १। संनवन्ते क्रि० ॥

अन्वितपदार्थः—(धेनवः) प्रीणयित्र्यः (गावः) वेदवाचः (सोमं) परमेश्वरं (वावशानाः) कामयन्त्य इव प्राप्नुवन्ति

वेदैकवेद्यत्वात् । ( विप्राः ) विद्वांसः ( मतिभिः ) स्वस्वबुद्धि-साहाय्येन ( सोमं ) (पृच्छमानाः) अन्वेषमाणाः सन्ति । (सुतः) हृदये ध्यातः (पूयमानः) शुद्धिं कुर्वन् (सोमः) परमात्मा (ऋच्यते ) ऋग्भिः स्तूयते परन्तु ( अर्काः ) मन्त्राः ( त्रिष्टुभः ) त्रिष्टुबादिछन्दोविशिष्टाः ( सोमे ) परमात्मनि ( संनवन्ते) प्रह्वीभूता भवन्ति,न पूर्णतया वर्णयन्ति वाचोऽविषयत्वात् ॥ ऋग्वेदे तु९।९७।३५ ऋच्यते पूयमानः=पूयते अज्यमान इत्यन्तरम्॥२॥

भावार्थः-( धेनवः ) प्रसन्न करने वाली ( गावः ) वेदवाणियें (सोमम्) परमात्मा को (वावशानाः)चाहती हुई भी प्राप्त होती हैं क्योंकि वह केवल वेद से ही जानने योग्य है । ( विप्राः ) विद्वान् लोग ( मतिभिः) अपनी २ बुद्धियों से ( सोमम् ) परमात्मा को ( पृच्छमानाः ) खोजते हैं । ( सुतः ) ध्यान किया हुआ (पूयमानः ) हृदय को शुद्ध करता हुवा (सोमः) परमात्मा ( ऋच्यते ) ऋचाओं से स्तुत किया जाता है परन्तु ( त्रिष्टुभः ) त्रिष्टुप् आदि छन्दों वाले (अर्काः ) मन्त्र (सोमे) परमात्मा के विषय में (संनवन्ते) झुक जाते हैं क्योंकि वाणी का विषय न होने से वे उसे संपूर्ण वर्णित नहीं कर सकते । ऋ० ९ । ९७ । ३५ का पाठान्तर संस्कृत भाष्य में देखिये ॥ २ ॥

अथ तृतीया—

३१ २      ३ १२३ १ २    ३१२   ३ २   २
एवा नः सोम परिषिच्यमान आपवस्व पूयमानः स्वस्ति । इ-
३१ २   ३ १र २र ३२३ १ २ ३ २ ३ १२
न्द्रमाविश बृहता मदेन वर्धया वाचं जनया पुरन्धिम्।३।[१०]८६१

पदपाठः—एव अ० । नः २ । सोम सं० । परिषिच्यमानः १ । आपवस्व क्रि० । पूयमानः १ । स्वस्ति अ० । इन्द्रम् २। आविश क्रि०। बृहता,मदेन ३ । वर्धय क्रि० । वाचम् २ । जनय क्रि० । पुरन्धिम् २ ॥

अन्वितपदार्थः—(सोम)परमात्मन् ! त्वम् (परिषिच्यमानः)

[ कर्तृकर्मव्यत्ययः ] परितोऽमृतसेकं कुर्वाणः ( पूयमानः ) पवित्रतां संपादयन् ( नः ) अस्मानुपासकान् (आपवस्व) पावय यथाऽस्माकं (स्वस्ति एव) शुभमेव स्यात् । (इन्द्रम्) अस्मदात्मानम् ( आविश ) सदैवानुप्रविष्टोऽसि [ लकारव्यत्ययः ] ( बृहता ) महता ( मदेन ) आनन्देन ( वाचं ) भवदीयां स्तुतिं ( वर्धय ) ( पुरन्धिं ) बहुधि प्रज्ञानं ( जनय ) ॥ ऋग्वेदे तु ९ । ९७ । ३६ मदेन = रवेणेति पाठः ॥३॥

भावार्थः– ( सोम ) हे परमात्मन् ! आप ( परिषिच्यमानः ) सब ओर अमृत वर्षाते हुवे (पूयमानः) पवित्रता संपादन करते हुवे (नः) हम उपासकों को ( आपवस्व ) पवित्र कीजिये [ जिस से हमारा ] ( स्वस्ति एव ) कल्याण ही [ हो ] ( इन्द्रम् ) हमारे आत्मा को ( आविश ) आप व्याप रहे हैं इस लिये ( बृहता ) महान् (मदेन) आनन्द से ( वाचम् ) अपनी स्तुति को ( वर्धय ) बढ़ाइये और ( पुरन्धिम् ) बहुत बुद्धियुक्त विज्ञान को ( जनय ) हमारे लिये उत्पन्न कीजिये ॥ ऋ० ९ । ९७ । ३६ का पाठभेद संस्कृत भाष्य में देखिये ॥ ३ ॥

अथ चतुर्थखण्डे प्रगाथस्य प्रथमसूक्तस्य–पुरुहन्मा ऋषिः । इन्द्रोदेवता। बृहती छन्दः ॥ तत्र प्रथमा–

१ २र ३ २र ३ १ २र ३ २ १ २ ३ २ ३
यद्याव इन्द्र ते शतꣳशतं भूमीरुतस्युः । न त्वा वज्रिन्त्सहस्रꣳ
२ ३ २ ३ २ ३ १ २ ३ १ २
सूर्या अनु न जातमष्ट रोदसी ॥१॥(८६२)व्याख्याता(२७८)

" उक्तो माध्यंदिन इदानींपृष्ठान्युच्यन्ते " इति विवरणकारः

भावार्थः–इस की टिप्पणी में विवरणकार कहते हैं कि " माध्यंदिन सवन कहा गया, अब पृष्ठ कहे जाते हैं :— " इस प्रथम मन्त्र की व्याख्या छन्द आर्चिक २७८ संख्या पर कर आये हैं । छः दिन का १ पृष्ठ होता है । यथा–१ रथन्तर, २ बृहत, ३ विरूप, ४ वैराज, ५ शाक्कर और ६ रैवत । इसी प्रकार क्रम से इन छः पृष्ठ दिनोंके ६ पृष्ठधर्म हैं । जैसे–१ रथघोष, २ दुन्दुभ्याहनन, ३ उपवाजन, ४ उरोग्निमन्थन, ५ आर्याघोष और ६ गवांघोष ॥१॥

अथ द्वितीया—

१ २ ३ १ २र ३ १ २ ३ १ २
आपप्राथ महिना वृष्ण्या वृषन्विश्वा शविष्ठ शवसा ।
३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
अस्माँ अव मघवन्गोमति व्रजे वज्रिञ्चित्राभिरूतिभिः॥२॥

[ ११ ] ( ८६३ )

पदपाठः—आपप्राथ क्रि० । महिना ३ । वृष्ण्या २ । वृषन् सं० । विश्वा२। शविष्ठ सं० । शवसा ३ । अस्मान् २ । अव क्रि०। मघवन् सं० । गोमति ७ । व्रजे ७। वज्रिन् सं० । चित्राभिः, ऊतिभिः ३ ॥

अन्वितपदार्थः—( वृषन् ) हे अभिमतफलवर्षक ! (शविष्ठ) बलवत्तम ! ( मघवन् ) इन्द्र ! परमात्मन् ! (महिना) महत्त्वेन ( शवसा ) बलेन च त्वं ( विश्वा ) सर्वाणि ( वृष्ण्या ) वीर्यवत्तमानि द्रव्याणि ( आपप्राथ ) व्याप्तवानसि । स त्वं ( गोमति ) इन्द्रियवति ( व्रजे ) गोष्ठे देहे ( चित्राभिः ) आश्चर्ययुक्ताभिः ( ऊतिभिः ) रक्षाभिः (अस्मान् अव) ॥ ऋग्वेदे ८।७०।६ ऽपि ॥ २ ॥

भावार्थः—( वृषन् ) यथेष्ट कामनाओं के वर्षाने वाले ! (शविष्ठ) बलिष्ठ! (मघवन्) इन्द्र ! परमात्मन् ! आप (महिना) बड़प्पन और ( शवसा ) बल से ( विश्वा ) सब ( वृष्ण्या ) वीर्यवानों को ( आ पप्राथ ) व्याप्त कर रहे हैं । सो आप ( गोमति ) इन्द्रियों से युक्त ( व्रजे ) खरकरूप देह में ( चित्राभिः ) विचित्र ( ऊतिभिः ) रक्षाओं से ( अस्मान् ) हम को (अव) रक्षित कीजिये ।। ऋ० ८ । ७० । ६ में भी ।। २ ।।

अथ द्वितीयतृचस्य—मेधातिथिर्ऋषिः । इन्द्रो देवता । बृहती छन्दः ॥

तत्र प्रथमा—

३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
वयं घ त्वा सुतावन्त आपो न वृक्तबर्हिषः । पवित्रस्य

३ १ २ ३ १ २ ३ १ २
प्रस्रवणेषु वृत्रहन् परि स्तोतार आसते ॥१॥ (८६४)

व्याख्याता (२६१)

अथ द्वितीया—

१ २ ३ २उ ३ १ २ ३ २ ३ १ २ ३ २ ३ १
स्वरन्ति त्वा सुते नरो वसो निरेक उक्थिनः । कदा सुतं
२ ३ २उ ३ १ २ ३ १ २ ३ २ ३ १ २
तृषाण ओक आगमइन्द्र स्वब्दीव वंसगः ॥२॥ (८६५)

पदपाठः—स्वरन्ति क्रि० । त्वा २ । सुते ७ । नरः १ । वसो सं०। निः अ० । एके १ । उक्थिनः १ ।कदा अ० । सुतम् २ । तृषाणः १ । ओकः २ । आगमः क्रि० । इन्द्र सं० । स्वब्दी १ । इव अ० । वंसगः १ ॥

अन्वितपदार्थः—(वसो) अधनानां धन !(इन्द्र) परमैश्वर्यवन्! जगदीश्वर! (एके नरः) (उक्थिनः) स्तोतारः (सुते) अन्नादिलाभे निमित्ते (निः) नितराम् (त्वा) त्वाम् (स्वरन्ति) आह्वयन्ते। दृष्टान्तः—( इव ) यथा ( सुतम् ) स्वच्छं जलं प्रति ( तृषाणः ) तृष्णां कुर्वन् [ स्वरति ] यत्—( वंसगः ) वननीयगमनः (स्वब्दी) शोभनजलदाता ( कदा ) कस्मिन्काले ( ओकः ) स्थानम् ( आगमः ) अगच्छेदिति ॥ ऋग्वेदे ८ । ३३ । २ ऽपि ॥२॥

भावार्थः—( वसो ) हे निर्धनों के धन ! ( इन्द्र ) परमेश्वर ! (एके नरः) कितने ही मनुष्य ( उक्थिनः ) स्तोता ( सुते ) अन्नादिलाभनिमित्त ( निः ) निरन्तर ( त्वा ) आप को ( स्वरन्ति ) पुकारते हैं । दृष्टान्तः—( इव ) जैसे ( सुतम् ) स्वच्छ जल का ( तृषाणः ) प्यासा [ पुकारता है कि ] ( वंसगः ) सुचाल ( स्वब्दी ) उत्तमजलदाता ( कदा) कब ( ओकः ) स्थान पर ( आगमः )आवे ॥ ऋ० ८ । ३३ । २ में भी ॥ २ ॥

अथ तृतीया—

१ २ ३ २ ३ १र २र ३ १ २ ३ १ २
कण्वेभिर्धृष्णवाधृषद्वाजं दर्षि सहस्रिणम् । पिशङ्गरूपं

३ १२ २२
मघवन्विचर्षणे मक्षू गोमन्तमीमहे ॥३॥ [ १२ ] ( ८६६ )

पदपाठः—कण्वेभिः ३=४ । धृष्णो सं० । आधृषत् १ । वाजम् २ । दर्षि क्रि० । सहस्त्रिणम्, पिशङ्गरूपम् २ । मघवन्, विचर्षणे सं० । मक्षु अ० । गोमन्तम् २ । ईमहे क्रि० ॥

अन्वितपदार्थः—( मघवन् ) हे इन्द्र ! परमात्मन् ! (धृष्णो) सर्वाभिभावुक ! (आधृषत्) सर्वतोऽभयः सन् त्वं ( पिशङ्गरूपं ) पक्वं ( सहस्त्रिणं ) बहुपरिमाणं ( गोमन्तं ) गवादिपशुसहितं ( वाजं ) धान्यं ( कण्वेभिः ) कण्वेभ्यो मेधाविभ्यः ( मक्षु ) शीघ्रं ( दर्षि ) ददासि । अतएव ( विचर्षणे ) साक्षिन् ! [ वयं त्वाम् ] ( ईमहे ) याचामहे ॥

कण्व इति मेधाविनाम निघं० ३ । १५॥ मक्षिवति क्षिप्रनाम निघं० २ । १५ ॥ ईमहे इति याञ्चाकर्मा निघं० ३ । १९॥ ऋग्वेदे ८ । ३३ । ३ ऽपि ॥ ३ ॥

भाषार्थः—( मघवन् ) हे इन्द्र ! परमात्मन् ! ( धृष्णो ) सर्वोपरि विराजमान ! ( आधृषत् ) सर्वतः अभय आप ( पिशङ्गरूपम् ) पक्का, ( सहस्त्रिणम् ) बहुत, ( गोमन्तम् ) गौ बैल आदिसहित ( वाजम् ) धान्य (कण्वेभिः) बुद्धिमानों के लिये ( मक्षु ) शीघ्र ( दर्षि ) देते हैं । ( विचर्षणे ) हे साक्षिन् ! [ अतएव आप से ] ( ईमहे ) हम मांगते हैं ॥

निघण्टु ३ । १५, ३ । १९, २ । १५ के प्रमाण संस्कृत भाष्य में देखिये ॥ ऋ० ८ । ३३ । ३ में भी ॥ ३ ॥

अथ प्रगाथस्य तृतीय सूक्तस्य—वसिष्ठऋषिः । इन्द्रो देवता । बृहती छन्दः ॥ तत्र प्रथमा—

३ २ ३ १ २ ३ २ ३ १ २ ३ ३ २ ३ १ २
तरणिरित्सिषासति वाजं पुरन्ध्या युजा । आ व इन्द्रं

३ १ २ ३ १ ३ १ २र३ १ २
पुरुहूतं नमे गिरा नेमिं तष्टेव सुद्रुवम् ॥ १ ॥ ( ८६७ )

व्याख्याता ( २३८ )

अथ द्वितीया–

१ २३१२ ३ १३ ३ १ र २र ३१ २ ३ २ ३
न दुष्टुतिर्द्रविणोदेषु शस्यते न स्रेधन्तं रयिर्नशत् । सुशक्ति-
१ २ ३ २ ३ १ २ ३१र २र ३ २
रिन्मघवन्तुभ्यं मावते देष्णं यत्पार्ये दिवि ॥२॥ (८६८)

पदपाठः–न अ० । दुष्टुतिः १ । द्रविणोदेषु ७ । शस्यते क्रि० । न । स्रेध-न्तम् २ । रयिः १ । नशत् क्रि० । सुशक्तिः १ । इत् अ० । मघवन् सं० । तु-भ्यम्, मावते ४=६ । देष्णम्, यत् १ । पार्ये, दिवि ७ ॥

अन्वितपदार्थः—(मघवन्) धनवन्निन्द्र! परमेश्वर ! (द्रवि-णोदेषु) धनादिदातृषु ( दुष्टुतिः ) कल्पिता स्तुतिः (न शस्यते)। ( स्रेधन्तं ) हिंसादिपराऽपकारंकुर्वाणं ( रयिः ) धनादि ( न ) ( नशत् ) प्राप्नोति [ निघं० २ । १८ ] (देष्णं) दानं ( यत्) यत्किञ्च (पार्ये) पारणीयेऽनवरोधके ( दिवि ) अनन्ताकाशेऽस्ति तत् (मावते) लक्ष्मीवतः ( तुभ्यं) तव (इत् ) एव ( सुशक्तिः ) शोभना शक्तिर्नान्यस्य ॥ ऋग्वेदे तु ७ । ३२ । २१ नदुष्टुतीमर्त्यो विन्दतेवसु–इति प्रथमे पादेऽन्तरम् ॥ २ ॥

भावार्थः–( मघवन् ) हे धनपते ! ( द्रविणोदेषु ) धनादिदाताओं के विषय में ( दुष्टुतिः ) कल्पित [ दिखावटी व बनावटी ] स्तुति ( न ) नहीं ( शस्यते ) कही जाती है । ( स्रेधन्तम् ) हिंसादि पराया अपकार करते हुवे को ( रयिः ) धनादि ऐश्वर्य ( न ) नहीं ( नशत् ) प्राप्त होता है [नि-घं० २ । १८ ] ( देष्णम् ) दान ( यत् ) जो कुछ ( पार्ये ) विना रोक वाले ( दिवि ) इस अनन्त आकाश में है सो (मावते) धनपति ( तुभ्यम् ) आप

की (इत्) ही (सुशक्तिः) उत्तम शक्ति है। अन्य कोई क्या देगा। ऋ० ७। ३२। २१ का पाठभेद संस्कृतभाष्य में देखिये ॥ २ ॥

उक्तं माध्यंदिनं सवनम् ॥

इदानीं तृतीयं सवनमारभ्यते इति विव०।

अथ पञ्चमे खण्डे प्रथमतृचस्य—त्रित आप्त्योवाऋषिः।सोमो देवता। गायत्रीछन्दः

तत्र प्रथमा—

३ २उ ३ १२३ १ २ ३ १ २
तिस्रो वाच उदीरते गावो मिमन्ति धेनवः।
१र ३ १ २
हरिरेति कनिक्रदत्॥१॥(८६९) व्याख्याता (४७१)

अथ द्वितीया

३ १र २र ३ २ ३ १ २ ३ २ २
अभि ब्रह्मीरनूषत यह्वीर्ऋतस्य मातरः।
३ १ २ ३ १ २र
मर्जयन्तीर्दिवः शिशुम् ॥२॥ (८७०)

पदपाठः—अभि अ०। ब्रह्मीः १। अनूषत क्रि०। यह्वीः १। ऋतस्य ६। मातरः १। मर्जयन्तीः १। दिवः ६। शिशुम् २॥

अन्वितपदार्थः—(ब्रह्मीः) ब्राह्म्यो ब्रह्मणा प्रकाशिताः (यह्वीः) यह्व्योमहत्यः (ऋतस्य) यज्ञस्य (मातरः) मानकर्त्र्यः (मर्जयन्तीः) पावयित्र्योवेदवाचः (दिवः) द्युलोकस्य (शिशुं) "शंसनीयं सोममिति" विवरणकारः। (अभ्यनूषत) अभितः प्रशंसन्ति ॥

यह्व इति महतोनाम निघं० ३। ३॥ तृतीयस्यामितो दिवि सोम आसीदित्यादि श्रुतेः द्युशिशुत्वं तस्येति सायणोऽपि॥ ऋग्वेदे तु ९।३३।५ऽपि ॥ २ ॥

भावार्थः—(ब्रह्मीः) परमात्मा की प्रकाशित, (यह्वीः) महती, (ऋतस्य) यज्ञ की (मातरः) माता के समान मान करने वाली, (मर्जयन्तीः)

पवित्र करने वाली वेदवाणियें ( दिवः ) द्युलोक के ( शिशुम् ) प्रशंसनीय पुत्र के समान सोम की ( अभि ) सर्वतः ( अनूषत ) प्रशंसा करती हैं ॥

सायणाचार्य, विवरणकार, निघण्टु के प्रमाण और ऋ० ९ । ३३ । ५ का पाठान्तर संस्कृतभाष्य में देखिये ॥ २ ॥

अथ तृतीया—

३१ ३२३ १ २ ३१ २
रायः समुद्राँश्चतुरोऽस्मभ्यꣳसोम विश्वतः ।
१ २ ३१ २
आपवस्व सहस्रिणः ॥३॥ [१४] (८७१)

पदपाठः—रायः ६ । समुद्रान्, चतुरः २ । अस्मभ्यम् ४ । सोम सं० । विश्वतः अ० । आपवस्व क्रि० । सहस्रिणः ६ ॥

अन्वितपदार्थः—( सोम ) परमात्मन् ! वा सोम ! ( सहस्रिणः ) बहुसंख्याकस्य ( रायः ) धनस्य मणिमुक्तादेः (चतुरः) चतुर्दिग्वर्त्तीन् ( समुद्रान् ) उदधीन् ( अस्मभ्यम् ) ( विश्वतः ) सर्वतः ( आपवस्व ) प्रापय ॥ ऋग्वेदे ९ । ३३ । ६ ऽपि ॥३॥

भाषार्थः—( सोम ) परमात्मन् ! वा सोम ! ( सहस्रिणः ) बहुत संख्या वाले ( रायः ) मणिमुक्तादि रत्न धन के भरे ( चतुरः ) ४ चारों दिशाएं ( समुद्रान् ) समुद्रों को ( अस्मभ्यम् ) हमारे लिये ( विश्वतः ) सब ओर से ( आपवस्व ) प्राप्त कराइये ॥ ऋ० ९ । ३३ । ६ में भी ॥३॥

अथ द्वितीयतृचस्य—ययातिर्नाहुषऋषिः । पवमानः सोमो देवता । अनुष्टुप्छन्दः ॥ तत्र प्रथमा—

३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
सुतासो मधुमत्तमाः सोमा इन्द्राय मन्दिनः । पवित्रवन्तो अक्षर-
३ १ २ ३ १ २
न्देवान्गच्छन्तु वोमदाः ॥ १ ॥ ( ८७२ ) व्याख्याता ( ५४७ )

अथ द्वितीया—

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २र
इन्दुरिन्द्राय पवत इति देवासो अब्रुवन् । वाचस्पति-

३ २ ३ १ २ ३ १ २
मखस्यते विश्वस्येशान ओजसः ॥ २ ॥ ( ८७३ )

पदपाठः—इन्दुः १। इन्द्राय ४। पवते क्रि०। इति अ०। देवासः १। अब्रुवन् क्रि०। वाचस्पतिः १। मखस्यते क्रि०। विश्वस्य ६। ईशानः १। ओजसः ६॥

अन्वितपदार्थः—(इन्दुः) सोमः (वाचस्पतिः) वाचः सौष्ठवकरत्वात्पतिः, (विश्वस्य) सर्वस्य (ओजसः) बलस्य (ईशानः) उत्पादने समर्थः, (मखस्यते) यज्ञमिच्छति, (इन्द्राय) वृष्टिकृते वायवे विद्युते वा (पवते) गच्छति। (इति) इत्यादिप्रकारेण (देवासः) तद्गुणविद्वांसः (अब्रुवन्) ब्रूयुरुपदिशेयुरिति परमात्मन आज्ञा वेद्या॥ ऋग्वेदे तु ९। १०१। ५ ओजसेति पाठः॥ २॥

भाषार्थः—(इन्दुः) सोम (वाचस्पतिः) वाणी का पालक, (विश्वस्य) सब (ओजसः) बल पराक्रम के (ईशानः) उत्पादन में समर्थ, (मखस्यते) यज्ञ चाहता और (इन्द्राय) वृष्टिकारक वायु वा विद्युत् के लिये (पवते) जाता है। (देवासः) सोमगुण जानने वाले विद्वान् (इति) इत्यादि प्रकार (अब्रुवन्) उपदेश करें। यह ईश्वराज्ञा है॥ ऋ० ९। १०१। ५ का पाठान्तर संस्कृत भाष्य में देखिये॥ २॥

अथ तृतीया—

३ १ २ ३ १ २ ३ २
सहस्रधारः पवते समुद्रो वाचमीङ्खयः।
२ ३ १ २ ३ १ २र ३ १ २
सोमस्पती रयीणाꣳसखेन्द्रस्य दिवेदिवे॥३॥[१५](८७४)

पदपाठः—सहस्रधारः १। पवते क्रि०। समुद्रः, वाचमीङ्खयः, सोमः, पतिः १। रयीणाम् ६। सखा १। इन्द्रस्य ६। दिवे, दिवे अ०॥

अन्वितपदार्थः—(सहस्रधारः) बहुधारः, (समुद्रः) रसाढ्यः, (वाचमीङ्खयः) वाचः संस्कर्त्ता [ईङ्खतेर्ण्यन्तात् सुप्यु-

पपदे स्वश् प्रत्ययः] ( रयीणाम् ) हविर्धनवतां यजमानानामिति सायणोऽपि (पतिः) पोषकः, (दिवे, दिवे) प्रतिदिनम् (इन्द्रस्य) वायोर्विद्युतोवा ( सखा ) पोषकत्वाद्धितकरः ( सोमः पवते ) सोम आकाशं गच्छति ॥ ऋग्वेदे ९ । १०१ । ६ ऽपि ॥ ३ ॥

भाषार्थः-( सहस्रधारः ) अनेक धारों वाला, (समुद्रः) रस भरा, (वाच-मीङ्खयः ) वाणी का संस्कारकर्त्ता ( रयीणाम् ) हव्य धन वाले यजमानों का (पतिः) पोषक, (दिवे, दिवे) प्रतिदिन (इन्द्रस्य) वायु वा विद्युत् का(सखा) पोषक होने से हितकारी (सोमः) सोम (पवते) आकाश को जाता है ॥

सायणादि की पुष्टियें संस्कृत भाष्य में देखिये॥ ऋ० ९।१०१।६ में भी ॥३॥

अथ तृतीयतृचस्य-पवित्र ऋषिः । पवमानः सोमो देवता । जगती छन्दः ॥

तत्र प्रथमा-

३ १ २ ३ १ २ ३ १ २र ३ १ २ ३ १ २
पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः ।
१ २ ३ २उ ३ १ २ ३ २ ३ १ २र ३ १ २र
अतप्ततनूर्न तदामो अश्नुते शृतास इद्वहन्तः सं तदाशत ॥१॥

( ८७५ ) व्याख्याता ( ५६५ )

अथ द्वितीया-

१ २ ३ २ ३ १ २ ३ २ ३ १ ३ २ ३ २क २र
तपोष्पवित्रं विततं दिवस्पदेऽर्चन्तो अस्य तन्तवोव्यस्थिरन् ।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २र ३ १ २
अवन्त्यस्य पवितारमाशवो दिवःपृष्ठमधिरोहन्ति तेजसा २(८७६)

पदपाठः-तपोः ६ । पवित्रम्, विततम् १ । दिवस्पदे ७ । अर्चन्तः १ । अस्य ६ । तन्तवः १ । व्यस्थिरन्, अवन्ति क्रि० । अस्य । पवितारम् २ । आशवः १ । दिवः ६ । पृष्ठम् २ । अधिरोहन्ति क्रि० । तेजसा ३ ॥

अन्वितपदार्थः-( तपोः ) तेजस्विनः सोमस्य ( पवित्रं ) शुद्धिकरमङ्गं (दिवस्पदे) द्युपृष्ठे (विततं) विस्तृतं भवति (अस्य)

सोमस्य ( तन्तवः ) वायुगताःकिरणाः (अर्चन्तः) प्रकाशमानाः ( व्यस्थिरन् ) विविधास्तिष्ठन्ति ( अस्य ) सोमस्य (आशवः) आशुगामिनो रसाः (पवितारं) पावयितारं यजमानम् (अवन्ति) रक्षन्ति ["होमद्वारा पश्चाद्धुताः" इति सायणः] (दिवः)द्युलोकस्य ( पृष्ठम् ) उन्नतदेशं ( तेजसा ) सह ( अधिरोहन्ति ) ॥

ऋग्वेदे तु ९। ८३। २ अर्चन्तः = शोचन्तः, रोहन्ति = तिष्ठन्ति इत्यन्तरम् ॥ २ ॥

भाषार्थः–( तपोः ) तेजस्वी सोम का ( पवित्रम् ) पवित्रअङ्ग ( दिवस्पदे ) द्युलोक के उन्नतस्थान में ( विततम् ) फैला है ( अस्य ) इस सोम के ( तन्तवः ) वायुगत तार ( अर्चन्तः ) चमकते हुवे ( व्यस्थिरन् ) अनेकधा स्थित होते हैं ( अस्य ) इस सोम के ( आशवः ) शीघ्रगामी रस (पवितारम् ) यजमान की ( अवन्ति ) रक्षा करते हैं [ सायणाचार्य कहते हैं कि–"होमद्वारा, फिर होम किये हुवे" ] ( दिवः ) द्युलोक की ( पृष्ठम् ) पीठ पर ( तेजसा ) तेज के साथ ( अधिरोहन्ति ) चढ़ जाते हैं ॥

ऋ० ९ । ८३ । २ का अन्तर संस्कृत भाष्य में देखिये ॥ २ ॥

अथ तृतीया–

१२ ३२३ १२ ३२३१ २ ३ १२
अरूरुचदुषसः पृश्निरग्रिय उक्षा मिमेति भुवनेषु
३२ ३ १२ ३१२३१२
वाजयुः। मायाविनो ममिरे अस्य मायया नृचक्षसः
३ २३ २३१२
पितरो गर्भमादधुः ॥ १ ॥ [ १६ ] ( ८७७ )

पदपाठः–अरूरुचत् क्रि० । उषसः २ । पृश्निः १ । अग्रियः १ । उक्षाः १। मिमेति क्रि० । भुवनेषु ७ । वाजयुः १ । मायाविनः १ । ममिरे क्रि०। अस्य ६। मायया ३ । नृचक्षसः, पितरः १ । गर्भम् २ । आदधुः क्रि० ॥

अन्वितपदार्थः–(अस्य) सोमस्य ( मायया ) प्रज्ञातत्त्वेन

( मायाविनः ) बुद्धितत्त्वयुक्ताः पुरुषाः पदार्था वा ( ममिरे ) निर्मिता भवन्ति, तथा (अग्रियः) मुख्यः ( पृश्निः ) आदित्यः सूर्यः ( उक्षाः ) वृष्टिसमर्थः (भुवनेषु वाजयुः) लोकेष्वन्नमुत्पिपादयिषुः ( मिमेति ) मिनोति जलं प्रक्षिपति तथा ( उषसः ) प्रभातान् ( अरूरुचत् ) रोचयति ( नृचक्षसः ) नृणां दर्शनसहायकाः (पितरः) पालकाः सोमरश्मयः(गर्भम्)सोमगर्भम्(आदधुः)॥

"पृश्निरादित्यो भवति प्राश्नुतएनं वर्ण इति नैरुक्ताः"। निरु० २।१४मायेति प्रज्ञानाम निघं० ३।९॥"अत्र सूर्यात्मकः सोमः स्तूयते। सूर्यरश्म्यनुगमाधीनवर्धनाच्चन्द्रस्य ० ० ० ० ० पितरो जगद्रक्षकारश्मयो गर्भमादधुः" इति सायणाचार्यः॥

ऋग्वेदे तु ९।८३।३ मिमेति भुवनेषु = बिभर्त्ति भुवनानि इत्यन्तरम्॥ ३॥

भावार्थः-( अस्य ) इस सोम के ( मायया ) बुद्धितत्त्व से (मायाविनः) बुद्धिमान् लोग वा बुद्धितत्त्वयुक्त पदार्थ ( ममिरे ) बने हैं, तथा ( अग्रियः ) मुख्य आदित्य सूर्य (उक्षाः) वृष्टि करने में समर्थ (भुवनेषु) लोकों में (वाजयुः) अन्नोत्पत्ति के लिये ( मिमेति ) जल वर्षाता है तथा ( उषसः ) प्रभातों को ( अरूरुचत् ) प्रकाशित करता है। ( नृचक्षसः ) मनुष्यों को दिखाने वाली ( पितरः ) चन्द्रकिरणें जो कि पालन करती हैं ( गर्भम् ) सोमगर्भ का ( आदधुः ) आधान करती हैं॥

निरुक्त २। १४ का प्रमाण, जिस का अर्थ यह है कि-" सूर्य पृश्नि है क्योंकि इस में रंगतें व्यापरही हैं" तथा निघण्टु३। ९ का प्रमाण, जिस का अर्थ यह है कि-"माया बुद्धितत्त्व का नाम है" और सायणाचार्य का प्रमाण जिस का यह तात्पर्य है कि" इस ऋचा में सूर्यकिरणगत सोम का वर्णन है, क्योंकि सूर्य की किरणों से चन्द्रमा की किरण बढ़ती हैं और चन्द्रमा की किरणें जगत् का पालन करने से पितर कहाती हैं और सोमलता का गर्भाधान करती हैं अर्थात् वैद्यकशास्त्रानुसार चन्द्रकिरणों से सोमलता की उत्पत्ति होती है" और ऋ० ९।८३। ३ का पाठान्तर संस्कृत भाष्य में देखिये॥ ३॥

इति चतुर्थाऽध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

" यज्ञायज्ञीयमग्निष्टोमसाम " इति
"इदानीमुक्थानि भवन्ति" इति च विवरणकारः ॥

भाषार्थः—यह चतुर्थ अध्याय का ५ वां खण्ड हुवा और विवरणकार का मत है कि—"यह यज्ञायज्ञीय अग्निष्टोम यज्ञ का साम हुवा, अब (आगे) उक्थ=स्तोत्र हैं ॥"

अथ षष्ठखण्डे प्रथमस्य प्रगाथस्य—सौभरिःकाण्वऋषिः । अग्निर्देवता । ककुप्सतोबृहती च क्रमेण छन्दसी ॥ तत्र प्रथमा—

१ २र ३ १२ ३२३ १ २
प्रमꣳहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे ।
३ १ २ ३ १ २
उपस्तुतासो अग्नये ॥ १ ॥ (८७८) व्याख्याता (१०७)

अथ द्वितीया—

१ २ ३ १ २ ३र ३ २ ३ १ २ ३ १ २
आवꣳसते मघवा वीरवद्यशः समिद्धो द्युम्न्याहुतः ।
३ १ २ ३ १ २र ३ २ ३ २ ३ १ २
कुविन्नो अस्य सुमतिर्भवीयस्यच्छ वाजेभिरागमत् ॥ २ ॥

पदपाठः—आवंसते क्रि० । मघवा १ । वीरवत्, यशः २ । समिद्धः, द्युम्नी, आहुतः १ । कुवित् अ० । नः २ । सुमतिः, भवीयसी १ । अच्छ अ० । वाजेभिः ३ । आगमत् क्रि० ॥

अन्वितपदार्थः—( मघवा ) मखवान् ( द्युम्नी ) यशस्वी ( समिद्धः ) प्रदीप्तः ( आहुतः ) आभिमुख्येन हुतोऽग्निः ( वीरवत् ) वीरैर्युक्तं ( यशः ) अन्नम् ( आवंसते ) प्रयच्छति ( अस्य ) अग्नेः ( भवीयसी ) अतिशयेन भवितुं योग्या ( सुमतिः ) शो-

भना मतिर्बुद्धितत्वम् (वाजेभिः) अन्नैःसह (नः) अस्मान् (अच्छ) प्रति ( कुवित् ) बहु ( आगमत् ) प्राप्नोतु ॥

सम्यगाहुतेनाग्निना मनुष्याः पुत्रादिप्रजां शोभनां मतिं बहु धनं धान्यं च प्राप्नुवन्तीति भावः ॥

यशइत्यन्नाम निघं० २ । ७ ॥ द्युम्नं द्योततेर्यशोवान्नं वा। निरु० ५ । ५ ॥ कुविदिति बहुनाम निघं० ३ । १ ॥ ऋग्वेदे तु ८। १०३ । ९ भवीयसी = नवीयसीति पाठः ॥२॥

भाषार्थः– ( मघवा ) यज्ञ वाला ( द्युम्नी ) यश वाला ( समिद्धः ) प्रदीप्त ( आहुतः ) सामने से होम किया हुवा अग्नि (वीरवत्) वीर पुत्रादियुक्त ( यशः ) अन्न ( आवंसते ) देता है ( अस्य ) इस अग्नि का ( सुमतिः ) शोभन बुद्धितत्व ( वाजेभिः ) अन्नों सहित ( नः ) हम ( अच्छ ) को ( कुवित् ) बहुत ( आगमत् ) प्राप्त हो ॥

भले प्रकार अग्नि में होम करने से मनुष्य–पुत्रादि सन्तान, उत्तम बुद्धि, बहुत धन धान्यादि को प्राप्त होते हैं ॥

निघण्टु २ । ७, ३ । १ निरुक्त ५ । ५ के प्रमाण और ऋ० ८ । १०३ । ९ का पाठभेद संस्कृत भाष्य में देखिये ॥ २ ॥

अथ द्वितीयतृचस्य–गोषूक्त्यश्वसूक्तिनौ काण्वायनावृषी । इन्द्रोदेवता । उष्णिक्छन्दः ॥ तत्र प्रथमा–

२ ३ १ २ ३ १ २ ३ १ २ ३ २
तं ते मदं गृणीमसि वृषणं पृक्षु सासहिम् ।
३ १ २ ३ १ २
उ लोककृत्नुमद्रिवो हरिश्रियम् ॥ १ ॥ ( ८८० )

व्याख्याता ( ३८३ )

अथ द्वितीया–

२ ३ १ २ ३ २३ १ २ ३ १ २
येन ज्योतींष्यायवे मनवे च विवेदिथ ।

३   २ ३ २   ३ २ ३   १ २
मन्दानो अस्य बर्हिषो विराजसि ॥ २ ॥ ( ८८१ )

पदपाठः—येन ३ । ज्योतींषि २ । आयवे, मनवे ४ । च अ० । विवेदिथ क्रि० । मन्दानः १ । अस्य, बर्हिषः ६ । विराजसि क्रि० ॥

अन्वितपदार्थः—हे इन्द्र ! परमेश्वर ! (येन) यस्मात् कारणात् ( अस्य ) उपासकस्य ( बर्हिषः ) योगयज्ञस्य मध्ये(विराजसि) विराजसेऽतःकारणात् ( मन्दानः ) आनन्दस्वरूपस्त्वं (मनवे) मनसेऽन्तःकरणाय (आयवे) प्राणाय [ शत० ४ । २ । ३ । १] ( च ) (ज्योतींषि) प्रकाशान् (विवेदिथ) प्रापयसि ॥

ऋग्वेदे ८ । १५ । ५ ऽपि ॥ अहह ! गतानुगतिकता ! यत् शर्मण्यदेशमुद्रितपुस्तकानुकरणेनाऽन्येन वा केनचित्कारणेन ऐसियाटिकसमित्या प्रकाशिते सायणभाष्यगानयुक्तपुस्तके भ्रान्त्या "मनवे मनवे" इति द्विर्मुद्रितम्, तद्दृष्ट्वाऽजमीढनगरस्थवैदिकयन्त्रालयमूलपुस्तकेऽपि तदेव दृश्यते, अर्गलपुरस्थेन भार्गवेन तु व्याख्याऽपि द्विरुक्तस्यैव मण्डिता, नैव विचारितं यच्छन्दोऽपि नैव तादृशं यदत्राक्षरत्रयवृद्धिः संभाव्येत, नापि सायणभाष्ये, न च पदपाठपुस्तके, नाऽपि ऋग्वेदे, न गानग्रन्थे, नोत जीवानन्दमुद्रापितपुस्तके द्विरुक्तं तदस्ति ॥ २ ॥

भाषार्थः—हे परमेश्वर ! इन्द्र ! ( येन ) जिस कारण ( अस्य ) इस उपासक के ( बर्हिषः ) योगयज्ञ के मध्य में ( विराजसि ) आप विराजते हैं इस कारण ( मन्दानः ) आनन्दस्वरूप आप (मनवे) मन=अन्तःकरण (च) और ( आयवे ) प्राण [शतपथ ४ । २ । ३ । १] के लिये ( ज्योतींषि ) ज्योतियों को ( विवेदिथ ) प्राप्त कराते हैं ॥

ऋ० ८ । १५ । ५ में भी ऐसा ही पाठ है। परन्तु आश्चर्य है कि विलायती जर्मन के छपे पुस्तक की नक़ल से वा अन्य किसी कारण से ऐसियाटिक सुसाइटी के सायणभाष्य और गानयुक्त पुस्तक में " मनवे मनवे " ऐसा दो वार पाठ भ्रान्ति से छप गया। उसी की देखादेखी अजमेर के वैदिक यन्त्रालय के मूल पुस्तक में भी वैसा ही छप गया और आगरे के भार्गव जी ने तो दूसरे " मनवे " पद का अर्थ भी कर डाला !! यह विचार नहीं किया कि न तो उष्णिक् छन्द में ये ३ अक्षर बढ़ सकते हैं, न सायणभाष्य में द्विरुक्ति की व्याख्या है, न पदपाठ पुस्तक में, न ऋग्वेद ८ । १५ । ५ में, न गान ग्रन्थों में इस का पुनर्गान है, जीवानन्द के छपाये पुस्तक में भी इसका दो वार पाठ नहीं है ॥ २ ॥

अथ तृतीया—

२ ३ १ २ ३ १ २र ३ १ २
तदद्या चित्त उक्थिनोऽनुष्टुवन्ति पूर्वथा ।
१ २ ३ १ २ ३ १ २
वृषपत्नीरपो जया दिवे दिवे ॥ ३ ॥ [ १८ ] (८८२)

पदपाठः—तद् २ । अद्य, चित् अ० । ते ६ । उक्थिनः १ । अनुष्टुवन्ति क्रि० । पूर्वथा अ० । वृषपत्नीः २ । अपः २ । जय क्रि० । दिवे, दिवे अ० ॥

अन्वितपदार्थः—हे इन्द्र ! परमात्मन् ! वा वृष्टिकर्त्तः ! यस्त्वं ( वृषपत्नीः ) वृषा वर्षन्तः पर्जन्याः पतयो यासां ताः (अपः) ( जय ) स्वायत्ताः करोषि ( तद् ) ( ते ) त्वदीयं यशः (उक्थिनः ) वैदिकस्तोत्रवन्तो मनुष्याः ( दिवे दिवे ) प्रतिदिनम् (अद्य चित् ) अद्यापि ( पूर्वथा) पूर्वकालवत् (अनुष्टुवन्ति) क्रमेण प्रशंसन्ति ॥ ऋग्वेदे ८ । १५ । ६ ऽपि ॥ ३ ॥

भावार्थः—हे इन्द्र ! परमेश्वर ! वा वृष्टिकर्त्तः ! जो कि आप (वृषपत्नीः) मेघों के स्त्री रूप ( अपः ) जलों को ( जय ) स्वाधीन करते हैं ( तद् ) सो ( ते ) आप के यश को ( उक्थिनः ) वैदिक स्तोत्रों वाले मनुष्य ( दिवे

दिवे ) प्रतिदिन (अद्य चित्) अब भी (पूर्वथा) पूर्व के समान (अनुष्टुवन्ति) प्रशंसा करते हैं ॥ ऋ० ८ । १५ । ६ में भी ॥ ३ ॥

अथ तैरश्चं तृतीयमुक्थमिति विवरणकारः ॥

अथ तृतीयतृचस्य–तिरश्चीर्ऋषिः । इन्द्रोदेवता । अनुष्टुप्छन्दः ॥

तत्र प्रथमा–

३ १ २र ३ २उ ३ १ २ ३ १ २ ३ १ २ ३
श्रुधी हवं तिरश्च्या इन्द्र यस्त्वा सपर्यति । सुवीर्यस्य
१ २ ३ १ ३ ३ १ २
गोमतोरायस्पूर्धि महाँ असि॥१॥(८८३)व्याख्याता(३४६)

अथ द्वितीया–

१ २ ३ १ २ ३ १ २ ३ १ २र
यस्त इन्द्र नवीयसीं गिरं मन्द्रामजीजनत् ।
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
चिकित्विन्मनसं धियं प्रत्नामृतस्य पिप्युषीम् ॥२॥(८८४)

पदपाठः–यः १ । ते ४ । इन्द्र सं० । नवीयसीं,गिरं, मन्द्राम् २ । अजीजनत् क्रि० । चिकित्वन्मनसं, धियं, प्रत्नाम् २। ऋतस्य ६ । पिप्युषीम् २ ॥

अन्वितपदार्थः—( इन्द्र ) परमेश्वर! ( यः ) उपासकः स्तोता ( ते ) त्वदर्थं ( नवीयसीं ) स्तुतिरूपतरां [ णु स्तुतौ ] ( मन्द्राम् ) आनन्ददाम् (गिरम्) वाचम् ( अजीजनत् ) उच्चारणेनोत्पादयति, ( चिकित्वन्मनसं ) प्रज्ञानयुक्तंमनोयस्यां तादृशीं ( प्रत्नां ) सनातनीम् ( ऋतस्य ) यज्ञस्य (पिप्युषीम्) पोषयित्रीं ( धियं ) वेदस्थां प्रज्ञां [ तस्मै ददासीति शेषः ]

नवीयसीं नवतरां मृदुपदवर्णस्वरोदाहरणयुक्तामिति, प्रत्नामृग्यजुःसामलक्षणामिति च तथा–ऋतस्य पिप्युषीम्=ऋतो

यज्ञोऽथवा ऋतः प्रजापतिः अथवा ऋतं सत्यं परं ब्रह्म तस्य पिप्युषीं पोषणसमर्थामिति च विवरणकारः ॥

ऋग्वेदे तु ८।९५।५ इन्द्र यस्ते न वीयसीमिति पाठव्यत्ययः॥२॥

भाषार्थः–( इन्द्र ) हे परमेश्वर ! ( यः ) जो स्तोता उपासक (ते) आपके लिये ( नवीयसीम् ) अत्यन्त स्तुतिरूपिणी ( मन्द्राम् ) आनन्ददायिनी ( गिरम् ) वाणी को ( अजीजनत् ) उच्चारण द्वारा उत्पन्न करता है, ( चिकित्विन्मनसम् ) प्रज्ञानयुक्त मन वाली ( प्रत्नाम् ) सनातनी ( ऋतस्य ) यज्ञ की ( पिप्युषीम् ) पोषण करने वाली ( धियम् ) वेदस्थ बुद्धि को [ उस के लिये आप देते हैं ] ॥

विवरणकार कहते हैं कि " नवीयसी=उत्तम मधुर वा कोमल पद वर्ण स्वर उदाहरणों से युक्त "। और यह कि–" प्रत्ना=ऋग्यजुःसामरूपा "। तथा यह कि–" ऋतस्यपिप्युषीम्=ऋत नाम यज्ञ, अन्न, प्रजापति वा परब्रह्मज्ञान के पोषण करने में समर्थ को" ॥ ऋ० ८। ९५। ५ में का पाठव्यत्यय संस्कृत भाष्य में देखिये ॥ २ ॥

अथ तृतीया–

१ २ ३ २र ३ १ २ ३ १ २ ३ २
तमु ष्टवाम यं गिर इन्द्रमुक्थ्यानि वावृधुः ।
३ १ २ ३ २ ३ १ २
पुरूण्यस्य पौंस्या सिषासन्तो वनामहे ॥३॥ [१९](८८५)

इति द्वितीयोऽर्धः प्रपाठकः द्वितीयश्च प्रपाठकः समाप्तः ॥२॥

पदपाठः–तम् २ । उ अ० । स्तवाम क्रि० । यम् २ । गिरः १ । इन्द्रम् २ । उक्थ्यानि २ । वावृधुः क्रि० । पुरूणि २ । अस्य ६ । पौंस्या २ । सिषासन्तः १ वनामहे क्रि० ॥

अन्वितपदार्थः–वयम् (तम् उ) तमेव (स्तवाम) ( यम् ) ( इन्द्रं ) परमात्मानं ( गिरः ) वेदवाचः ( वावृधुः ) वर्धयन्ति ज्ञानापेक्षया न तु वस्तुतः तस्य वृद्धिह्रासानर्हत्वात् अथच (उक्थ्यानि) स्तुत्यानि (पुरूणि) बहूनि अनन्तानि (अस्य) परमात्मनः

(पौंस्या) पौंस्यानि वीर्याणि अखिलब्रह्माण्डमण्डलधारणादीनि (सिषासन्तः) वर्णयितुमिच्छन्तोवयं (वनामहे) संभजामहे ॥ ऋग्वेदे ९। १५। ६ ऽपि ॥ ३ ॥

इति श्रीमत्कण्ववंशावतंस पण्डित हज़ारीलाल स्वामिसूनुना
हस्तिनापुर पार्श्ववर्त्ति–परीक्षितगढ निवासिना
तुलसीरामस्वामिना
कृते सामवेदभाष्ये उत्तरार्चिके चतुर्थोध्यायः ॥ ४ ॥
तृतीयमहः समाप्तमिति विवरणकारः ॥

भाषार्थः–हम (तम् उ) उसी की (स्तवाम) स्तुति करें (यम्) जिस (इन्द्रम्) परमात्मा [के ज्ञान] को (गिरः) वेदवाणियें (वावृधुः) बढ़ाती हैं। और (अस्य) इस परमात्मा के (उक्थ्यानि) स्तुतियोग्य (पुरूणि) बहुत=अनन्त (पौंस्या) अखिलब्रह्माण्डमण्डलधारणादि पुरुषार्थों को (सिषासन्तः) वर्णन करना चाहते हुवे हम (वनामहे) भजते हैं ॥ ऋ० ९। १५। ६ में भी ॥ ३ ॥

यह
श्रीमान् कण्ववंशावतंस पं० हज़ारीलाल स्वामी के पुत्र
परीक्षितगढ़ ज़िला मेरठ निवासी
तुलसीरामस्वामिकृत
सामवेदभाष्य उत्तरार्चिक का चतुर्थाध्याय संपूर्ण हुवा ॥ ४ ॥

——०:*×*:०——

——:*:*:——

ओ३म्

# अथ पञ्चमाध्यायः

## अथ तृतीयः प्रपाठकः

अथ चतुर्थमहरारभ्यते, द्वितीयस्त्रिरात्रः। प्रसृतच्छन्दाः प्रथमस्त्रिरात्रः। अथोत्तरस्य छन्दांसि व्यूहन्ति जगत्यः प्रतिपदः जगतीस्थाने त्रिष्टुभः। त्रिष्टुभां गायत्र्यः। तत्रैषा चतुर्थस्य प्रतिपदिति विवरणकारः॥

तत्र

प्रथमे खण्डे प्रतआश्विनीरिति प्रथमतृचस्य—आकृष्टाभाषा ऋषिः। पवमानः सोमो देवता। जगतीछन्दः॥ तत्र प्रथमा—

२ ३ १ २        ३ १ २ ३ १ २ ३ १ २ ३ १ २<br>
प्रतआश्विनीः पवमानधेनवोदिव्या असृग्रन् पयसा धरीमणि।<br>
१र २र ३ १ २        ३ १ २ ३१ २     ३ १ २<br>
प्रान्तरिक्षात्स्थाविरीस्ते असृक्षत ये त्वा मृजन्त्यृषिषाण वेधसः<br>
॥ १ ॥ ( ८८६ )

पदपाठः—प्र अ०। ते ६। आश्विनीः १। पवमान सं०। धेनवः १। दिव्याः १। असृग्रन् क्रि०। पयसा ३। धरीमणि ७। प्र अ०। अन्तरिक्षात् ५। स्थाविरीः २। ते १। असृक्षत क्रि०। ये १। त्वा २। मृजन्ति क्रि०। ऋषिषाण सं०। वेधसः १॥

अन्वितपदार्थः—( पवमान ) शुद्धिकर्त्तः! ( ऋषिषाण ) ऋषिसेवित! चन्द्रकिरणगतसोम! ( ते ) तव ( आश्विनीः ) व्याप्ताः ( धेनवः ) प्रीणयित्र्यः ( दिव्याः ) आन्तरिक्ष्या रश्मयः ( पयसा ) जलेन युक्ताः ( धरीमणि ) धारके मेघमण्डले ( प्राऽसृग्रन् ) प्रसृता भवन्ति। अतएव ( ये ) ( वेधसः ) विद्वांस

ऋत्विजः ( त्वा ) त्वां लतारूपं सोमं ( मृजन्ति ) यज्ञेऽभिषुण्वन्ति ( ते ) ( स्थाविरीः ) स्थविरा धाराः ( अन्तरिक्षात् ) सकाशात् ( प्राऽसृक्षत ) वर्षयन्ति ॥

ये याज्ञिकाः सोमेन यजन्ते ते चन्द्रकिरणगतसोमरसव्याप्तमेघमण्डलाद् वृष्टिं कारयितुं शक्ता भवन्तीति भावः॥ऋग्वेदे तु ९। ८६। ४ धेनवः=धीजुवः। प्रातर्ऋषयःस्थाविरीरसृक्षत इति भेदेन पाठः ॥ १ ॥

भाषार्थः-( पवमान ) शुद्धिकारक! ( ऋषिषाण ) ऋषिसेवित! चन्द्रकिरणस्थ! सोम! (ते) तेरी (आश्विनीः) व्याप्त (धेनवः) प्रसन्नता करने वाली (दिव्याः) अन्तरिक्षस्थ किरणें ( पयसा ) जल से युक्त ( धरीमणि ) धारक मेघमण्डल में (प्राऽसृग्रन् ) प्रसृत होजाती हैं। इसी लिये ( ये ) जो ( वेधसः ) विद्वान् ऋत्विज् ( त्वा ) तुझ लतारूप सोम को ( मृजन्ति ) [यज्ञ में] अभिषुत करते हैं ( ते ) वे ( स्थाविरीः ) स्थूल जलधारों को ( अन्तरिक्षात् ) अन्तरिक्ष से ( प्र-असृक्षत ) वर्षा लेते हैं ॥

जो याज्ञिक लोग सोम से यजन करते हैं वे चन्द्रकिरणस्थ सोमरस से व्याप्त मेघमण्डल से वर्षा कराने में समर्थ होते हैं। यह तात्पर्य है ॥ ऋ० ९। ८६। ४ का पाठभेद संस्कृतभाष्य में देखिये ॥ १ ॥

अथ द्वितीया-

३ २३ १२ ३१२ ३१२ २१र २र ३१२
उभयतः पवमानस्य रश्मयो ध्रुवस्य सतः परियन्ति केतवः।
१२ ३२३ १२३२३२३ २३ १र २र ३१२
यदी पवित्रे अधिमृज्यते हरिः सत्ता नि योनौ कलशेषु सीदति ॥
॥ २ ॥ ( ८८७ )

पदपाठः-उभयतः अ०। पवमानस्य ६। रश्मयः १। ध्रुवस्य,सतः६। परियन्ति क्रि०। केतवः १। यदि अ०। पवित्रे ७। अधिमृज्यते क्रि०। हरिः१। सत्ता १। नि अ०। योनौ ७। कलशेषु ७। सीदति क्रि० ॥

अन्वितपदार्थः–( यदि ) यदा ( हरिः ) सोमः (पवित्रे) दशापवित्रे ( अधिमृज्यते ) अभिषूयते । यदा च( सत्ता ) सोमसत्ता ( योनौ ) स्थाने ( कलशेषु ) द्रोणकलशेषु (निषीदति) तिष्ठति तदा (पवमानस्य) सोमस्य (ध्रुवस्य) निश्चलस्य (सतः) भवतः ( केतवः ) ज्ञापकाः ( रश्मयः ) किरणाः ( उभयतः ) इतश्चामुतश्च ( परियन्ति ) सर्वतोगच्छन्ति ॥ ऋग्वेदे तु ९। ८६।६ योना इति भेदेन पाठः ॥ २ ॥

भाषार्थः–( यदि ) जब ( हरिः ) सोम ( पवित्रे ) दशापवित्र पर (अधिमृज्यते ) अभिषुत किया जाता है और ( सत्ता ) उस की सत्ता ( योनौ ) स्थान ( कलशेषु ) द्रोणकलशों में (निषीदति ) स्थिर होती है तब (ध्रुवस्य) स्थिर ( सतः ) हुवे ( पवमानस्य ) सोम की ( केतवः ) ज्ञापक ( रश्मयः ) किरणें ( उभयतः ) इधर उधर ( परियन्ति ) सब ओर फैलती हैं ॥

ऋ० ९। ८६। ६ का पाठान्तर संस्कृत भाष्य में देखिये ॥ २ ॥

अथ तृतीया–

२ ३ १ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
विश्वा धामानि विश्वचक्ष ऋभ्वसः प्रभोष्टे सतः परियन्ति केतवः।
३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
व्यानशी पवसे सोम धर्मणा पतिर्विश्वस्य भुवनस्य राजसि॥
॥ ३ ॥ [ १ ] ( ८८८ )

पदपाठः–विश्वा २। धामानि २। विश्वचक्षः सं०। ऋभ्वसः १। प्रभोः, ते, सतः ६। परियन्ति क्रि०। केतवः १। व्यानशी १। पवसे क्रि०। सोम सं०। धर्मणा ३। पतिः १। विश्वस्य, भुवनस्य ६। राजसि क्रि० ॥

अन्वितपदार्थः–(विश्वचक्षः) चक्षुर्हितकरत्वात्सर्वस्य दर्शयितः ! सोम ! (प्रभोः) प्रभावशालिनः(सतः) (ते) तव (ऋभ्वसः) महान्तः (केतवः) किरणाः (विश्वा) सर्वाणि (धामानि ) स्थानानि (परियन्ति)सर्वतःप्राप्नुवन्ति(व्यानशी)व्यापनशीलस्त्वं(धर्मणा)

स्वधर्मेण स्वीयप्रभावेण (पवसे) पावयसि । एवं (विश्वस्य भुवनस्य) (पतिः) पालकस्त्वं (राजसि) राजसे ॥

ईश्वरपक्षे-(विश्वचक्षः) हे सर्वसाक्षिन् ! (प्रभोःसतःते) (ऋभ्वसः) (केतवः) किरणा इव व्याप्तयः (विश्वा धामानि परियन्ति । व्यानशी धर्मणा पवसे। विश्वस्य भुवनस्य राजसि) ॥ ऋभ्वाइति महन्नाम इति सायणः ॥

ऋग्वेदे तु ९।८६।५ प्रभोस्ते। व्यानशिः। धर्मभिःइतिपाठाः॥३॥

भाषार्थः-(विश्वचक्षः) सब की आंखों को हितकारी होने से दिखाने वाले ! सोम ! वा सर्वसाक्षिन्नीश्वर ! (प्रभोः) प्रभावशाली (सतः) हुवे वा समर्थ और नित्य (ते) तेरी (ऋभ्वसः) बड़ी (केतवः) किरणें=लहरें वा व्याप्तियें (विश्वा) सब (धामानि) स्थानों को (परियन्ति) सर्वतः प्राप्त होजाती वा होती हैं (व्यानशी) व्याप्ति वाला तू (धर्मणा) अपने प्रभाव वा स्वभाव से (पवसे) पवित्र करता है। इस प्रकार तू (विश्वस्य) सब (भुवनस्य) जगत् का (राजसि) राजा है ॥

सायणभाष्य और ऋ० ९।८६।५ के पाठान्तर संस्कृत भाष्य में देखिये॥३॥

अथ द्वितीयतृचस्य-असह्वीयुर्ऋषिः । पवमानः सोमोदेवता । गायत्री छन्दः ॥ तत्र प्रथमा-

१२ ३ २ ३ १र २र ३ २

पवमानो अजीजनद्दिवश्चित्रं न तन्यतुम् ।

१ २ ३ २ ३ २

ज्योतिर्वैश्वानरं बृहत् ॥१॥ (८८९) व्याख्याता (४८४)

अथ तृतीया-

१ २ ३ २ ३ २ ३ १ ३ ३ २

पवमान रसस्तव मदोराजन्नदुच्छुनः ।

२३ २

वि वारमव्यमर्षति ॥ २ ॥ (८९०)

पदपाठः—पवमान सं० । रसः १ । तव ६ । मदः १ । राजन् सं० । अदुच्छुनः १ । वि अ० । वारम्, अव्यम् २ । अर्षति क्रि० ॥

अन्वितपदार्थः—( पवमान ) हे परमात्मन् ! वा सोम ! (राजन्) ! ( तव ) त्वदीयः ( अदुच्छनः ) अदुष्टः (मदः)हर्षप्रदः (रसः) आनन्दो रसोवा ( अव्यं वारं ) सूर्यादिसम्बन्धिनं मण्डलम्, अथवाऽविभवं दशापवित्रम् ( अर्षति ) प्राप्नोति ॥ ऋग्वेदे तु ९ । ६१ । १७ पवमानस्य ते रस इत्यन्तरम् ॥२॥

भावार्थः—( पवमान ) हे परमात्मन् ! वा सोम ! ( राजन् ) प्रकाशक ! (तव) तेरा (अदुच्छुनः) दोषरहित ( मदः ) हृष्टिकारक ( रसः ) आनन्द वा रस ( अव्यं वारम् ) सूर्यादि के मण्डल वा ऊन के दशापवित्र को (अर्षति) प्राप्त होता है ॥ ऋ० ९ । ६१ । १७ का पाठान्तर संस्कृत भाष्य में देखिये ॥२॥

अथ तृतीया—

१२ ३ २३२ ३ १२ ३२
पवमानस्य ते रसो दक्षो विराजति द्युमान् ।
२३ २३ २र३२
ज्योतिर्विश्वं स्वर्दृशे ॥ ३ ॥ [ २ ] (८९१)

पदपाठः—पवमानस्य, ते ६ । रसः, दक्षः १ । विराजति क्रि० । द्युमान् १ । ज्योतिः, विश्वम् २ । स्वः अ० । दृशे ४ ॥

अन्वितपदार्थः—( पवमानस्य) परमात्मनः,सोमस्य वा(ते) तव ( द्युमान् ) तेजोयुक्तः ( दक्षः ) बली (रसः) आनन्दो रसो वा ( विश्वं ) सर्वं ( ज्योतिः ) प्रकाशं ( स्वः ) सुखंच (दृशे) दर्शयितुं ( विराजति ) ॥

ऋग्वेदे तु ९ । ६१ । १८ पवमानरसस्तवेति पूर्वमन्त्रवत्पाठः ॥३॥

भावार्थः—( पवमानस्य ) पवित्र परमात्मा, वा सोम ( ते ) आप का, वा तेरा ( द्युमान् ) तेजोयुक्त ( दक्षः ) बलवान् ( रसः ) आनन्द वा रस ( विश्वम् ) सब ( ज्योतिः ) ज्योति और (स्वः) सुख को (दृशे) दिखाने को

लिये (विराजति) विराज रहा है ॥ ऋ० ९ । ६१ । १८ का पाठान्तर संस्कृत भाष्य में देखिये ॥ ३ ॥

अथ षड्ऋचस्य तृतीयसूक्तस्य–मेध्यातिथिर्ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः ॥ तत्र प्रथमा–

२उ ३ १ २र ३ २ ३ २ ३ १ २
प्र यद् गावो न भूर्णयस्त्वेषा अयासो अक्रतुः ।
१ २ ३ २उ ३ १ २
घ्नन्तः कृष्णामप त्वचम् ॥१॥ (८९२) व्याख्याता (४९१)

अथ द्वितीया–

३ १ २ ३ २ ३ १ २ ३क २र
सुवितस्य वनामहेऽतिसेतुं दुराय्यम् ।
३ २ ३ १ २ ३ २
साह्याम दस्युमव्रतम् ॥ २ ॥ ( ८९३ )

पदपाठः–सुवितस्य ६। वनामहे क्रि०। अतिसेतुं, दुराय्यम् २। साह्याम क्रि० । दस्युम्, अव्रतम् २ ॥

अन्वितपदार्थः–(सुवितस्य) अभिषुतस्य सोमस्य (वनामहे) प्रशंसां कुर्मः । येन (अतिसेतुम्) उल्लङ्घितमर्यादं (दुराय्यं) दुर्वारम् (अव्रतम्) अकर्मण्यम् (दस्युम्) शत्रुम् (साह्याम) अभिभवेम ॥ ऋग्वेदे तु ९ । ४१ । २ मनामहे । दुराव्यम् । साह्वांसः । इति पाठाः ॥ २ ॥

भाषार्थः–(सुवितस्य) अभिषुत सोम की (वनामहे) हम प्रशंसा करते हैं जिस से हम (अतिसेतुम्) मर्यादा के तोड़ने वाले (दुराय्यम्) जिसका रोकना कठिन हो उस (अव्रतम्) कर्म के त्यागी वा विरोधी (दस्युम्) शत्रु को (अभिभवेम) तिरस्कृत करें ॥ ऋ० ९ । ४१ । २ के पाठभेद संस्कृत भाष्य में देखिये ॥ २ ॥

अथ तृतीया–

३ २ ३ १ २ ३ १र २र ३ १ २
शृण्वे वृष्टेरिव स्वनः पवमानस्य शुष्मिणः ।

१२ ३ १ २ ३ २
चरन्ति विद्युतो दिवि ॥ ३ ॥ ( ८९४ )

पदपाठः—श्रृण्वे क्रि० । वृष्टेः ६ । इव अ० । स्वनः १ । पवमानस्य, शुष्मिणः ६ । चरन्ति क्रि० । विद्युतः १ । दिवि ७ ॥

अन्वितपदार्थः—(शुष्मिणः) बलवतः(पवमानस्य) सोमस्य (स्वनः) शब्दः (वृष्टेः) वर्षणस्य स्वनः (इव) (श्रृण्वे) श्रूयते । (दिवि) अन्तरिक्षे (विद्युतः) सौदामिन्यः (चरन्ति) ॥ ऋग्वेदे ९ । ४१ । ३ऽपि ॥ ३ ॥

भाषार्थः—( शुष्मिणः ) बलवान् ( पवमानस्य ) सोमका ( स्वनः)शब्द ( वृष्टेः ) वर्षा के शब्द (इव) सा (श्रृण्वे)सुनाई दिया करता है । ( विद्युतः) बिजुलियें ( दिवि ) आकाश में ( चरन्ति ) घूमती चमकती हैं ॥ ऋ० ९ । ४१ । ३ में भी ॥ ३ ॥

अथ चतुर्थी—

१ २ ३२र ३ १ २ ३ १ २
आ पवस्व महीमिषं गोमदिन्दो हिरण्यवत् ।
१ २ ३ १ २
अश्ववत्सोम वीरवत् ॥ ४ ॥ ( ८९५ )

पदपाठः—आपवस्व क्रि० । महीम्, इषम् २ । गोमत् २ । इन्दो सं० । हिरण्यवत्, अश्ववत् २ । सोम सं० । वीरवत् २ ॥

अन्वितपदार्थः—( इन्दो ) आर्द्र ! वा करुणामृतवारिधे ! ( सोम ) ओषधे ! वा परमात्मन् ! कृपया (गोमत् ) गोयुक्तम् ( अश्ववत् ) अश्वयुक्तं ( हिरण्यवत् ) धनयुक्तं ( वीरवत् ) पुत्रादियुक्तं (महीम् इषम्) महत् अन्नम् (आपवस्व) ॥ ऋग्वेदे तु ९ । ४१ । ४ अश्वावद्वाजवत्सुतः इति तृतीयपादपाठः ॥ ४ ॥

भाषार्थः—( इन्दो ) गीले ! वा करुणामृतवारिधे ! ( सोम ) ओषधे ! वा परमात्मन् ! कृपया ( गोमत् ) गौवों से युक्त ( अश्ववत् ) अश्वयुक्त ( हि-

रययवत् ) सुवर्णादि धनयुक्त ( वीरवत् ) और पुत्रादिसहित ( महीम् इषम् ) बहुत अन्न को ( आपवस्व ) प्राप्त कराइये ॥

ऋ० ९ । ४१ । ४ का पाठान्तर संस्कृत भाष्य में देखिये ॥ ४ ॥

अथ पञ्चमी—

१२ ३ २ ३ १ २र

पवस्व विश्वचर्षण आ मही रोदसी पृण ।

३२उ ३ २ ३ १ २

उषाः सूर्यो न रश्मिभिः ॥ ५ ॥ ( ८९६ )

पदपाठः—पवस्व क्रि० । विश्वचर्षणे सं० । आ अ० । मही, रोदसी २ । पृण क्रि० । उषाः २ । सूर्यः १ । न अ० । रश्मिभिः ३ ॥

अन्वितपदार्थः—( विश्वचर्षणे ) सर्वस्य चक्षुर्हितकर ! वा सर्वद्रष्टः ! परमेश्वर ! (न) यथा (सूर्यः) आदित्यः (रश्मिभिः) किरणैः ( उषाः ) प्रभातान् पृणति तथा ( मही ) महत्यौ (रोदसी) रोदस्यौ (आ पृण) आ पूरय ॥ ऋग्वेदे तु ९।४१। ५ सपवस्वेत्यन्तरम् ॥ ५ ॥

भावार्थः—( विश्वचर्षणे ) सब की आंखों के हितकारक ! वा सर्वद्रष्टा ! परमेश्वर ! ( न ) जैसे ( सूर्यः ) सूर्य ( रश्मिभिः ) किरणों से (उषाः) प्रभातों को भर देता है वैसे ही ( मही ) बड़े ( रोदसी ) द्युलोक और पृथिवी लोक को ( आ पृण ) भर दीजिये [ रसप्रभाव वा कृपा से ] ऋ० ९ । ४१ । ५ का पाठान्तर संस्कृत भाष्य में देखिये ॥ ५ ॥

अथ षष्ठी—

१ २ ३२ ३ १२ ३ १२

परि नः शर्मयन्त्या धारया सोम विश्वतः ।

१ २ ३१ २ ३ १ २

सरा रसेव विष्टपम् ॥ ६ ॥ [ ३ ] ( ८९७ )

पदपाठः—परि अ० । नः ४ । शर्मयन्त्या, धारया ३ । सोम सं० । विश्वतः अ० । सर क्रि० । रसेव अ० । विष्टपम् २ ॥

अन्वितपदार्थः-( सोम ) ओषधिराज ! वा परमात्मन् ! ( नः ) अस्मभ्यं ( शर्मयन्त्या ) सुखदाऽया ( धारया ) (विश्वतः ) सर्वतः ( परिस्र ) प्राप्नुहि । दृष्टान्तः-( रसेव) नदीव (विष्टपम्) निम्नप्रदेशम् ॥ ऋग्वेदे ९ । ४१ । ६ ऽपि ॥ ६ ॥

भावार्थः-( सोम ) ओषधिराज ! वा हे परमात्मन् ! ( नः ) हमारे लिये ( शर्मयन्त्या ) सुखदायिनी (धारया ) धारा से ( विश्वतः ) सब ओर (परिस्र ) प्राप्त हूजिये । दृष्टान्त-( रसेव ) जैसे नदी ( विष्टपम् ) नीचे प्रदेश को ॥ ऋ० ९ । ४१ । ६ में भी ॥ ६ ॥

अथ द्वितीयखण्डे षडृचस्य प्रथमसूक्तस्य-बृहन्मतिर्ऋषिः । पवमानः सोमोदेवता । गायत्री छन्दः ॥ तत्र प्रथमा-

३ १ २ ३ १ २ ३ २ ३ १ २
आशुरर्ष बृहन्मते परि प्रियेण धाम्ना ।
१ २ ३ २ उ ३ १ २
यत्र देवा इति ब्रवन् ॥ १ ॥ (८९८)

पदपाठः-आशुः १ । अर्ष क्रि० । बृहन्मते सं० । परि अ० । प्रियेण, धाम्ना ३ । यत्र अ० । देवाः १ । इति अ० । ब्रवन् १ ॥

अन्वितपदार्थः-( बृहन्मते ) बुद्धिवर्धक ! सोम ! (प्रियेण) हितकरेण (धाम्ना) स्वरूपेण ( आशुः ) शीघ्रगः (यत्र) (देवाः) वाय्वादयः (इति) एवं (ब्रवन्) ब्रुवन्निव (पर्यऽर्ष) परितोगच्छ ॥ सोमस्य जडत्वेऽपि ब्रुवन्नितिव्यपदेश आलङ्कारिको वेद्यः ॥ ऋग्वेदे ९ । ३९ । १ ऽपि ॥ १ ॥

भावार्थः-( बृहन्मते ) बुद्धिवर्धक ! सोम ! ( प्रियेण ) प्यारे (धाम्ना) स्वरूप से ( आशुः ) शीघ्रगामी ( यत्र ) जहां ( देवाः ) वायुआदि देव हैं ( इति ) ऐसे ( ब्रवन् ) बोलता हुवा सा ( परि अर्ष ) सब ओर फैल॥

सोम के जड होने पर भी बोलने का व्यपदेश अलङ्कार की रीति पर जानिये ॥ ऋ० ९ । ३९ । १ में भी ॥ २ ॥

अथ द्वितीया–

३ १र २र ३ १ २ ३ २ ३ १ २
परिष्कृण्वन्ननिष्कृतं जनाय यातयन्निषः ।
३ २ ३ १ २र
वृष्टिं दिवः परिस्रव ॥ २ ॥ (८९९)

पदपाठः–परिष्कृण्वन् १ । अनिष्कृतम् २ । जनाय ४ । यातयन् १ । इषः २ । वृष्टिम् २ । दिवः ५ । परिस्रव क्रि० ॥

अन्वितपदार्थः–प्रकरणात्सोम ! ( अनिष्कृतम् ) अपरिपूतं ( परिष्कृण्वन् ) पूतंकुर्वन् ( जनाय ) लोकाय ( इषः ) अन्नानि ( यातयन् ) प्राप्तव्यानिकुर्वन् ( दिवः ) अन्तरिक्षात् ( वृष्टिं ) वर्षणं ( परिस्रव ) च्यावय ॥ ऋग्वेदे ९ । ३९ । २ ऽपि ॥ २ ॥

भावार्थः–[ प्रकरण से ] "सोम" ! ( अनिष्कृतम् ) अपवित्र को ( परिष्कृण्वन् ) पवित्र करता हुवा और ( जनाय ) लोगों के लिये ( इषः ) अन्नों को ( यातयन् ) प्राप्तव्य करता हुवा ( दिवः ) आकाश से ( वृष्टिम् ) वर्षा को ( परिस्रव ) चुवा ॥ ऋ० ९ । ३९ । २ में भी ॥ २ ॥

अथ तृतीया–

३ २उ ३ १र २र ३ १ २ ३ २ ३ २
अयꣳस यो दिवस्परि रघुयामा पवित्र आ ।
१ २ ३ १ २र
सिन्धोरूर्मा व्यक्षरत् ॥ ३ ॥ ( ९०० )

पदपाठः–अयम्, सः, यः १ । दिवः ६ । परि अ० । रघुयामा १ । पवित्रे ७ । आ अ० । सिन्धोः ६ । ऊर्मा ७ । व्यक्षरत् क्रि० ॥

अन्वितपदार्थः–( सः अयं ) सोमः ( यः ) ( पवित्रे ) दशापवित्रे ( आ ) आसिच्यमानः ( सिन्धोः ) समुद्रस्यान्तरिक्षस्य

(ऊर्मा) ऊर्मौ वायौ (दिवः परि) द्युलोके (रघुयामा) लघुगमनः सन् (व्यऽक्षरत्) विविधं क्षरति ॥ ऋग्वेदे ९।३९।४ ऽपि ॥३॥

भाषार्थः—(सः) वह (अयम्) यह सोम है (यः) जो (पवित्रे) दशापवित्र पर (आ) आसिञ्चन किया जाता और (सिन्धोः) समुद्र=अन्तरिक्ष की (ऊर्मा) लहर= वायु में (दिवः परि) द्युलोक में (रघुयामा) हलकीचाल वाला होकर (व्यक्षरत्) विविध प्रकार से पहुंचता है ॥ ऋ० ९।३९।४ में भी ॥ ३ ॥

अथ चतुर्थी—

३ १ २ ३ २ ३ २उ ३ १ २ ३ १ २
सुत एति पवित्र आ त्विषिं दधानओजसा ।
३ १ २ ३ १ २
विचक्षाणो विरोचयन् ॥ ४ ॥ (९०१)

पदपाठः—सुतः १। एति क्रि०। पवित्रे ७। आ अ०। त्विषिम् २। दधानः १। ओजसा ३। विचक्षाणः, विरोचयन् १ ॥

अन्वितपदार्थः—(पवित्रे) दशापवित्रे (सुतः) अभिषुतः (विचक्षाणः) चटचटाशब्दं कुर्वन् (विरोचयन्) प्रकाशमानः (त्विषिम्) दीप्तिम् (आ दधानः) लोकेष्वादधत् (ओजसा) बलेन (एति) दिवमितिशेषः ॥ ऋग्वेदे ९। ३९।३ऽपि ॥४॥

भाषार्थः—(पवित्रे) दशापवित्र पर (सुतः) अभिषुत सोम (विचक्षाणः) शब्द करता हुवा और (विरोचयन्) प्रकाश करता हुवा तथा (त्विषिम्) तेज का (आदधानः) लोकों में आधान करता हुवा (ओजसा) बल से (एति) द्युलोक को जाता है ॥ ऋ० ९। ३९। ३ में भी ॥ ४ ॥

अथ पञ्चमी—

३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
आविवासन्परावतो अथो अर्वावतः सुतः ।

१ २ ३ १ २
इन्द्राय सिच्यते मधु ॥ ५ ॥ ( १०२ )

पदपाठः—आविवासन् १। परावतः २। अथो अ०। अर्वावतः २। सुतः १। इन्द्राय ४। सिच्यते क्रि०। मधु २॥

अन्वितपदार्थः—( सुतः ) अभिषुतः सोमः ( परावतः ) दूरस्थान् ( अथो ) ( अर्वावतः ) समीपस्थान् वाय्वादीन् (मधु) माधुर्यम् (आविवासन्) प्रापयन् (इन्द्राय) वृष्टिकृते (सिच्यते) हूयते ॥ ऋग्वेदे ९। ३९। ५ ऽपि ॥ ५ ॥

भावार्थः—( सुतः ) अभिषुत किया सोम ( परावतः ) दूरस्थ ( अथो ) और (अर्वावतः) समीपस्थ वायु आदि को ( मधु ) मिठास (आविवासन् ) प्राप्त कराता हुवा ( इन्द्राय) वृष्टिकारक विद्युत् वा वायु के लिये (सिच्यते) होमा जाता है ॥ ऋ० ९। ३९। ५ में भी ॥ ५ ॥

अथ षष्ठी—

३ १ २ ३ १ २ ३ १ २
समीचीना अनूषत हरिं हिन्वन्त्यद्रिभिः ।
१ ३ १ २ ३ १ २
इन्दुमिन्द्राय पीतये ॥ ६ ॥ [ ४ ] ( १०३ )

पदपाठः—समीचीनाः १। अनूषत क्रि०। हरिम् २। हिन्वन्ति क्रि०। अद्रिभिः ३। इन्दुम् २। इन्द्राय ४। पीतये ४॥

अन्वितपदार्थः—(समीचीनाः) ऋत्विजः ( हरिम् ) हरितम् ( इन्दुम् ) आर्द्रं सोमम् ( अद्रिभिः ) ग्रावभिः ( हिन्वन्ति ) अभिषुण्वन्ति ( इन्द्राय ) वृष्टिकृते वा राज्ञे सोमयाजिने यजमानाय ( पीतये ) पानार्थम् ( अनूषत ) प्रशंसन्ति ॥ ऋग्वेदे तु ९। ३९। ६ योनावृतस्य सीदतेतितृतीयः पादोऽन्तरेण ॥६॥

भावार्थः—(समीचीनाः) भद्र पुरुष ऋत्विज् लोग (हरिम्) हरे (इन्दुम्) गीले सोम को (अद्रिभिः) पत्थरों से (हिन्वन्ति) अभिषुत करते हैं। और

(इन्द्राय) इन्द्र वा सोमयाजी यजमान राजा के लिये (पीतये) पानार्थ (अनूषत) प्रशंसा करते हैं ॥ ऋ० ९। ३९। ६ का पाठान्तर संस्कृतभाष्य में देखिये ॥६॥

अथ द्वितीयस्य तृचसूक्तस्य—भृगुर्वारुणिर्जमदग्निर्ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः॥ तत्र प्रथमा—

३ २ ३ २३ १ २३ १ २ ३ २ ३ १ २
हिन्वन्ति सूरमुस्रयः स्वसारो जामयस्पतिम्।
३ १ २र ३ १ २
महामिन्दुं महीयुवः ॥ १ ॥ ( ९०४ )

पदपाठः—हिन्वन्ति क्रि०। सूरम् २। उस्रयः, स्वसारः, जामयः १। पतिम्, महाम्, इन्दुम् २। महीयुवः १॥

अन्वितपदार्थः—यथा ( उस्रयः ) सूर्यरश्मयः ( स्वसारः) परस्परं भगिन्यः (जामयः) स्त्रीभूताः ( पतिम् ) पालकं ( सूरम् ) सूर्यम् ( हिन्वन्ति ) सेवन्ते तथैव ( महीयुवः ) पृथिवीसंसृष्टाः सोमरश्मयोऽपि ( महाम् ) प्रशंसनीयम् ( इन्दुम् ) सोमं हिन्वन्ति ॥

यद्वा—(उस्रयः) कर्मार्थं निवसन्त्यः सर्वत्र गन्त्र्यः (जामयः) स्त्रियः ( स्वसारः ) एकस्मात्पाणेरुत्पन्नत्वात्परस्परं भगिन्योऽङ्गुलयः ( महीयुवः ) सोमाऽभिषवं कामयमानाः सत्यः (सूरं) सुवीर्यं [सोमे पीते वीर्यं भवत्यतः] ( पतिम् ) सर्वस्य वीर्यकरत्वात्पालनसमर्थं ( महाम् ) मंहनीयं प्रशस्यम् ( इन्दुम् ) ग्रहेषु घटेषु स्यन्दमानं सोमं ( हिन्वन्ति ) प्रेरयन्ति ॥

स्वसार इत्यङ्गुलिनाम निघं० २।५॥ हिन्वन्तीति हिवेः प्रीणनार्थस्य ( भ्वा० प०) धातोरूपम् ॥ ऋग्वेदे ९।६५।१ ऽपि ॥१॥

भाषार्थः—जैसे ( उस्रयः ) सूर्यकिरणें ( स्वसारः ) आपस में भगिनियें (जामयः) स्त्रीरूपिणियें (पतिम्) पालक (सूरम्) सूर्य को (हिन्वन्ति) मानो

प्रीति से सेवन करती हैं वैसे ही (महीयुवः) पृथिवी से छुई हुई सोमकिरणें ( महाम् ) प्रशंसनीय ( इन्दुम् ) सोम का सेवन करती हैं ॥

यद्वा-( जामयः ) स्त्रीरूपिणी (स्वसारः) एक हाथ से उत्पन्न होने से परस्पर भगिनी अङ्गुलियें (उस्रयः) कर्म के लिये रहने वाली (महीयुवः)सोम-के अभिषव करने को चाहती हुई (सूरम्) सुन्दर वीर्य वाले। क्योंकि सोम-पान से वीर्य बढ़ता है। ( पतिम् )पतिरूपपालक( महाम् ) प्रशंसनीय( इन्दुम्) ग्रह नामक सोम के घटों में टपकते सोम को (हिन्वन्ति) प्रेरित करती हैं ॥

निघण्टु २।५ इत्यादि प्रमाण संस्कृतभाष्य में देखिये॥ ऋ०९।६५ १ में भी ॥ १ ॥

अथ द्वितीया-

१२ ३१ २३ ३१ ३१ २ ३२

पवमान रुचा रुचा देव देवेभ्यः सुतः ।

२ ३ २३ १ २

विश्वा वसून्याविश ॥ २ ॥ ( ९०५ )

पदपाठः-पवमान सं० । रुचा, रुचा ३ । देव सं० । देवेभ्यः ४ । सुतः १ । विश्वा २ । वसूनि २ । आविश क्रि० ॥

अन्वितपदार्थः-(देव) दिव्यगुणसंपन्न ! (पवमान ) शुद्धिं कुर्वाण ! सोम ! वा परमात्मन् ! ( रुचा, रुचा ) पूर्णेन तेजसा सह (देवेभ्यः) वाय्वादिभ्योविद्वद्भ्योवा (सुतः) अभिषुतो ध्यातो वा ( विश्वा ) सर्वाणि ( वसूनि ) धनानि ( आविश) प्रविष्टो-ऽसि अतो हि सर्ववसुलाभोऽस्ति शक्यो भवितुं सोमयागेन पर-मात्मध्यानेन वा॥ ऋग्वेदेतु९।६५।२ देवेभ्यस्परि इति पाठः ॥२॥

भावार्थः-( देव ) दिव्यगुणसपन्न ! ( पवमान ) पवित्ताकारक ! सोम ! वा परमात्मन् ! ( रुचा, रुचा ) पूर्ण तेज के साथ ( देवेभ्यः ) वायु-आदि वा विद्वानों के लिये (सुतः) अभिषुत किया हुआ वा ध्यान किया हुवा ( विश्वा ) सब ( वसूनि ) धनों में (आविश) आवेश किये हुवे है। इस लिये सोमयाग से वा परमात्मा के ध्यान से सब पदार्थों की प्राप्ति हो सकती है ॥ ऋ० ९ । ६५ । २ का पाठान्तर संस्कृतभाष्य में देखिये ॥ २ ॥

अथ तृतीया—

१ २ ३ २ २ ३ ३ २ ३ १ २
आ पवमान सुष्टुतिं वृष्टिं देवेभ्यो दुवः ।
३ १ २ ३ १ २
इषे पवस्व संयतम् ॥३॥ [ ५ ] ( १०६ )

पदपाठः—आ अ०। पवमान सं०। सुष्टुतिं, वृष्टिम् २। देवेभ्यः ४=६। दुवः ४। इषे ४। पवस्व क्रि०। संयतम् २॥

अन्वितपदार्थः—(पवमान) सोम! वा परमात्मन्! (देवेभ्यः) देवानां (दुवः) दुवसे परिचरणाय देवयजनाय (इषे) अन्नोत्पादाय (संयतम्) नियमानुसारम् (सुष्टुतिं) प्रशस्यां (वृष्टिम्) (आपवस्व) क्षारय ॥ ऋग्वेदे ९। ६५। ३ ऽपि ॥३॥

भावार्थः—(पवमान) सोम! वा परमात्मन्! (देवेभ्यः) देवों की (दुवः) परिचर्या=देवयजन के लिये (इषे) अन्नोत्पत्त्यर्थ (संयतम्) ठीक समय और नियम से (सुष्टुतिं, वृष्टिम्) प्रशंसनीय वर्षा को (आपवस्व) वर्षाइये॥ ऋ० ९। ६५। ३ में भी ॥ ३ ॥

उक्तं बहिष्पवमानमेकविंशतिस्तौमिकम्,
इदानीमाज्यानि वक्तव्यानि, इति विवरणकारः ॥

अथ तृतीयखण्डे प्रथमतृचस्य—सुतंभर आत्रेय ऋषिः। अग्निर्देवता। जगतीछन्दः ॥ तत्र प्रथमा—

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
जनस्य गोपा अजनिष्ट जागृविरग्निः सुदक्षः सुविताय नव्यसे।
३ १ २ ३ १ २ ३ १ २ ३ १र २र ३ २ ३ १ २
घृतप्रतीको बृहता दिविस्पृशा द्युमद्विभाति भरतेभ्यः शुचिः ॥
॥ १ ॥ ( १०७ )

पदपाठः—जनस्य ६। गोपाः १। अजनिष्ट क्रि०। जागृविः, अग्निः, सुदक्षः १। सुविताय ४। नव्यसे ४। घृतप्रतीकः १। बृहता, दिविस्पृशा ३। द्युमत् २। विभाति क्रि०। भरतेभ्यः ४। शुचिः १॥

अन्वितपदार्थः—( जनस्य ) लोकस्य ( गोपाः ) रक्षकः ( जागृविः ) अनिद्रः ( सुदक्षः ) सुबलः ( अग्निः ) (नव्यसे) नवतराय ( सुविताय ) लोकानां कल्याणाय ( अजनिष्ट ) वेद्यां प्रादुर्भवति । अनन्तरम् ( घृतप्रतीकः ) घृतमुखः (शुचिः) शुद्धिकरः ( दिविस्पृशा ) अन्तरिक्षगेण ( बृहता ) महता तेजसा ( भरतेभ्यः ) ऋत्विगादिभ्यस्तद्धितार्थं ( विभाति ) प्रकाशते ॥

भरता इत्यृत्विङ्नाम निघं० ३ । १८ सायणाचार्येण न जाने कस्मात् विभातीति विरुपसर्गो न व्याख्यातः ॥ ऋग्वेदे ५ । ११।१ ऽपि ॥ यजुर्वेदे च। १५ । २७ ऽपि ॥ १ ॥

भावार्थः—( जनस्य ) लोक का ( गोपाः ) रक्षक (जागृविः ) जागने और जगाने वाला ( सुदक्षः ) सुन्दर बलवान् ( अग्निः ) अग्नि ( नव्यसे ) अतिनवीन ( सुविताय ) सुख वा कल्याण के लिये ( अजनिष्ट ) [ वेदी में] उत्पन्न होता और ( घृतप्रतीकः ) घृतमुख ( शुचिः ) शुद्धिकारक वह (दिविस्पृशा) अन्तरिक्षगामी ( बृहता ) बड़े तेज से ( भरतेभ्यः ) ऋत्विज् आदि के हितार्थ ( विभाति ) प्रकाश करता है ॥

निघण्टु ३ । १८ का प्रमाण संस्कृत भाष्य में देखिये॥ न जाने सायणाचार्य ने क्यों " विभाति " के " वि " उपसर्ग का अर्थ नहीं किया ॥ ऋ० ५ । ११ । १ और यजुः १५ । २७ में भी ॥ १ ॥

अथ द्वितीया—

१ २ ३ १ २ ३ १ २ ३१र २र ३ १ २र
त्वामग्ने अङ्गिरसो गुहाहितमन्वविन्दञ्छिश्रियाणं वने वने।
१ २ ३ १ २ ३ १ २ ३१र २र ३ १ २ ३ १ २
स जायसे मथ्यमानः सहोमहत्त्वामाहुःसहसस्पुत्रमङ्गिरः ॥
॥ २ ॥ ( ९०८ )

पदपाठः—त्वाम् २। अग्ने सं०। अङ्गिरसः १। गुहा १। हितम् २। अनुअ-

विन्दन् क्रि० । शिश्रियाणम् २ । वने,वने ७ । सः १ । जायसे क्रि० । मथ्यमानः १ । सहः,महत् ३ । त्वाम् २ । आहुः क्रि० । सहसः ६ । पुत्रम् २ । अङ्गिरः सं० ॥

अन्वितपदार्थः- ( अग्ने ) ( अङ्गिरः ) अङ्गारवन् ! ( अङ्गिरसः ) ज्ञानिनः ( त्वाम् ) ( गुहा ) गुहायां ( हितम् ) निगूढं ( वने, वने ) वनस्पत्यादिषु ( शिश्रियाणं ) निवसन्तम् ( अन्वविन्दन् ) अन्वेषणेन प्राप्नुवन्ति (सः) स त्वं ( महत् ) महता ( सहः ) सहसा बलेन ( मथ्यमानः ) आलोड्यमानः ( जायसे ) प्रकटीभवसि। अतएव ( त्वाम् )( सहसः पुत्रम् ) बलस्यात्मजम् ( आहुः ) कथयन्ति ॥

यद्वा—( अग्ने ) प्रकाशस्वरूप ! ( अङ्गिरः ) सर्ववेत्तः ! ( अङ्गिरसः ) ज्ञानिनउपासकायोगिनः ( त्वां ) ( गुहाहितम् ) बुद्धौस्थितं ( वने वने ) शून्यस्थानेष्वपि सर्वत्र (शिश्रियाणं) व्यापकत्वेन निवसन्तम् (अन्वविन्दन्) योगेन पश्यन्ति । (सः) स त्वं ( महत् सहः) महता योगबलेन (मथ्यमानः) ध्यायमानः सन् (जायसे) साक्षाद्भवसि। अतएव (त्वां सहसःपुत्रम् आहुः) ॥

ऋग्वेदे ५ । ११ । ६ ऽपि । यजुर्वेदे १५ । २८ च ॥२॥

भावार्थः- ( अग्ने ) अग्ने ! ( अङ्गिरः ) अङ्गारवाले ! ( अङ्गिरसः ) ज्ञानी लोग ( त्वाम् ) तुझ को (गुहा) गुहा में ( हितम् ) छिपे स्थित (वने वने) वन वन में ( शिश्रियाणम् ) रहते हुवे को ( अन्वविन्दन् ) खोज कर पाते हैं ( सः ) वह तू ( महत् ) बड़े ( सहः ) बल से ( मथ्यमानः ) रगड़ा हुवा ( जायसे ) प्रकट होता है । इस लिये ( त्वाम् ) तुझ को ( सहसः ) बल का ( पुत्रम् ) पुत्र (आहुः) कहते हैं ॥

यद्वा-( अग्ने ) प्रकाशस्वरूप ! ( अङ्गिरः ) सर्वज्ञ ! परमात्मन् ! ( अङ्गिरसः ) ज्ञानी उपासक योगी ( त्वाम् ) आप को (गुहा) बुद्धि में (हितम्) अन्तर्यामिता से स्थित (वने वने) वन वन में अर्थात् शून्यस्थानों में भी सर्वत्र

(शिश्रियाणम्) व्यापकता से रहते हुवे को (अन्वविन्दन्) योग से देखते हैं। (सः) वह आप (महत्) बड़े (सहः) बल=परमपुरुषार्थ से (मथ्यमानः) ध्यान रूप रगड़ा लगाये हुवे (जायसे) साक्षात् होते हैं। इस लिये (त्वाम्) आप को (सहसः) परमपुरुषार्थ का (पुत्रम्) उत्पादित पुत्रसमान (आहुः) कहते हैं॥ ऋ० ५। ११। ६ और यजुः १५। २८ में भी॥ २॥

अथ तृतीया—

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १र २ ३ १र २र

यज्ञस्य केतुं प्रथमं पुरोहितमग्निं नरस्त्रिषधस्थे समिन्धते।

१ २ ३ २ ३ २ ३ २ ३ २ ३ २ ३ १र २र ३ १ २र ३ १ २

इन्द्रेण देवैः सरथꣳ स बर्हिषि सीदन्नि होता यजथाय सुक्रतुः॥

॥ ३ ॥ [ ६ ] ( १०१ )

पदपाठः—यज्ञस्य ६। केतुम्, प्रथमम्, पुरोहितम्, अग्निम् २। नरः १। त्रिषधस्थे ७। समिन्धते क्रि०। इन्द्रेण ३। देवैः ३। सरथम् २। सः १। बर्हिषि ७। सीदन् १। नि अ०। होता १। यजथाय ४। सुक्रतुः १॥

अन्वितपदार्थः—( नरः ) उपासका याज्ञिका वा ( त्रिषधस्थे ) नाडीत्रयसहस्थाने, त्रिषवणे कर्मयज्ञे वा ( यज्ञस्य ) योगस्य क्रतोर्वा ( केतुं ) ध्वजरूपं ( प्रथमं ) मुख्यं ( पुरोहितम् ) अग्रेसरम् ( इन्द्रेण ) जीवात्मना ( देवैः ) इन्द्रियैश्च ( सरथम् ) देहरूपे रथे सहासीनम्, अथवा इन्द्रेण विद्युता, देवैर्वाय्वादिभिश्च सरथम् ( अग्निं ) प्रकाशकं परमात्मानं भौतिकं वा ( समिन्धते ) प्रकाशमानं कुर्वन्ति, प्रदीपयन्ति वा। ( सः ) सोऽग्निः ( सुक्रतुः ) यज्ञसौष्ठवकरः ( होता ) कर्मणां हविषां वा नेता (यजथाय) यजनाय (बर्हिषि) ज्ञानयज्ञे कर्मयज्ञे वा ( निषीदन् ) साक्षाद्भवति, प्रज्वलति वा॥ ऋग्वेदे तु ५। ११। २ समीधिरे इति पाठभेदः॥ ३॥

भावार्थः—( नरः ) उपासक वा याज्ञिक लोग ( त्रिषधस्थे ) [इडा पि-

ङ्गला सुषुम्णा ] तीन नाड़ियों के सहस्थान वा प्रातः सायं माध्यंदिन ३ सवन वाले यज्ञ में ( यज्ञस्य ) ज्ञानयज्ञ वा कर्मयज्ञ की ( केतुम् ) ध्वजारूप, ( प्रथमम् ) मुख्य, ( पुरोहितम् ) अग्रसर, ( इन्द्रेण ) जीवात्मा वा बिजुली और ( देवैः ) इन्द्रियों वा वायु आदि के साथ ( सरथम् ) समानस्थानी, ( अग्निम् ) प्रकाशक परमेश्वर वा अग्नि को (समिन्धते) प्रकाशमान साक्षात् करते वा सुलगाते हैं। ( सः ) वह अग्नि ( सुक्रतुः ) यज्ञ का सुधारने वाला (होता) कर्मों का वा हव्यों का नायक (यजथाय) यजन के लिये ( बर्हिषि ) योगयज्ञ वा कर्मयज्ञ में (निषीदन्) साक्षात् वा स्थित प्रज्वलित होता है॥

ऋ० ५। ११। २ का पाठभेद संस्कृत भाष्य में देखिये ॥ ३ ॥

अथ द्वितीयतृचस्य—गृत्समद ऋषिः । मित्रावरुणौ देवते ।
गायत्री छन्दः ॥ तत्र प्रथमा—

३ १ २ ३ १र २र
अयं वां मित्रावरुणा सुतः सोम ऋतावृधा ।
२उ ३ १ २ ३ १ २
ममेदिह श्रुतंहवम् ॥ १ ॥ ( ९१० )

पदपाठः—अयम् १। वाम् ४। मित्रावरुणा सं०। सुतः,सोमः १। ऋतावृधा १। मम ६। इत्, इह अ०। श्रुतम् क्रि०। हवम् २॥

अन्वितपदार्थः—( ऋतावृधा ) यज्ञेन वर्धमानौ (मित्रावरुणा) प्राणापानौ ! ( वाम् ) युवाभ्याम् ( अयं सोमः ) ( सुतः ) अभिषुतोऽस्ति । ( इत् ) अतएव ( इह ) लोके ( मम ) मदीयं ( हवम् ) आह्वानं (श्रुतं) शृणुतम् ॥ ऋग्वेदे २। ४१। ४ ऽपि॥ मित्रावरुणयोर्व्याख्यानं ( ७९३ ) पूर्वं द्रष्टव्यम् ॥ १ ॥

भावार्थः—( ऋतावृधा ) यज्ञ से बढ़ने वाले ( मित्रावरुणा ) प्राण और अपान ! ( वाम् ) तुम दोनों के लिये ( अयम् ) यह सोम ( सुतः ) अभिषुत किया है ( इत् ) अतएव ( इह ) इस लोक में (मम) मेरे ( हवम् ) बुलावे को ( श्रुतम् ) सुनो ॥ ऋ० २। ४१। ४ में भी ॥

मित्र और वरुण का व्याख्यान ७९३ मन्त्र पर कर आये हैं। वहीं प्राण अपान के जड़ होने पर भी पुकार सुनने आदि का समाधान है ॥ १ ॥

अथ द्वितीया-

१ २ ३ १ २ ३ १र २र ३ २
राजानावनभिद्रुहा ध्रुवे सदस्युत्तमे ।
३ १ २
सहस्रस्थूण आशाते ॥ २ ॥ ( ९११ )

पदपाठः—राजानौ १ । अनभिद्रुहा १ । ध्रुवे, सदसि, उत्तमे, सहस्रस्थूणे १ । आशाते क्रि० ॥

अन्वितपदार्थः—( अनभिद्रुहा ) द्रोहरहितौ ( राजानौ ) प्रकाशमानौ प्राणाऽपानौ ( उत्तमे ) स्वच्छे ( ध्रुवे ) स्थिरे (सहस्रस्थूणे ) सहस्रदलकमले ( सदसि ) स्थाने ( आशाते ) व्याप्नुतः ॥ ऋग्वेदे तु २ । ४१ । ५ आसाते इति दन्त्यपाठः॥२॥

भावार्थः—( अनभिद्रुहा ) द्रोह न करने वाले ( राजाना ) प्रकाशमान प्राण और अपान ( उत्तमे ) उत्तम ( ध्रुवे ) स्थिर ( सहस्रस्थूणे ) सहस्रदल कमल ( सदसि ) स्थान में ( आशाते ) व्याप्त हैं ॥ ऋ० २ । ४१ । ५ का पाठ भेद संस्कृत भाष्य में देखिये ॥ २ ॥

अथ तृतीया-

२ ३ १ २ ३ १ २ ३ १र २र ३ १ २
ता सम्राजा घृतासुती आदित्या दानुनस्पती ।
१ २ ३ १ २
सचेते अनवह्वरम् ॥ ३ ॥ [ ७ ] ( ९१२ )

पदपाठः—ता, सम्राजा, घृतासुती, आदित्या १ । दानुनः ६ । पती १ । सचेते क्रि० । अनवह्वरम् ॥ २ ॥

अन्वितपदार्थः—( ता ) तौ (सम्राजा) सम्यक्प्रकाशमानौ ( घृतासुती ) घृतमन्नं ययोस्तौ ( आदित्या ) अदितेः प्रकृतेः पुत्रौ ( दानुनः ) याज्ञिकस्य ( पती ) पालकौ प्राणाऽपानौ

( अनवह्वरम् ) अध्वरं यज्ञं ( सचेते ) समवेतौ भवतः ॥ ऋग्वेदे २ । ४१ । ६ ऽपि ॥३॥

भावार्थः-( ता ) वे दोनों ( सम्राजा ) भले प्रकार प्रकाशमान ( घृतासुती ) जिन का अन्न घृत है ( आदित्या ) जो प्रकृति के पुत्र हैं ( दाशुषः ) याज्ञिक की ( पती ) रक्षा करने वाले वे प्राण और अपान ( अनवह्वरम् ) अध्वर यज्ञ को ( सचेते ) सम्यक् प्राप्त होते हैं॥ऋ० २ । ४१ । ६ में भी ॥३॥

## अथैन्द्रमाज्यम्

## इतिविवरणकारः

अथ तृतीयतृचस्य—गोतमोराहूगणऋषिः । इन्द्रोदेवता । गायत्री छन्दः ॥ तत्र प्रथमा—

१ २ ३ २ ३ १ २ ३ १र २र
इन्द्रो दधीचो अस्थभिर्वृत्राण्यप्रतिष्कुतः ।
३ १ २ ३ १र २र
जघान नवतीर्नव ॥ १ ॥ ( ९१३ ) व्याख्याता (१७९)

अथ द्वितीया—

३ १ २र ३ २उ ३ १ २ ३ १ २
इच्छन्नश्वस्य यच्छिरः पर्वतेष्वपश्रितम् ।
१ २ ३ १ २
तद्विदच्छर्यणावति ॥ २ ॥ ( ९१४ )

पदपाठः—इच्छन् १ । अश्वस्य ६ । यत् १ । शिरः १ । पर्वतेषु ७ । अपश्रितम् २ । तत् २ । विदत् क्रि० । शर्यणावति ॥ ७ ॥

अन्वितपदार्थः—पूर्वमन्त्रादिन्द्रइत्यनुवर्त्तते । इन्द्रः सूर्यः परमैश्वर्यवान् राजा वा (अश्वस्य) आशुगामिनो मेघस्य शत्रोर्वा ( यत् शिरः ) शीर्णमुत्तमाङ्गम् ( पर्वतेषु ) पर्ववत्सुअन्यमेघेषु पर्वतेषु तदाकारेषु दुर्गेषु वा ( अपश्रितम् ) अपगतं ( तत् )

( इच्छन् ) ( शर्यणावति ) आकाशे, शरवर्षणवति संग्रामे वा ( विदत् ) विन्दति विन्देद्वा ॥ ऋग्वेदे १ । ८४ । १४ ऽपि॥२॥

भावार्थः—पूर्वमन्त्र से इन्द्र शब्द की अनुवृत्ति है। इन्द्र=सूर्य वा परमैश्वर्यवान् राजा (अश्वस्य) शीघ्रगामी मेघ वा शत्रु का (यत्) जो (शिरः) कटा शिर (पर्वतेषु) पर्व वाले अन्य मेघों वा पर्वताकार दुर्गों में (अपश्रितम्) गिर गया (तत्) उस को (इच्छन्) चाहता हुवा (शर्यणावति) आकाश वा बाणों की वर्षा वाले संग्राम में (विदत्) पाता है वा पावे ॥ ऋ० १ । ८४ । १४ में भी ॥२॥

अथ तृतीया—

२उ ३ १ २ ३ २ ३ १ २ ३क २र

अत्राह गोरमन्वत नाम त्वष्टुरपीच्यम् ।

३ २ ३ १ २ ३ २

इत्था चन्द्रमसो गृहे ॥ ३ ॥ [ ८ ] ( ११५ )

व्याख्याता ( १४७ )

अथचतुर्थतृचस्य—वसिष्ठऋषिः । इन्द्राग्नी देवते । गायत्रीछन्दः ॥

तत्र प्रथमा—

३ १ २ ३ १ २र ३ २ ३ १ २

इयं वामस्य मन्मन इन्द्राग्नी पूर्व्यस्तुतिः ।

३ २ ३ १ २

अभ्राद्वृष्टिरिवाजनि ॥ १ ॥ ( ११६ )

पदपाठः—इयम् १ । वाम् ६ । अस्य, मन्मनः ६=५ । इन्द्राग्नी सं० । पूर्व्यस्तुतिः १ । अभ्रात् ५ । वृष्टिः १ । इव अ० । अजनि क्रि० ॥

अन्वितपदार्थः—(इन्द्राग्नी) हे अध्यापकाध्येतारौ ! (अस्य) अस्मात् (मन्मनः) मन्त्रात् ( इयम् ) उपदिश्यमाना ( वाम् ) युवयोः (पूर्व्यस्तुतिः) सनातनी प्रशस्तिः (इव) यथा (अभ्रात्) मेघात् ( वृष्टिः ) वर्षणंजायते तद्वत् ( अजनि ) जातास्ति ॥

इन्द्रशब्देन सूर्यस्य, अग्निशब्देन प्रसिद्धस्य च ग्रहणं स्पष्टं,

तत्तुल्यत्वेनाऽत्राध्यापकाध्येतारौ गृहीतावस्माभिः। यथा हि सूर्याद्ग्निः प्रादुर्भवति ज्वलति, तथैवाध्यापकात् अध्येताऽपि ज्ञानेन प्रकाशमानो जायते। इत्थं तयोःप्रशंसाऽनेन मन्त्रेण क्रियते॥ ऋग्वेदे ७।९४।१ ऽपि ॥ १ ॥

भाषार्थः-( इन्द्राग्नी ) हे अध्यापक और अध्येताओ ! ( अस्य ) इस (मन्मनः) मन्त्र से (इयम् ) यह ( युवयोः ) तुम्हारी (पूर्व्यस्तुतिः) सनातनी प्रशंसा (अजनि) प्रकट होती है । (इव) जैसे (अभ्रात् ) बादल से (वृष्टिः) वर्षा प्रकट होती है, तद्वत् ॥

इन्द्र शब्द से सूर्य और अग्नि शब्द से प्रसिद्ध आग का ग्रहण तो स्पष्ट ही है, परन्तु हम ने यहां इन्द्र शब्द से अध्यापक और अग्नि शब्द से अध्येता ग्रहण किया है।क्योंकि जैसे सूर्य के प्रकाश से अग्नि प्रकाशित होता है वैसे ही अध्यापक के अध्यापन से अध्येता ज्ञानद्वारा प्रकाशित होता है। उनदोनों की प्रशंसा इस मन्त्र से की गई है ॥ ऋ० ७।९४।१ में भी ॥१॥

अथ द्वितीया-

३ १ २३ २उ३ १ २ ३ १२३१२
शृणुतं जरितुर्हवमिन्द्राग्नी वनतं गिरः।
३ १ २ ३ १ २
ईशाना पिप्यतं धियः ॥२॥ (९१७)

पदपाठः-शृणुतम् क्रि० । जरितुः ६ । हवम्२ । इन्द्राग्नी सं० । वनतम् क्रि० । ईशाना १ । पिप्यतम् क्रि० । धियः २ ॥

अन्वितपदार्थः-( इन्द्राग्नी ) हे अध्यापकाध्येतारौ ! युवां (जरितुः) प्रशंसाकर्त्तुर्मन्त्रस्य ( हवम् ) आह्वानं ( शृणुतम् ) (गिरः) वाणीः (वनतम्) संभक्ताः कुरुतम् ( ईशाना ) ईशानौ ( धियः ) बुद्धीः ( पिप्यतम् ) आप्ययिताः कुरुध्वम् ॥ ऋग्वेदे ७।७४।२ में भी ॥ २ ॥

भाषार्थः-( इन्द्राग्नी ) हे अध्यापक और अध्येताओ ! ( जरितुः ) प्रशंसा करने वाले मन्त्र के ( हवम् ) आह्वान=पुकार को ( शृणुतम् ) सुनो

और (गिरः) वाणियों को ( वनतम् ) विभागशः उच्चारित करो ( ईशाना ) समर्थ तुम ( धियः ) बुद्धियों को ( पिप्यतम् ) आप्यायित करो ॥ ऋ० ७ । ९४ । २ में भी ॥ २ ॥

अथ तृतीया—

१ २३ १ २ ३१ २ ३ १ २र
मा पापत्वाय नो नरेन्द्राग्नी माभिशस्तये ।
१ ३ ३ २
मा नो रीरधतं निदे ॥ ३ ॥ [ ९ ] ( ९१८ )

पदपाठः—मा अ० । पापत्वाय ४ । नः २ । नरा सं० । इन्द्राग्नी सं० । मा । अभिशस्तये ४ । मा । नः । रीरधतम् क्रि० । निदे ४ ॥

अन्वितपदार्थः—( नरा ) हे नरौ (इन्द्राग्नी) अध्यापकाध्येतारौ ! युवां ( नः ) अस्मान् (पापत्वाय) पापभावाय (मा) न ( रीरधतम् ) प्रेरयतम् ( अभिशस्तये ) निन्दायै ( मा ) न प्रेरयतम् ( नः ) अस्मान् ( निदे ) नितरां दीयते नाश्यते यत्र तस्मै ( मा ) न प्रेरयतम् ॥ ऋग्वेदे ७ । ७९ । ३ ऽपि ॥३॥

भावार्थः—( नरा ) हे २ नर ( इन्द्राग्नी ) अध्यापक और अध्येताओ ! तुम दोनों ( नः ) हम को ( पापत्वाय ) पाप होने के लिये ( मा ) मत ( रीरधतम् ) प्रेरित करें ( अभिशस्तये ) निन्दा के लिये ( मा ) मत प्रेरित करें और (नः) हम को (निदे) निरे नाश वाले काम के लिये (मा) मत प्रेरित करें ॥ ऋ० ७ । ९४ । ३ में भी ॥ ३ ॥

अथ माध्यंदिनं सवनमिति विवरणकारः

अथ चतुर्थखण्डे प्रथमतृचस्य—दृढच्युत ऋषिः । पवमानः सोमो देवता । गायत्री छन्दः ॥ तत्र प्रथमा—

१ २ ३ १ २ ३ १ २ ३ १ २
पवस्व दक्षसाधनो देवेभ्यः पीतये हरे ।
३ १ २ ३ २ ३ १ २
मरुद्भ्यो वायवे मदः ॥ १ ॥ (९१९) व्याख्याता ( ४७९ )

अथ द्वितीया—

२ ३१ २ ३ १२ ३२उ ३ १२ ३ २
सं देवैः शोभते वृषा कविर्योनावधि प्रियः ।
१२ ३ १२
पवमानो अदाभ्यः ॥ २ ॥ (९२०)

पदपाठः—सम् अ० । देवैः ३ । शोभते क्रि० । वृषा १ । कविः १ । योनौ ७। अधि अ० । प्रियः, पवमानः, अदाभ्यः १ ॥

अन्वितपदार्थः—(योनौ अधि) स्वस्थाने आकाशे वर्त्तमानः (प्रियः) हितकरः (वृषा) वर्षकः (कविः) बुद्धितत्वोद्बोधकः (अदाभ्यः) अनाश्यः (पवमानः) सोमः (देवैः) इन्द्रवाय्वादिभिःसह (सं शोभते)। दिवीति शेषः ॥ ऋग्वेदे तु ९।२५।३ वृत्रहा देववीतमः इति तृतीयपादपाठः ॥ २ ॥

भावार्थः—(योनौ अधि) अपने स्थान आकाश में स्थित(प्रियः) हितकारी (वृषा) वृष्टिकर्त्ता (कविः) बुद्धि तत्व का उद्बोधक (अदाभ्यः) नाश न करने योग्य (पवमानः) सोम (देवैः) इन्द्र वायु आदि देवों के साथ (संशोभते) सम्यक् शोभित होता है । ऋ० ९ । २५ । ३ का पाठान्तर संस्कृत भाष्य में देखिये ॥ २ ॥

अथ तृतीया—

१ २ ३ २ ३ २ २उ ३ १२
पवमान धिया हितोऽ३ऽभि योनिं कनिक्रदत् ।
१२ ३१ २र
धर्मणा वायुमारुहः ॥ ३ ॥ [ १० ] (९२१)

पदपाठः—पवमान सं० । धिया ३ । हितः १ । अभि अ० । योनिम् २ । कनिक्रदत् १ । धर्मणा ३ । वायुम् २ । आरुहः क्रि० ॥

अन्वितपदार्थः—(पवमान) सोम ! (धिया) कर्मणा (हितः) प्रियकरः (योनिम् अभि) स्वस्थानमभिलक्ष्य (क-

निक्रदत् ) शब्दं कुर्वन् ( धर्मणा ) स्वधर्मेण ( वायुम् ) वायुमण्डलम् ( आरुहः ) आरोहसि ॥

यज्ञकर्मणा हितकरः सोमः शब्दायमानः स्वभावानुकूलं वायुमण्डलमारोहति इति भावः॥ ऋग्वेदे तु ९।२५।२ आरुहः = आविशेति पाठः ॥ ३ ॥

भावार्थः–( पवमान ) सोम ! ( धिया ) कर्म से ( हितः ) हित कर हो ( योनिम् ) अपने स्थान को ( अभि ) लक्ष्य करके ( कनिक्रदत् ) शब्द करता हुआ ( धर्मणा ) अपने स्वभाव से ( वायुम् ) वायुमण्डल पर ( आरुहः ) चढ़ ॥

अर्थात् यज्ञकर्म से हितकारी सोम शब्द करता हुआ स्वभावानुसार वायुमण्डल पर चढ़ जाता है ॥

ऋ० ९ । २५ । २ का पाठान्तर संस्कृतभाष्य में देखिये ॥ ३ ॥

अथ प्रगाथस्य द्वितीयसूक्तस्य–मैत्रावरुणो वसिष्ठ ऋषिः । सोमो देवता । बृहती छन्दः ॥ तत्र प्रथमा–

२ ३ १   २   ३ २ २   ३ १ २   ३ १ २   ३
तवाहꣳ सोम रारण सख्य इन्दो दिवे दिवे । पुरूणि बभ्रो
१ २   ३ १र   २र ३ ३ ३ ३ १   २
निचरन्ति मामव परिधीँरतिताँ इहि ॥ १ ॥ ( १२२ )

व्याख्याता ( ५१६ )

अथ द्वितीया–

२ ३ १   २र ३ १ २   ३ १ २   ३ १   २ ३ १ २
तवाहं नक्तमुत सोम ते दिवा दुहानो बभ्रऊधनि ।
३ १   २र   ३ २ ३ १ २ ३ १   २ ३ १ २
घृणा तपन्तमति सूर्यं परः शकुनाइव पप्तिम ॥ २ ॥ [ ११ ] ( १२३ )

पदपाठः–तव ६ । अहम् १–१=३ । नक्तम्, उत अ० । सोम सं० । ते ६ । दिवा अ० । दुहानः १–१=३ । बभ्रो सं० । ऊधनि ७ । घृणा ३ । तपन्तम् २ । अतिसूर्यम् २ । परः १=२ । शकुनाः १ । इव अ० । पप्तिम क्रि० ॥

अन्वितपदार्थः—( सोम ) शान्त ! परमात्मन् ! ( बभ्रो ) धारक ! विश्वंभर ! विष्णो ! ( ऊधनि ) गोरूध्नि ( दुहानः )

दुहानाः [ गोदोहकाले प्रभाते ] ( दिवा ) दिवसे ( नक्तम् ) रात्रौ (उत) च ( अहम् ) वयम् (तव ते) तवैवोपासनां कुर्याम तथा ( घृणा ) दीप्त्या ( सूर्यम् ) आदित्यम् (अति,तपन्तम्) उल्लङ्घ्य भासमानं (परः ) परं त्वां वयं ( पप्तिम ) प्राप्नुयाम ( इव ) यथा ( शकुनाः) पक्षिणः सूर्यं नभोवा यथाऽऽत्मशक्तिपतन्ति तद्वत् ॥

अयंभावः—वयं प्रातरुत्थाय दिवानिशं परमात्मन एवोपासनं कुर्याम, नान्यस्य, यद्यपि अनन्तस्याऽचिन्त्यस्याऽप्रमेयस्य तस्य सर्वात्मना प्राप्तिर्दुष्करा, तथापि यथा पक्षिण आकाशे स्वपक्षबलानुसारं पतन्ति तद्वद्वयमपि निजाऽल्पशक्त्यनुसारं परमात्मभजनं कुर्याम । स हि सूर्यादीनामपि प्रकाशकोऽनन्ततेजस्वी स्वभक्तानस्मान् कृपया कृतार्थयिष्यतीति । सायणाचार्येणाऽत्र "दुहानः" इत्यस्य स्थाने "सख्याय" इत्युद्धृत्य व्याख्यातं,न चात्र तादृशः पाठः क्वापि पुस्तके दृश्यतेऽनुमीयते यत् ऋग्वेदे९।१०७।२० वर्त्तमानस्य तादृक्पाठस्यैवेदं व्याख्यानं,न तु सामवेदस्थस्य । अन्यत्रापि प्रायःसायणाचार्यभाष्ये छिद्रमिदं दृष्टचरम् ॥ २ ॥

भाषार्थः–( सोम ) हे शान्तिदायक ! ( बभ्रो ) हे विश्वम्भर ! विष्णो! ( ऊधनि ) गौओं के बाख में ( दुहानः ) दोहन करते हुवे अर्थात् प्रातःकाल और ( दिवा ) दिन में ( उत ) तथा ( नक्तम ) रात्री में ( अहम् ) हम लोग ( तव, ते ) तेरी ही तेरी [ उपासना करें ] और ( घृणा ) दीप्ति से ( सूर्यम् ) सूर्य को ( अति ) उल्लङ्घित करके (तपन्तम्) प्रकाशमान (परः) सब से परे [ आप ] को ( पप्तिम ) होवें ( इव ) जैसे ( शकुनाः ) पक्षिगण [सूर्य वा आकाश की ओर अपनी शक्ति के अनुसार उड़ते हैं, तद्वत ]॥

तात्पर्य यह है कि-हम प्रातःकाल उठकर, दिन में और रात्रि में परमात्मा के अतिरिक्त अन्य की उस के स्थान में उपासना न करें। यद्यपि वह अनन्त, अचिन्त्य और अप्रमेय से हमें सर्वात्मरूप से प्राप्त नहीं हो सकता तथापि जैसे पक्षी सूर्य वा आकाश की ओर वहां तक उड़ते हैं, जहां तक उन के पंखों का बल है, वैसे ही हम को अपनी अल्पशक्ति भी समस्त रूप से परमात्मा के भजन में लगा देनी चाहिये। वह अनन्त तेजस्वी सूर्यादि का भी प्रकाशक है इस लिये हम को जो उस के भक्त हैं, कृतार्थ करेगा॥

सायणाचार्य ने इस मन्त्र के "दुहानः" पद के स्थान में "सख्याय" पद की व्याख्या की है और जहां तक देखने को मिले किसी पुस्तक के मूल में यहां तक कि सायणभाष्य युक्त पुस्तकों भी मूल में "सख्याय" पाठान्तर नहीं पाया जाता। अनुमान होता है कि ऋ० ९।१०७।२७ में जो "सख्याय" पद है उसी की व्याख्या यहां सायणभाष्य में है नकि सामवेदस्थ पाठ की। हम ने अन्यत्र भी बहुधा सामवेद के सायणभाष्य में यह छिद्र देखा है॥२॥

अथ तृतीय तृचस्य-बृहन्मतिर्ऋषिः। पवमानः सोमो देवता। गायत्री छन्दः॥

तत्र प्रथमा-

३ १ २ ३२उ ३ २ ३ १ २
पुनानो अक्रमीदभि विश्वामृधो विचर्षणिः।
३२ ३ १२ ३ १ २
शुभन्ति विप्रं धीतिभिः॥१॥ (९२४) व्याख्याता (४८८)

अथ द्वितीया-

१ २र ३ १ २३२३ २ ३ १ २ ३ २
आ योनिमरुणो रुहद्गमदिन्द्रो वृषा सुतम्।
३ १ २र
ध्रुवे सदसि सीदतु॥२॥ (९२५)

पदपाठः-आ अ०। योनिम् २। अरुणः १। रुहत्, गमत् क्रि०। इन्द्रः १। वृषा १। सुतम् २। ध्रुवे, सदसि ७। सीदतु क्रि०॥

अन्वितपदार्थः-(अरुणः) रक्तवर्णः सोमः (योनिम्) स्थानम् (आरुहत्) आरोहत् (ध्रुवे) स्थिरे (सदसि) स्थाने आका-

शमण्डले (सीदतु) तिष्ठतु । एवम् (सुतम्) सोमम् (इन्द्रः) वृष्टिकर्त्ता वायुविशेषो विद्युद्विशेषो वा (गमत्) प्राप्नुयात् ॥

ऋग्वेदे तु ९।४०।२ इन्द्रं वृषा सुतः इति पाठः । सीदति इति च तत्रत्यः पाठः । सायणभाष्येऽत्रापि ऋग्वेदस्थस्य सीदतीत्यस्यैव पाठस्य व्याख्यानं दृश्यते, नतु सामवेदीयस्य सीदतु इत्यस्य ॥ २ ॥

भाषार्थः-( अरुणः ) रक्तवर्ण सोम ( योनिम् ) अपने स्थान को (आरुहत् ) चढ़े और ( ध्रुवे ) स्थिर ( सदसि ) स्थान आकाश में ( सीदतु ) स्थिर होवे । इस प्रकार (इन्द्रः ) वृष्टिकारक वायुविशेष वा विद्युत्विशेष (सुतम्) सोम को ( गमत् ) प्राप्त हो ॥

ऋ० ९।४०।२ का पाठान्तर संस्कृत भाष्य में देखिये । यहां भी सायण भाष्य में ऋग्वेद के "सीदति" पाठ की व्याख्या है । सामवेद के "सीदतु" की नहीं ॥ २ ॥

अथ तृतीया-

१ २ ३२ ३१२ ३ १ २ ३ १ २
नू नो रयिं महामिन्दोऽस्मभ्यं सोम विश्वतः ।
१ २ ३ १ २
आपवस्व सहस्रिणम् ॥ ३ ॥ [ १२ ] ( ९२६ )

पदपाठः-नु अ० । नः ६ । रयिम् २ । महाम् २ । इन्दो सं० । अस्मभ्यम् ४ । सोम सं० । विश्वतः अ० । आपवस्व क्रि० । सहस्रिणम् २ ॥

अन्वितपदार्थः-(इन्दो) आर्द्र ! (सोम) पवमान ! ( नु ) क्षिप्रं (नः) अस्मदीयं (महां) महान्तं (सहस्रिणं) बहु (रयिम्) धनं धान्यादिकं च (विश्वतः) सर्वतः (अस्मभ्यम्) (आपवस्व) क्षारय ॥ उक्तोमाध्यन्दिनः पवमान इति विवरणकारः ॥

अनुष्ठितः सोमयागोमनुष्याणां धनधान्यादिवृद्धिं संपादयतीत्यर्थः ॥ ऋग्वेदे ९ । ४० । ३ ऽपि ॥ ३ ॥

भावार्थः-( इन्दो ) गीला ( सोम ) सोम ( नु ) शीघ्र ( नः ) हमारे ( महाम् ) बड़े ( सहस्रिणम् ) बहुत ( रयिम् ) धन और धान्यादि को (विश्वतः ) सब ओर से ( अस्मभ्यम् ) हमारे लिये ( आपवस्व ) बर्षावे ॥ विवरणकार कहते हैं कि माध्यंदिन पवमान कहा गया ॥

अर्थात् अनुष्ठान किया हुवा सोमयाग मनुष्यों के धन धान्यादि की वृद्धि करता है ॥ ऋ० ९ । ४० । ३ में भी ॥ ३ ॥

अथ पञ्चमे खण्डे प्रथम तृचस्य—वसिष्ठऋषिः । इन्द्रोदेवता । विराट् छन्दः ॥ तत्र प्रथमा—

२ ३ १ २ ३ १ ३ १ २ ३ १ २ ३ १ २
पिबा सोम मिन्द्रमन्दतु त्वायं ते सुषाव हर्यश्वाद्रिः ।
३ २ ३ २ ३ १ २ ३ १ ३
सोतुर्बाहुभ्याꣳ सुयतोनार्वा ॥ १ ॥ ( ९२७ )
व्याख्याता ( ३९८ )

अथ द्वितीया

२ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
यस्ते मदो युज्यश्चारुरस्ति येन वृत्राणि हर्यश्व हꣳसि ।
१र २र
स त्वामिन्द्र प्रभूवसो ममत्तु ॥ २ ॥ ( ९२८ )

पदपाठः—यः १। ते ६ । मदः,युज्यः,चारुः १। अस्ति क्रि० । येन ३। वृत्राणि २ । हर्यश्व सं०। हंसि क्रि० । सः १ । त्वाम् २। इन्द्र,प्रभूवसो सं०। ममत्तु क्रि० ॥

अन्वितपदार्थः—( हर्यश्व ) हरणकिरण ! वा शीघ्रगाश्वादिसेनावन् ! (इन्द्र) सूर्य वा राजन् ! (प्रभूवसो) प्रभावशालिन्वसो ! वा प्रभूतधन ! (यः) सोमः (ते) तव (युज्यः) प्रयोजनीयः (चारुः) शोभनः (मदः) हर्षकरः (अस्ति) वर्त्तते, (येन) सोमेन गृहीतेन सता (वृत्राणि ) मेघान्, वा शत्रून् (हंसि) नाशयसि (सः) सोमः (त्वाम् ) सूर्यं, राजानं वा (ममत्तु) हर्षयुक्तं करोतु ॥

सूर्यपक्षे सुप्रभावहर्षो विज्ञेयः॥ ऋग्वेदे ७ । २२ । २ ऽपि ॥२॥

भावार्थः-( हर्यश्व ) हरणकिरण ! वा शीघ्रगाऽश्वादि सेना वाले ! ( इन्द्र ) सूर्य, ! वा राजन् ! ( प्रभूवसो ) प्रभावशालिन् ! वसो, ! वा बहुत धनयुक्त ! ( यः ) जो सोम ( ते ) तेरा ( युज्यः ) प्रयोजनीय ( चारुः ) शोभन ( मदः ) हर्षकारक ( अस्ति ) है (येन) जिस से तुम ( वृत्राणि ) मेघों वा शत्रुओं का ( हंसि ) नाश करते हो ( सः ) वह सोम ( त्वाम् ) तुम को ( ममत्तु ) हर्ष दे ॥

सूर्य के पक्ष में उस का सुप्रभाव ही हर्ष है ॥ ऋ० ७ । २२ । २ में भी॥२॥

अथ तृतीया-

२ ३ १ २ ३ २ ३ २उ ३ १ २ ३ १ २ ३ ३
बोधा सु मे मघवन्वाचमेमां यां ते वसिष्ठो अर्चति प्रशस्तिम्।
३ १र २र ३ १ २
इमा ब्रह्म सधमादे जुषस्व ॥ ३ ॥ [ १३ ] ( ९२१ )

पदपाठः-बोध क्रि० । सु अ० । मे ६ । मघवन् सं० । वाचम् २ । आ अ० । इमाम् । याम् २ । ते ४ । वसिष्ठः १ । अर्चति क्रि० । प्रशस्तिम् २ । इमा २ । ब्रह्म २ । सधमादे ७ । जुषस्व क्रि० ॥

अन्वितपदार्थः-(मघवन्) धनवन् ! वा मखवन् ! इन्द्र! राजन् ! वा सूर्य ! (याम्) वाचम् (ते) तव (प्रशस्तिम्) प्रशंसारूपाम् (वसिष्ठः) अतिशयेनवसुः विद्वान् (अर्चति) वहति (इमाम्) तामिमां (वाचम्) (मे) मयोच्चारिताम् (सु आ बोध) सुष्ठु आभिमुख्येनाऽवगच्छ (इमा) इमानि (ब्रह्म) वेदवचनानि (सधमादे) यज्ञे (जुषस्व) सेवस्व ॥

यज्ञे स्वनुष्ठिते राजा यजमानो वेदवचनैः प्रशंसितः तदनुकूलाचरणं कुर्यादित्येव वेदवचनानां सेवनम् । सूर्यपक्षेऽपि वेदानुकूलसूर्योपकारप्राप्तिस्तत्सेवनं बोध्यम्॥ ऋग्वेदे ७ । २२ । ३ ऽपि ॥३॥

भावार्थः-(मघवन्) धनवन्! वा यज्ञवाले! इन्द्र! राजन्! वा सूर्य्य! (याम्) जिस (ते) तुम्हारी (प्रशस्तिम्) प्रशंसारूप (वाचम्) वाणी को (वसिष्ठः) उत्तम विद्वान् (अर्चति) प्राप्त करता है (इमाम्) उस वाणी को (मे) मेरी उच्चारित को (सु का बोध) भले प्रकार संमुख होकर ग्रहण करो (इमा) इन (ब्रह्म) वेदवचनों का (सधमादे) यज्ञ में (जुषस्व) सेवन करो॥ स्वनुष्ठित यज्ञ में यजमान राजा वेदवचनों से प्रशंसित किया हुवा तदनुकूलाचरण करे, यही वेदवचनों का सेवन है। सूर्य के पक्ष में भी वेदानुकूल सूर्योपकार की प्राप्ति ही उस का सेवन जानिये॥ ऋ० ७। २२। ३ में भी॥३॥

अथ द्वितीयतृचस्य-रेभःकाश्यप ऋषिः। इन्द्रो देवता।

अतिजगती छन्दः॥ तत्र प्रथमा-

२ ३   १ २   ३ १ २ ३ १ २ ३ १ २   ३   २   ३ १ २ ३ १ २

विश्वाः पृतना अभिभूतरन्नरः सजूस्ततक्षुरिन्द्रञ्जजनुश्च राजसे।

२ ३ १ २ ३ २ ३ १ २ ३ १   २र   ३ १ २   ३ १ २

क्रत्वेवरेस्थेमन्यामुरीमुतोग्रमोजिष्ठं तरसं तरस्विनम्॥ १॥

(९३०) व्याख्याता (३७०)

अथ द्वितीया-

३ १ २   ३ १ २   ३ १   २र   ३ २   ३ १   २

नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरे। सुदीतयो

३ २र   ३ १ २ ३   २ ३ १ २र

वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः॥२॥ (९३१)

पदपाठः-नेमिम् २। नमन्ति क्रि०। चक्षसा ३। मेषम् २। विप्राः १। अभिस्वरे ७। सुदीतयः १। वः ६। अद्रुहः १। अपि अ०। कर्णे ७। तरस्विनः १। सम् अ०। ऋक्वभिः ३॥

अन्वितपदार्थः-(तरस्विनः) कर्मसु स्तोत्रादिषु त्वरायुक्ताः (सुदीतयः) शोभनदीप्तयः (अद्रुहः) कस्याप्यद्रोग्धारः (विप्राः) मेधाविनऋत्विजो ब्राह्मणाः (अभिस्वरे) अभितः स्वरयुक्ते वेदध्वनियुक्ते "यज्ञे" इति विवरणकारः (ऋक्वभिः) मन्त्रैः (चक्षसा) उपदेशेन (वः) युष्माकं (नेमिम्) मर्यादावर्त्तिनम्

( मेषं )कमानां वर्षकं प्रकरणादिन्द्रं राजानं यजमानं ( कर्णे ) श्रोत्रसमीपे ( अपि ) दूरस्थाश्चापि ( संनमन्ति ) सम्यक्तया नमयन्ति भक्तिश्रद्धादिवर्धकवाक्यजपादिभिः प्रह्वीभूतं कुर्वन्ति॥ ऋग्वेदे तु ८ । ९७ । १२ अभिस्वरा इति पाठः ॥ २ ॥

भावार्थः-( तरस्विनः ) स्तोत्रादि कर्मों में फुर्तीले ( सुदीतयः ) सुन्दर दीप्ति वाले (अद्रुहः) किसी से द्रोह न करने वाले (विप्राः) बुद्धिमान् ऋत्विज् ब्राह्मण लोग (अभिस्वरे) यज्ञ में ( ऋक्भिः ) मन्त्रों से (वचसा) उपदेश से (वः) तुम्हारे ( नेमिम् ) मर्यादावर्त्ती ( मेषम् ) कामपूरक [प्रकरण से-इन्द्र=राजा यजमान को] ( कर्णे ) कान के समीप (अपि) और दूरस्थित भी (संनमन्ति ) अच्छे प्रकार भक्ति श्रद्धादि वर्धक वाक्यजप आदि से नम्र करते हैं॥ ऋ० ८ । ९७ । १२ का पाठभेद संस्कृत भाष्य में देखिये ॥ २ ॥

अथ तृतीया-

१ २३१ २ ३ २ ३ १ २ ३ १ २

समु रेभासो अस्वरन्निन्द्रꣳसोमस्य पीतये ।

२र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २

स्वः पतिर्यदीवृधेधृतव्रतोह्योजसा समूतिभिः ॥३॥[१४](९३२)

पदपाठः-सम्, उ अ० । रेभासः १ । अस्वरन् क्रि० । इन्द्रम् २ । सोमस्य ६ । पीतये ४ । स्वःपतिः १ । यद्, ई अ० । वृधे ४ । धृतव्रतः १ । हि अ० । ओजसा ३ । सम् अ० । ऊतिभिः ३ ॥

अन्वितपदार्थः-पूर्वमन्त्रादभिस्वरे=यज्ञेइत्यनुवर्त्तते (रेभासः) स्तोतारऋत्विजः [ निघं० ३ । १६ ] (सोमस्य पीतये इन्द्रम्) (सम्, उ, अस्वरन् )समाकारयन्ति (यत् ) यस्मात् ( स्वःपतिः) इन्द्रो राजा ( वृधे ) वृद्ध्यै [ ( ई ) पादपूरणः ] ( धृतव्रतः ) धृतनियमः सन् (हि) निश्चयेन (ओजसा) बलेन ( ऊतिभिः ) तदुद्भवाभीरक्षाभिश्च (सम्) संगच्छेत ॥

ऋग्वेदे तु ८ । ९७ । ११ समु=समीम्,स्वःपतिः=स्वर्पतिम्, यदी=यदीम् इति पाठभेदाः ॥ ३ ॥

भावार्थः—पूर्व मन्त्र से "अभिस्वरं"='यज्ञ में' की अनुवृत्ति है। यज्ञ में (रेभासः) स्तोता ऋत्विक् लोग [निघं० ३। १६] (सोमस्य पीतये) सोम के पीने को (इन्द्रम्) इन्द्र राजा को (सम् उ अस्वरन्) बुलाते हैं (यत्) जिस से कि (स्वःपतिः) इन्द्र=राजा (वृधे) वृद्धि के लिये (धृतव्रतः) व्रत को धारण करने वाला (हि) निश्चय (ओजसा) बल और (ऊतिभिः) बलोत्पन्न रक्षाओं से (सम्) संगत होजावे (ई) पादपूरणार्थ है॥ ऋ० ८। ९७। ११ के पाठभेद संस्कृत भाष्य में देखिये॥ ३॥

अथ प्रगाथस्य तृतीयसूक्तस्य—पुरुहन्मा ऋषिः। इन्द्रोदेवता। प्रागाथं छन्दः॥ तत्र प्रथमा—

१ २र ३ २उ ३ १२३१२

यो राजा चर्षणीनां याता रथेभिरध्रिगुः।

१ २ ३ १ २र ३र ३ १२३२ ३२

विश्वासां तरुता पृतनानां ज्येष्ठं यो वृत्रहा गृणे॥ १॥(९३३)

व्याख्याता (२७३)

अथ द्वितीया—

२ ३ १ २ ३१२३१२ ३१२३१२

इन्द्रं तꣳ शुम्भ पुरुहन्मन्नवसे यस्य द्विता विधर्त्तरि।

१ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २र

हस्तेन वज्रः प्रतिधायि दर्शतो महान्देवो न सूर्यः॥

॥ २॥ [१५] (९३४)

पदपाठः—इन्द्रम्, तम् २। शुम्भ क्रि०। पुरुहन्मन् सं०। अवसे ४। यस्य ६। द्विता १। विधर्त्तरि ७। हस्तेन ३। वज्रः १। प्रतिधायि क्रि०। दर्शतः, महान्, देवः १। न अ०। सूर्यः १॥

अन्वितपदार्थः—(पुरुहन्मन्) हे बहुज्ञानिन्! (तम्)(इन्द्रम्) राजानम्(अवसे) रक्षणाथ (शुम्भ)प्रसादय(यस्य)इन्द्रस्य(हस्तेन) कर्त्रा (वज्रः)शस्त्रास्त्रसमूहः (प्रतिधायि) ध्रियते [अतइन्द्रउग्रः] यश्च (दर्शतः) दर्शनीयोऽपि वर्त्ततेऽतोऽभिगम्यः। एवं राजा

( महान्देवः सूर्यः ) ( न ) इव ( विधर्त्तरि ) विधारके ब्रह्माण्डे ( द्विता ) द्विप्रकारकोऽस्ति ॥

यथा सूर्यः प्रखररश्मित्वादधृष्यः प्रकाशाद्युपयोगित्वाच्चाभिगम्योऽस्ति तथैव राजापि दुष्टदमनायोग्रो धर्मात्मरक्षणाय शान्तश्च स्यात् । एवंविधःस विद्वद्भिः सत्कर्त्तव्यः॥ ऋग्वेदे तु ८ । ७० । २ हस्तेन=हस्ताय । महान्देवः=महोदिवे इति पाठौ॥२॥

भावार्थः-( पुरुहन्मन् ) हे बहुज्ञानिन् ! ( तम् ) उस ( इन्द्रम् ) इन्द्र=राजा को ( अवसे ) रक्षा के लिये ( शुम्भ ) प्रसन्न कर ( यस्य ) जिस के ( हस्तेन ) हाथ ने ( वज्रः ) शस्त्राऽस्त्रसमूह ( प्रतिधायि ) धारण किया है [ इस से उग्र है ] और जो ( दर्शतः ) दर्शनीय भी है [ इस से अभिगम्य है ] इस प्रकार राजा ( महान् ) बड़े ( देवः ) देव ( सूर्यः ) सूर्य के ( न ) समान ( विधर्त्तरि ) ब्रह्माण्ड में ( द्विता ) दो प्रकार से वर्त्तमान है ॥

जैसे सूर्य तीक्ष्ण किरणों वाला होने से अधृष्य है और प्रकाशादि का उपयोगी होने से दर्शनीय और अभिगम्य है । इसी प्रकार राजा भी दुष्टों के दमनार्थ उग्र और धर्मात्माओं की रक्षार्थ शान्त दर्शनीय अभिगम्य होवे। उक्त गुणविशिष्ट राजा का विद्वानों को सत्कार करना चाहिये ॥

ऋ० ८ । ७० । २ के पाठान्तर संस्कृत भाष्य में देखिये ॥ २ ॥

अथ षष्ठे खण्डे प्रथमतृचस्य-असितःकाश्यपो देवलोवा ऋषिः । पवमानःसोमोदेवता । गायत्रीछन्दः ॥ तत्र प्रथमा-

१२ ३ २ ३२ ३१ २र ३क २र ३ २
परि प्रिया दिवः कविर्वयांसि नप्त्योर्हितः ।
३ १ २ ३ १ २
स्वानैर्याति कविक्रतुः ॥१॥(१३५)व्याख्याता ( ४७६ )

अथ द्वितीया-

२ ३२ ३ २३ १ २३ २ ३ १ २
स सूनुर्मातरा शुचिर्जातो जाते अरोचयत् ।
३ २ ३ १ २ ३ १ २
महान्मही ऋतावृधा ॥ २ ॥ ( १३६ )

पदपाठः—सः, सूनुः १ । मातरा २ । शुचिः, जातः १ । जाते २ । अरोचयत् क्रि० । महान् १ । मही २ । ऋतावृधा २ ॥

अन्वितपदार्थः—(जातः) उत्पन्नः (शुचिः) पवित्रः (महान्) हविरुत्तमः (सः) सोमः (सूनुः) पुत्रः (मही) महत्यौ (ऋतावृधा) यज्ञस्य वर्धयित्र्यौ (जाते) विश्वस्य जनयित्र्यौ (मातरा) सोमस्य मातरौ द्यावापृथिव्यौ (अरोचयत्) रोचयति दीपयति॥ ऋग्वेदे ९ । ९ । ३ ऽपि ॥ २ ॥

भाषार्थः—(जातः) उत्पन्न हुआ (शुचिः) शुद्ध (महान्) बड़ा उत्तम हव्य (सः) वह सोम (सूनुः) पुत्र—(मही) बड़ी (ऋतावृधा) यज्ञ की बढ़ाने वाली (जाते) सब की उत्पादिका (मातरौ) अपनी [सोम की] माता द्युलोक और पृथिवी को (अरोचयत्) प्रकाशित करता है ॥

ऋ० ९ । ९ । ३ में भी ॥ २ ॥

अथ तृतीया—

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्र प्र क्षयाय पन्यसे जनाय जुष्टो अद्रुहः ।
३क २र ३ १ २
वीत्यर्ष पनिष्टये ॥ ३ ॥ [ १६ ] ( ९३७ )

पदपाठः—प्र अ० । प्रक्षयाय, पन्यसे, जनाय ४ । जुष्टः १ । अद्रुहः ६=४ । वीति ४ । अर्ष क्रि० । पनिष्टये ४ ॥

अन्वितपदार्थः—प्रकरणात्सोमः(प्रक्षयाय)उच्चस्थानाय(पन्यसे) व्यवहर्त्रे (पनिष्टये) स्तोत्रे (अद्रुहः) अद्रोग्ध्रे (जनाय) (वीति) भक्षणाय (प्राऽर्ष) प्राप्नोति ॥ ऋग्वेदे तु ९ । ९ । २ "अद्रुहे" इति चनिष्टया इति च पाठौ ॥ ३ ॥

भाषार्थः—प्रकरण से सोम (प्रक्षयाय) उच्चस्थानी (पन्यसे) व्यवहार करने वाले (पनिष्टये) स्तोता (अद्रुहः) द्रोहरहित (जनाय) पुरुष के लिये (वीति) भक्षणार्थ (प्राऽर्ष) मिलता है ॥

ऋ० ९ । ९ । २ के पाठभेद संस्कृतभाष्य में देखिये ॥ ३ ॥

अथ प्रगाथस्य द्वितीय सूक्तस्य—शक्तिरुरुश्च क्रमेण द्वयोर्ऋषी । पवमानः

सोमो देवता । ककुप्, सतोबृहती च क्रमेण छन्दसी ॥ तत्र प्रथमा-

२ ८ १ २ ३ १ २ ३ १ २ ३ १ २ ३

त्वं ह्याꣳ३ङ्ग दैव्य पवमान जनिमानि द्युमत्तमः । अमृत-

१ २ ३ १ २

त्वाय घोषयन् ॥ १ ॥ ( ९३८ ) व्याख्याता ( ५८३ )

अथ द्वितीया-

२ ३ १ २ ३ १ २ ३२उ ३ १ २ ३ २ ३ १ २

ये ना नवग्वा दध्यङ्ङपोर्णुते येन विप्रास आपिरे । देवानां

३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २

सुम्ने अमृतस्य चारुणो येन श्रवांस्याशत ॥२॥[१७] (९३९)

पदपाठः—येन, नवग्वा ३ । दध्यङ् १ । अपोर्णुते क्रि० । येन । विप्रासः १ । आपिरे क्रि० । देवानाम् ६ । सुम्ने ७ । अमृतस्य, चारुणः ६ । येन । श्रवांसि २ । आशत क्रि० ॥

अन्वितपदार्थः—( येन ) ( नवग्वा ) अभिनववाक्त्वसम्पादकेन सोमेन ( दध्यङ् ) वाक् [ श० ६ । ४ । २ । ३ ] ( अपोर्णुते ) प्रसरति, (येन) सोमेन (विप्रासः) विद्वांसः (आपिरे) बलमाप्नुवन्ति, अथ च (येन) सोमेन (देवानां) विदुषां (सुम्ने) आनन्दे ( चारुणः ) शोभनस्य ( अमृतस्य ) (श्रवांसि) यशांसि ( आशत ) अश्नुवते ॥

ऋग्वेदे तु ९ । १०८ । ४ नवग्व इति, आनशुः इति च पाठः ॥ २ ॥

भावार्थः—(येन) जिस (नवग्वा) उत्तम वाक्त्व वाले सोम से ( दध्यङ् ) वाणी [ श० ६ । ४ । २ । ३ ] (अपोर्णुते) फैलती है, ( येन ) जिस से ( विप्रासः ) विद्वान् लोग ( आपिरे ) सुख को वा बल को प्राप्त होते हैं और ( येन ) जिस सोम से ( देवानाम् ) विद्वानों के ( सुम्ने ) आनन्द में ( चारुणः ) सुन्दर ( अमृतस्य ) अमृत के ( श्रवांसि ) यशों को ( आशत ) पाते हैं ॥ ऋ० ९ । १०८ । ४ का पाठभेद संस्कृतभाष्य में देखिये ॥ २ ॥

अथ तृतीयतृचस्य—अग्निर्ऋषिः । पवमानः सोमो देवता ।

उष्णिक् छन्दः ॥ तत्र प्रथमा—

१ २ ३ २ ३ २र ३ २ ३ १ २

सोमः पुनान ऊर्मिणाऽव्यं वारं विधावति ।

१ २ ३ १ २र ३ १ २

अग्रे वाचः पवमानः कनिक्रदत् ॥ १ ॥ ( ९१० )

व्याख्याता ( ५७२ )

अथ द्वितीया—

३ १ २ ३ २३ २३ १ २ ३ १ २

धीभिर्मृजन्ति वाजिनं वने क्रीडन्तमत्यविम् ।

३ १ २ ३ २ ३ २ ३ १ २

अभि त्रिपृष्ठं मतयः समस्वरन् ॥ २ ॥ ( ९११ )

पदपाठः—धीभिः ३ । मृजन्ति क्रि० । वाजिनम् २ । वने ७ । क्रीडन्तम्, अत्यविम् २ । अभि अ० । त्रिपृष्ठम् २ । मतयः १ । समऽस्वरन् क्रि० ॥

अन्वितपदार्थः—( वाजिनं ) बलवन्तं ( वने ) वननीये वसतीवर्याख्ये उदके ( क्रीडन्तं ) संक्रीडमानम् ( अत्यविम् ) अविभवमूर्णामयं दशापवित्रमतिक्रान्तं सोममृत्विजः ( धीभिः ) धीतिभिरङ्गुलिभिः ( मृजन्ति ) शोधयन्ति । किञ्च ( त्रिपृष्ठं ) त्रीणि द्रोणकलशा-ऽऽधवनीय-पूतभृदाख्यानि यज्ञपात्राणि स्पृशति तं सोमं ( मतयः ) मन्त्रवाचः ( अभिसमऽस्वरन् ) अभितः संस्तुवन्ति ॥

ऋग्वेदे तु ९।१०६।११ मृजन्ति=हिन्वन्तीत्यन्तरम् ॥ २ ॥

भावार्थः—( वाजिनम् ) बलदायक और बलयुक्त, ( वने क्रीडन्तम् ) वसतीवरी नामक जल में क्रीडा करते हुवे, ( अत्यविम् ) ऊर्णामय दशापवित्र को उल्लङ्घित करने वाले [ सोम को ऋत्विङ् लोग ] ( धीभिः ) अङ्गुलियों से ( मृजन्ति ) स्वच्छ [ अमनियां ] करते हैं । किञ्च—( त्रिपृष्ठम् ) तीन

[१ द्रोणकलश,२ आधवनीय,३ पूतभृत] पात्रों को छूने वाले सोम को (मतयः) मन्त्रवाणियें (अभि अस्वरन्) सब ओर से प्रशंसित करती हैं॥ ऋ० ९। १०६। ११ का पाठभेद संस्कृत भाष्य में देखिये॥ २॥

अथ तृतीया—

१ २ ३ १ २ ३ २ ३ २उ ३ १ २ ३ २
असर्जि कलशाँ अभि मीढ्वान्त्सप्तिर्न वाजयुः।
३ १ २र ३ १ २
पुनानो वाचं जनयन्नसिष्यदत् ॥३॥ [१८](९४२)

पदपाठः—असर्जि क्रि०। कलशान् २। अभि अ०। मीढ्वान्,सप्तिः १। न अ०। वाजयुः, पुनानः १। वाचम् २। जनयन् १। असिष्यदत् क्रि०॥

अन्वितपदार्थः—(सप्तिः न) अश्व इव (वाजयुः) बलिष्ठः (मीढ्वान्) सेचनसमर्थः (पुनानः) पवमानः सोमः (कलशान् अभि) कलशेषु (असर्जि) सृज्यते, ततः (वाचं) वागिन्द्रियं (जनयन्) (असिष्यदत्) स्यन्दते॥ ऋग्वेदे तु ९। १०६। १२ मीढ्वान् = मीळ्हे इति पाठः॥ ३॥

भाषार्थः—(सप्तिः न) घोड़े के समान (वाजयुः) बलिष्ठ और (मीढ्वान्) सेचनसमर्थ (पुनानः) पवमान सोम (कलशान् अभि) द्रोणकलशों में (असर्जि) छोड़ा जाता है, तब (वाचम्) वाणी को (जनयन्) उत्पन्न करता हुवा (असिष्यदत्) टपकता है॥ ऋ० ९। १०६। १२ का पाठभेद संस्कृत भाष्य में देखिये॥ ३॥

अथ चतुर्थतृचस्य—प्रतर्दनो दैवोदासिर्ऋषिः। पवमानः सोमो देवता। त्रिष्टुप्छन्दः॥ तत्र प्रथमा—

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १
सोमः पवते जनिता मतीनां जनिता दिवो जनिता
२ ३ २ ३ १ २र ३ १र २र ३ १ २
पृथिव्याः। जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य
३ १ २र
जनितोत विष्णोः ॥१॥ (९४३) व्याख्याता (५२७)

अथ ...

३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २
ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो
३ १ २ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३
मृगाणाम् । श्येनोगृध्राणां स्वधितिर्वनानां सोमः प-
२ ३ १ २ ३ १ २
वित्रमत्येति रेभन् ॥ २ ॥ ( ९४४ )

पदपाठः—ब्रह्मा १। देवानाम् ६। पदवीः १। कवीनाम् ६। ऋषिः १। विप्राणाम् ६। महिषः १। मृगाणाम् ६। श्येनः १। गृध्राणाम् ६। स्वधितिः १। वनानाम् ६। सोमः १। पवित्रम् २। अत्येति क्रि०। रेभन् १॥

अन्वितपदार्थः—(सोमः) ओषधिराजः (देवानाम्) ऋत्विजां (ब्रह्मा) ब्रह्मेव मुख्यो राजा वा भवति, तथा (कवीनां) क्रान्तप्रज्ञानां (पदवीः) पदानि साधुत्वेन योजयति सः [वी गत्यादिषु अदा० प०] तथा (विप्राणां) मेधाविनाम् (ऋषिः) दर्शकोबुद्धिवर्धको भवति, तथा (मृगाणां) वन्यपशूनां (महिषः) महत्त्वकरो वर्धको भवति, तथा (गृध्राणां) पक्षिविशेषाणां तदुपलक्षितानानामन्यपक्षिणां चापि (श्येनः) गतिकरो भवति। एवंप्रभावः सोमः (रेभन्) शब्दं कुर्वन् (पवित्रम्) ऊर्णास्तुकनिर्मितं दशापवित्रम् (अत्येति) अतिगच्छति ॥

निरुक्तपरिशिष्टकारस्तु इत्थं व्याचष्टे—"ब्रह्मा देवानामित्येष हि ब्रह्मा भवति, देवानां देवनकर्मणामादित्यरश्मीनां,पदवीः कवीनामित्येष हि पदं वेत्ति कवीनां कवीयमानानामादित्यरश्मीनामृषिर्विप्राणामित्येष हि ऋषिणो भवति, विप्राणां व्यापनकर्मणामादित्य-

रश्मीनां, महिषो मृगाणामित्येषहि महान्भवति मृगाणां मार्गणकर्मणामादित्यरश्मीनां, श्येनो गृध्राणामिति श्येन आदित्यो भवति श्यायतेर्गतिकर्मणो गृध्र आदित्यो भवति गृध्यतेः स्थानकर्मणो यत एतस्मिंस्तिष्ठति, स्वधितिर्वनानामित्येषहि स्वयं कर्माण्यादित्यो धत्ते, वनानां वननकर्मणामादित्यरश्मीनां सोमः पवित्रमत्येति रेभन्नित्येष हि पवित्रं रश्मीनामत्येति स्तूयमानएष एवैतत्सर्वमक्षरमित्यधिदैवतम् । अथाध्यात्मम्—ब्रह्मा देवानामित्ययमपि ब्रह्मा भवति देवानां देवनकर्मणामिन्द्रियाणां, पदवीः कवीनामित्ययमपि पदं वेत्ति कवीनां कवीयमानानामिन्द्रियाणामृषिर्विप्राणामित्ययमपि ऋषिणो भवति विप्राणां व्यापनकर्मणामिन्द्रियाणां महिषोमृगाणामित्ययमपि महान्भवति मृगाणां मार्गणकर्मणामिन्द्रियाणां श्येनोगृध्राणामिति श्येन आत्मा भवति श्यायतेर्ज्ञानकर्मणो गृध्राणीन्द्रियाणि गृध्यतेर्ज्ञानकर्मणो यत एतस्मिंस्तिष्ठति, स्वधितिर्वनानामित्ययमपि स्वयंकर्माण्यात्मनि धत्ते, वनानां वननकर्मणामिन्द्रियाणां सोमः पवित्रमत्येति रेभन्नित्ययमपि पवित्रमिन्द्रियाण्यत्येति स्तूयमानोऽयमेवैतत्सर्वमनुभवत्यात्मगतिमाचष्टे" । इति नि० प० २ । १३ ॥ ऋग्वेदे ९ । ९६ । ६ ऽपि ॥ २ ॥

भाषार्थः—( सोमः ) ओषधिराज सोम ( देवानाम् ) विद्वान् ऋत्विजों में (ब्रह्मा) ब्रह्मा सा मुख्य वा राजा है, तथा (कवीनाम्) कवियों का (पदवीः) ठीक २ पद जुड़वाने वाला है, और ( विप्राणाम् ) बुद्धिमानों का ( ऋषिः ) दर्शक वा बुद्धिवर्धक है, तथा ( मृगाणाम् ) वन्यपशुओं का (महिषः) बढ़ाने वाला है, अथच ( गृध्राणाम् ) गिद्धों और गृध्रोपलक्षित अन्य पक्षियों का

(रयेनः) गतिसंपादक है। इस प्रकार के प्रभाव वाला सोम (रेभन्) शब्द करता हुआ (पवित्रम्) ऊर्णामय दशापवित्र को (अत्येति) लांघता है॥

निरुक्त के परिशिष्टकार इस ऋचा को इस प्रकार व्याख्यात करते हैं:-
(भावार्थ-)" यह सोम दिव्य सूर्यकिरणों का ब्रह्मा है, यही कवि=कवित्वत् आचरण करते हुये सूर्यकिरणों का पदयोजक है, यही व्यापक सूर्यकिरणों का ऋषि=ज्ञापक है, यही ढूंढने वाले सूर्यकिरणों का बढ़ाने वाला है, यही मानो सूर्य है, यही ठहराने वाले सूर्यकिरणों का सूर्य है, यही संविभाग करने वाले सूर्यकिरणों का कर्म में प्रेरक है। यही सोम किरणों में पवित्रता फैलाने वाला है। यह सोम की स्तुति=प्रशंसा है। यह भौतिक दैवत पक्ष का अर्थ है॥

अब अध्यात्मपक्ष का अर्थ कहते हैं कि यह आत्मा सोम है, जो दिव्य-कर्मा, इन्द्रियों का ब्रह्मा है, वह कवि इन्द्रियों का पदरचनासहायक है, वह व्यापक इन्द्रियों का बोधसहायक है, वह ढूंढने वाले इन्द्रियों का बढ़ाने वाला है, वह शोधक इन्द्रियों का आत्मा है, वह विभाजक इन्द्रियों का कर्म कराने वाला है, वह इन्द्रियों का पावन, इन्द्रियों को लांघ कर चला जाता है। वह सब का अनुभव करता है। इस प्रकार आत्मिक गति कहते हैं" ॥ नि० प० २। १३॥ ऋ० ९। ९६। ६ में भी॥ २॥

अथ तृतीया-

१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ ३ ३ २
प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिरस्स्तोमान्पवमानो मनीषाः।
३ २ २र ३ २ ३ १ २ ३ १ २ ३ १ २र ३ २
अन्तः पश्यन्वृजनेमावराण्या तिष्ठति वृषभो गोषु जानन्॥३॥
[ १९ ] ( १४५ )

पदपाठः-प्रावीविपत् क्रि०। वाचः ६। ऊर्मिम् २। न अ०। सिन्धुः १। गिरः, स्तोमान् २। पवमानः १। मनीषाः २। अन्तः अ०। पश्यन् क्रि०। वृजना, इमा, अवराणि २। आ-तिष्ठति क्रि०। वृषभः १। गोषु ७। जानन् १॥

अन्वितपदार्थः-( पवमानः ) सोमः ( मनीषाः ) धारणा-वतीर्बुद्धीः, (गिरः) निगरणशक्तीः ( स्तोमान् ) वक्तृत्वशक्तीः, ( वाचः ) वाणीः ( प्रावीविपत् ) प्रेरयति। दृष्टान्तः-( सिन्धुः )

नदी ( न ) यथा ( ऊर्मिम् ) तरङ्गं प्रेरयति तद्वत् । तथा ( अन्तः ) अन्तरात्मनि ( पश्यन् ) दर्शयन् दृष्टिसाहाय्यं कुर्वन् ( अ—राणि ) अवार्याणि ( इमा ) इमानि ( वृजना ) बलानि ( आ—तिष्ठति ) आसादयति ( वृषभः ) वर्षकः सोमः ( गोषु ) ज्ञानेन्द्रियेषु ( जानन् ) बोधशक्तिमुत्पादयन् आस्ते, इति शेषः ॥

ऋग्वेदे तु ९ । ९६ । ७ स्तोम इति पाठः ॥ ३ ॥

भावार्थः-(पवमानः) सोम (मनीषाः) धारणावती बुद्धियों को, (गिरः) भोजन शक्तियों को, (स्तोमान्) अकृत्य शक्तियों को (वाचः) और वाणियों को (प्रावीविपत्) प्रेरता है। दृष्टान्त-(न) जैसे (सिन्धुः) नदी (ऊर्मिम्) लहरी को प्रेरती है, तद्वत्। तथा ( अन्तः ) भीतर ( पश्यन् ) दृष्टि की सहायता करता हुवा ( अवराणि ) दूसरों से न हटाने योग्य (इमा) इन (वृजना) बलों को ( आतिष्ठति ) प्राप्त कराता है ( वृषभः ) वृष्टिकर्त्ता सोम ( गोषु ) ज्ञानेन्द्रियों में ( जानन् ) बोधशक्तिप्रदान करता हुवा वर्त्तमान है ॥ ऋ० ९ । ९६ । ७ का पाठान्तर संस्कृत भाष्य में देखिये ॥ ३ ॥

इति सामवेदभाष्ये उत्तरार्चिके पञ्चमाध्यायस्य

षष्ठः खण्डः ॥ ६ ॥

" इति—यज्ञायज्ञीयमग्निष्टोमीयं साम" अथच—" इदानीमुक्थानि । तत्र—सौरभं ब्रह्मसाम वसिष्ठस्य प्रियतममच्छावाकसाम " इति च विवरणकारः ॥

अथ तृचत्रयात्मके सप्तमे खण्डे प्रथम तृचस्य—प्रयोगो ऽग्निर्वा ऋषिः । अग्निर्देवता । गायत्री छन्दः ॥ तत्र प्रथमा—

३ १र २ ३ १ २ ३ २ १ २ ३ १ २
अग्निं वोवृधन्तमध्वराणां पुरूतमम् ।
२ ३ २ ३ १ २
अच्छा नप्त्रे सहस्वते ॥ १ ॥ (९४६) व्याख्याता (२१)

अथ द्वितीया-

३ १र २र ३ २ ३ १ २ ३ २ ३ १ २
अयं यथा न आभुवत्त्वष्टा रूपेव तक्ष्या ।
३ २उ ३ १ २
अस्य क्रत्वा यशस्वतः ॥ २ ॥ ( ९४७ )

पदपाठः-अयम् १ । यथा अ० । नः ४ । आभुवत् क्रि० । त्वष्टा १ । रूपा २ । इव अ० । तक्ष्या २ । अस्य ६ । क्रत्वा ३ । यशस्वतः ६ ॥

अन्वितपदार्थः-पूर्वमन्त्रादग्नेरनुवृत्तिः ( अस्य ) ( यशस्वतः ) यशस्विनोऽग्नेः ( क्रत्वा) क्रतुना यज्ञेन ( अयम् ) अग्निः (नः) अस्मभ्यम् (तक्ष्या) तक्ष्याणि विकर्त्तव्यानि (रूपा ) रूपाणि (इव यथा त्वष्टा) (आभुवत्) आभवेत्तथा वयं प्रयतेमहि इति शेषः ॥

अस्माभिस्तथानुष्ठेयं यथायमग्निश्छेदनभेदनकर्मणा दुर्गन्धनाशं कुर्यात् । दृष्टान्तः-यथा वर्धकिस्तक्ष्याणि काष्ठानि तक्ष्णोति तद्वत् ॥ ऋग्वेदे ८ । १०२ । ८ऽपि ॥ २ ॥

भाषार्थः-पूर्व मन्त्र से "अग्नि" की अनुवृत्ति है ( अस्य ) इस (यशस्वतः) यशस्वी अग्नि के ( क्रत्वा ) यजन से ( अयम् ) यह अग्नि ( नः ) हमारे लिये ( तक्ष्या ) फाड़ने योग्य (रूपा) काष्ठादि रूपों को ( इव ) जैसे (त्वष्टा) बढ़ई ( यथा ) जैसे ( आभुवत् ) होवे, वैसा हम यत्न करें ॥

हमको अग्नि द्वारा ऐसा य न करना चाहिये कि यह अग्नि काष्ठों को बढ़ई के समान दुर्गन्ध का छेदन भेदन करके उपकारक हो ॥ ऋ०८।१०२।८ में भी ॥२॥

अथ तृतीया-

३ १ २र ३ २उ ३ २ ३ १ २
अयं विश्वा अभि श्रियोग्निर्देवेषु पत्यते ।

२३ ३१२
आवाजैरुपनोगमत् ॥ ३ ॥ [ २० ] ( ९४८ )

पदपाठः-अयम् १ । विश्वाः २ । अभि अ० । श्रियः २ । अग्निः १ । देवेषु १ । पत्यते क्रि० । आ । वाजैः ३ । उप अ० । नः २ । गमत् क्रि० ॥

अन्वितपदार्थः—( अयम् ) कृतयजनः ( अग्निः ) पावकः ( देवेषु ) वाय्वादिषु ( विश्वाः ) समस्ताः ( श्रियः ) संपदः ( अभिपत्यते ) अभितः संपादयति, सोऽयम् ( वाजैः ) अन्नैः यज्ञेन सस्यवृद्ध्या (नः) अस्मान् (उपाऽऽगमत्) उपागच्छेत् ॥ ऋग्वेदे ८ । १०२ । ९ ऽपि ॥ ३ ॥

भाषार्थः-( अयम् ) यह यजन किया हुआ ( अग्निः ) अग्नि ( देवेषु ) वायु आदि देवों में ( विश्वाः ) सब (श्रियः ) संपदाओं को ( अभि निपत्यते) सब ओर से पहुंचाता है वह अग्नि ( वाजैः ) खेती की वृद्धि द्वारा अन्नों से ( नः ) हम को ( उपागमत ) प्राप्त हो ॥ ऋ० ८ । १०२ । ९ में भी ॥ ३ ॥

अथ द्वितीयतृचस्य--गोतमो राहूगण ऋषिः । इन्द्रो देवता। अनुष्टुप्छन्दः ॥

तत्र प्रथमा—

३१२ ३१ २ ३ २३१२ ३ १२ ३ १ २ ३क २र ३
इममिन्द्र सुतं पिब ज्येष्ठममर्त्यं मदम् । शुक्रस्य त्वाऽभ्यक्ष-
१ २ ३२ ३ १ २
रन् धारा ऋतस्य सादने ॥१॥ (९४९) व्याख्याता (३४४)

अथ द्वितीया—

२ ३ २३१२३ २३ १२ ३ १ २
नकिष्ट्वद्रथीतरो हरी यदिन्द्र यच्छसे ।
२ ३ १ २ ३ २ ३ २ ३ १ २ १ २
नकिष्ट्वानु मज्मना नकिः स्वश्व आनशे ॥२॥ (९५०)

पदपाठः-नकिः अ० । त्वत् ५ । रथीतरः १ । हरी २ । यत् अ० । इन्द्र सं० । यच्छसे क्रि० । नकिः । त्वा २ । अनु अ० । मज्मना ३ । नकिः । स्वश्वः १ । आनशे क्रि० ॥

अन्वितपदार्थः-(इन्द्र) हे राजन् ! (यत्) यस्मात्कारणात् त्वं (हरी) शीघ्रगावश्वौ (यच्छसे) प्राप्नोषि तस्मात् (त्वत्) त्वत्तोऽपरः (रथीतरः) उत्तमोरथी (नकिः) नैव स्यात्। अथ च (त्वा अनु) त्वादृशः (मज्मना) बलेन (नकिः) नैव स्यात् (स्वश्वः) शोभनाश्ववान् त्वत्तोऽन्यः (नकिः) नैव (आनशे) प्राप्नुयात् ॥

राज्ञाऽद्वितीयभावेन भवितव्यं यतो न तादृशोऽपरोरथी, स्वश्वो, बली च स्यात् ॥

मज्मनेति बलनाम निघं० २।९॥ युष्मत्ततत्क्षुष्वन्तः पादम् (८।३।१०३)इति नकिष्टदित्यत्र षत्वम्। ऋग्वेदे१।८४।६ऽपि॥३॥

भाषार्थः-(इन्द्र) हे राजन् ! (यत्) जोकि तुम (हरी) दोनों शीघ्रगामी अश्वों को (यच्छसे) प्राप्त होते हो इस से (त्वत्) तुम से बढ़कर (रथीतरः) उत्तम रथी (नकिः) कोई न हो और (त्वा अनु) तुमसा (मज्मना) बल से भी (नकिः) कोई न हो; तथा (स्वश्वः) उत्तम घोड़ों वाला तुम से बढ़कर (नकिः) कोई न (आनशे) मिले ॥

अर्थात् राजा को सर्वोत्तम अश्वादि रत्न अपने पास रखने चाहियें ॥ निघं० २। ९ अष्टाध्यायी ८। ३। १०३ के प्रमाण संस्कृतभाष्य में देखिये ॥ ऋ० १। ८४। ६ में भी ॥ २॥

अथ तृतीया-

१ २ ३१२ ३ १ २ ३ १ २ ३

इन्द्राय नूनमर्चतोक्थानि च ब्रवीतन। सुता अमत्सु-

१ २३ १२ ३ १२

रिन्दवो ज्येष्ठं नमस्यता सहः ॥३॥ [२१] (९५१)

पदपाठः-इन्द्राय ४। नूनम् अ०। अर्चत क्रि०। उक्थानि २। च अ०।

ब्रवीतन क्रि० । सुताः १ । अमत्सुः क्रि० । इन्दवः १ । ज्येष्ठम् २ । नमस्यत क्रि० । सहः २ ॥

अन्वितपदार्थः—हे प्रजाजनाः ! (इन्द्राय) राज्ञे (नूनम्) अवश्यम् (अर्चत) सत्कारं कुरुत (उक्थानि) प्रशस्तीः (च) (ब्रवीतन) ब्रूत (सुताः) अभिषुताः (इन्दवः) सोमास्तमिन्द्रम् (अमत्सुः) हृष्टं पुष्टं कुर्य्युः (सहः) बलवन्तं (ज्येष्ठम्) प्रशस्यं तं (नमस्यत) नमस्कुरुत॥ ऋग्वेदे १।८४।५ऽपि॥३॥

भाषार्थः—हे प्रजाजनो ! (इन्द्राय) राजा के लिये (नूनम्) अवश्य (अर्चत) सत्कार करो (उक्थानि) उस की स्तुतियें (ब्रवीतन) उच्चारण करो (सुताः) अभिषुत (इन्दवः) सोम (अमत्सुः) उसे हृष्ट करें (सहः) बलवान् (ज्येष्ठम्) बड़े राजा को (नमस्यत) नमस्कार करो॥ ऋ० १।८४। ५ में भी॥३॥

अथाग्रिमतृचविचारः। अथ तावत्तु नाऽस्याऽऽर्षेयं ज्ञायते, नापि छन्दोनुक्रमणी, नापि देवतोल्लेखो देवतानुक्रमण्यां दृश्यते। वस्तुतो ह्यस्य तृचस्य द्वाविंशसूक्तस्य अनुक्रमणीषु संख्यैव नास्ति। यथा च सामवेदे प्रायो हि ऋग्वेदस्था मन्त्रा दृश्यन्ते न तथास्य तृचस्यैकाप्यृक् ऋग्वेदसंहितायां दृश्यते। परं यज्ञसम्बन्धेऽस्य विनियोगो यादृशो विवरणकारमनुसृत्य श्रीसत्यव्रतेन सामश्रमिणा प्रकाशितः सोयम्—

"इदानीं चतुर्थेऽहनि षोडशी भवति। तस्य षोडशिनो महान् विचारः। इन्द्रश्च वृक्षश्च समभवतामित्यारभ्य महान्विचारो निदानकृतेत्युक्तः। चतुस्त्रिंशदक्षराणि स्तुता भवन्ति। तमुपसृत्य प्रवहादीनि उपसर्गाक्षराणि निरुप्यन्ते। तथा सति आदित्रयाणां पादानां त्रीणि त्रीणि उपसर्गाक्षराणि पादान्तेषु भवन्ति। इति विवरणकारः। एवं च—

प्रथमर्चि–प्रवह, हरिह, मतिर्न–इति नव;

द्वितीयर्चि–नव्यं न, दिवो न, स्व३र्न–इति नव;

तृतीयर्चि–मित्रो न, यतिर्न, भृगुर्न–इति नव।

किञ्च प्रथमर्चि चतुर्थपादादौ च–मधो३श्चकानः इति सप्त, तदित्थं संकलनया चतुस्त्रिंशदुपसर्गाक्षराणि संपद्यन्ते। अत्र च–स्व३र्न, मनो३ः इत्युभयत्र त्रिमात्रस्य द्व्यक्षरत्वेन ग्रहणं बहुविचारेण संपादितम्" इति॥

भा०–"अथ चतुर्थ दिन में षोडशी (याग) होता है। उस षोडशी का बड़ा विचार है। (इन्द्रश्च) यहां से आरम्भ करके निदानकृत् ने बड़ा विचार किया है। ३४ अक्षर 'स्तुत' कहाते हैं। तदनुसार 'प्रवह' इत्यादि उपसर्गाक्षर निरूपित किये हैं। इस प्रकार प्रत्येक ऋचा के पहले ३ तीन पादों में पादान्त के उपसर्गाक्षर होते हैं। यह विवरणकार का मत है। तथा उ–

१–ऋचा में–प्र व ह, ह रि ह, म ति र्न–ये ९। २ में–न व्यं न, दि वो न, स्व ३ र्न–ये ९। और ३ में–मि त्रो न, य ति र्न, भृ गु र्न–ये ९ तथा प्रथम ऋचा के चतुर्थ पाद के आरम्भ में–म धो ३ श्च का न–ये ७ सब मिलकर ३४ उपसर्गाऽक्षर हुवे। इस में–स्व३र्न, मधो ३ः–इन दोनों में ३ मात्रा के प्लुत को दो अक्षर गिन कर बड़े विचार (क्लिष्ट कल्पना) से ३४ की गिनती पूरी होती है॥"

अथ तृतीयतृचे प्रथमा–

१ २ ३ १ ३ २ ३ १ २ ३ १ २ १ २ ३ १ २
इन्द्र जुषस्व प्रवहायाहि शूर हरिह। पिबा सुतस्य
३ १ २ २र ३ २उ २ १ २
मतिर्न मधोश्चकानश्चारुर्मदाय॥ १॥ (९५२)

पदपाठः–इन्द्र सं०। जुषस्व, प्रवह, आयाहि क्रि०। हरिह, शूर सं०। पिब क्रि०। सुतस्य ६। मतिः १। न अ०। मधोः ६। चकानः, चारुः १। मदाय ४॥

अन्वितपदार्थः–(इन्द्र) हे राजन्! (हरिह) हरीणां चौ-

३ १र २र ३ २ ३ १ २ ३ १ २ ३
प्रिया इन्द्रस्य धेनवो वज्रं हिन्वन्ति सायकं
२ ३१२ ३१ २
वस्वीरनु स्वराज्यम् ॥ २ ॥ ( १००६ )

पदपाठः—ताः १। अस्य ६। पृशनायुवः १। सोमम् २। श्रीणन्ति क्रि०। पृश्नयः, प्रियाः १। इन्द्रस्य ६। धेनवः १। वज्रम् २। हिन्वन्ति क्रि०। सायकम् २। वस्वीः १। अनु अ०। स्वराज्यम् २॥

अन्वितपदार्थः—( प्रियाः ) लोकस्य हितकर्त्र्यः (ताः) ( पृशनायुवः) स्पर्शनकामाः ( पृश्नयः ) नानावर्णाः ( वस्वीः) वासयित्र्यः ( अस्य इन्द्रस्य ) सूर्यस्य ( धेनवः ) दीधितयः ( स्वराज्यम् ) स्वप्रकाशं सूर्यम् (अनु) सहकृत्य (वज्रं सायकं हिन्वन्ति) वज्रवत्प्रसरन्ति (सोमम् ) सोमाद्योषधिजातं (श्रीणन्ति) पचन्ति॥ ऋग्वेदे १। ८४। ११ऽपि ॥ २ ॥

भावार्थः—( प्रियाः ) संसार का हित करने वाली, ( ताः ) वे, ( पृशनायुवः ) सब को छूना चाहने वाली, ( पृश्नयः ) अनेक रंगतों वाली, (वस्वीः) जगन्निवासहेतुभूता, ( अस्य ) इस ( इन्द्रस्य ) सूर्य की ( धेनवः ) किरणें ( स्वराज्यम् ) स्वप्रकाश सूर्य के ( अनु ) साथ २ ( वज्रं सायकं हिन्वन्ति ) वज्र बाण सा छोड़तीं अर्थात वज्रवत् प्रहारयुक्त बाण के समान फैलतीं और ( सोमम् ) सोमादि ओषधियों को ( श्रीणन्ति ) पकाती हैं ।। ऋ० १। ८४। ११ में भी ।। २॥

अथ तृतीया—

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ १
ता अस्य नमसा सहः सपर्यन्ति प्रचेतसः। व्रतान्यस्य सश्चिरे
३ १ २ ३१२ ३ २ ३१२ ३ १ २
पुरूणि पूर्वचित्तये वस्वीरनु स्वराज्यम् ॥३॥[१५](१००७)

पदपाठ—ताः १ । अस्य ६ । नमसा ३ । सहः २ । सपर्यन्ति । क्रि० प्रचेतसः १ । व्रतानि २ । अस्य ६ । सश्चिरे क्रि० । पुरूणि २ । पूर्वचित्तये ४ । वस्वीः १ । अनु अ० । स्वराज्यम् २ ॥

अन्वितपदार्थः—(वस्वीः) वासहेतवः (अस्य) सूर्यस्य (ताः) दीधितयः ( प्रचेतसः ) बुद्धितत्त्वोद्बोधनकर्यः ( स्वराज्यमनु ) ( नमसा ) उत्पादितेन अन्नेन ( सहः ) लोकस्य बलं ( सपर्यन्ति ) सत्कुर्वन्ति ( अस्य ) सूर्यस्य ( पुरूणि ) बहूनि ( व्रतानि ) अङ्कुरोत्पादादिकर्माणि ( पूर्वचित्तये ) पूर्वं जागरणाय ( सश्चिरे ) सेवन्ते ॥ ऋग्वेदे १ । ८४ । १२ ऽपि ॥ ३ ॥

भावार्थः—( वस्वीः ) बसाने वाली ( अस्य ) इस सूर्य की ( ताः ) वे किरणें ( प्रचेतसः ) बुद्धितत्त्व को जगाने वाली ( स्वराज्यम् ) सूर्य के ( अनु ) साथ २ ( नमसा ) उत्पादित अन्न से ( सहः ) लोक के बल को ( सपर्यन्ति ) बढ़ाने से सत्कृत करती हैं और ( अस्य ) इस सूर्य के ( पुरूणि ) बहुत से ( व्रतानि ) अन्नोत्पादनादि कर्मों को ( पूर्वचित्तये ) पूर्व जगाने के लिये ( सश्चिरे ) सेवित करती हैं ॥ ऋ० १ । ८४ । १२ में भी ॥ ३ ॥

उक्तं माध्यंदिनं सवनमिदानीं तृतीयं सवनमुच्यते इति विवरणकारः ॥

अथ षष्ठे खण्डे प्रथमतृचस्य—जमदग्निर्ऋषिः । पवमानः सोमोदेवता । गायत्रीछन्दः । तत्र प्रथमा—

१ २ ३ १र २र३ १र २र ३ २
असाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठाः ।
३ २उ ३ १ २
श्येनो न योनिमासदत् ॥१॥ (१००८) व्याख्याता (४७३)

अथ द्वितीया—

३ १र २र ३ १ २ ३ २ ३ १र २र ३ २
शुभ्रमन्धो देववातमप्सु धौतं नृभिः सुतम् ।
१ २ ३ २ ३ १ २
स्वदन्ति गावः पयोभिः ॥ २ ॥ ( १००९ )

पदपाठः—शुभ्रम्, अन्धः, देववातम् २। अप्सु ७। धौतम् २। नृभिः ३। सुतम् २। स्वदन्ति क्रि०। गावः १। पयोभिः ३॥

अन्वितपदार्थः—(गावः) सूर्यकिरणाः (शुभ्रम्) उज्ज्वलम् (अन्धः) अन्नरूपम् (देववातम्) देवैर्भक्षणीयम् (अप्सु धौतम्) वसतीवरीषु शोधितम् (नृभिः सुतम्) ऋत्विग्भिरभिषुतं सोमं (पयोभिः) उदकैः सह (स्वदन्ति) आचामन्ति॥ ऋग्वेदे ९। ६२। ५ ऽपि॥ २॥

भाषार्थः—(गावः) सूर्यकिरणें (शुभ्रम्) उज्ज्वल (अन्धः) अन्नरूप (देववातम्) देवों के भोजन (अप्सु धौतम्) वसतीवरीनामक जलों में धोये हुवे (नृभिः सुतम्) ऋत्विजों द्वारा अभिषुत किये हुवे सोम का (पयोभिः) जलों सहित (स्वदन्ति) चूंसती हैं॥ ऋ० ९। ६२। ५ में भी॥ २॥

अथ तृतीया—

१ ३ २ ३ १र २र ३ १ २ ३ १ २
आदीमश्वं न हेतारमशूशुभन्नमृताय।
२ ३ १ २ ३ १ २
मधो रसꣳ सधमादे॥ ३॥ [१६] (१०१०)

पदपाठः—आत्, ईम् अ०। अश्वम् २। न अ०। हेतारम् २। अशूशुभन् क्रि०। अमृताय ४। मधोः ६। रसम् २। सधमादे ७॥

अन्वितपदार्थः—ऋत्विजः (सधमादे) यज्ञे (ईम्) एतं (मधोः) सोमस्य (रसम्) (अमृताय) अमृतत्वाय (आत् अशूशुभन्) शोभयन्ति (न) यथा (हेतारम्) शीघ्रगामिनम् (अश्वम्) शोभयन्ति तद्वत्॥ ऋग्वेदे तु ९। ६२। ६ हेतारः, मध्वः इति पाठभेदौ॥ ३॥

भाषार्थः—ऋत्विज् लोग (सधमादे) यज्ञ में (ईम्) इस (मधोः) सोम के (रसम्) रस को (अमृताय) अमृतत्व के लिये (आत् अशूशुभन्) शोभित करते हैं (न) जैसे (हेतारम्) शीघ्रगामी (अश्वम्) अश्व को सजाते हैं तद्वत्॥ ऋ० ९। ६२। ६ के पाठभेद संस्कृतभाष्य में देखिये॥ ३॥

अथ प्रपाठस्य द्वितीय सूक्तस्य-ऊर्ध्वसद्माकृतयशाश्च क्रमेणर्षी। पवमानः सोमो देवता । ककुप् सतोबृहती च क्रमेणच्छन्दसी । तत्र प्रथमा-

३ २ ३ २ ३२३३ १ २ ३ १ २ ३ २ १र २र
अभिद्युम्नं बृहद्यश इषस्पते दिदीहि देव देवयुम् । वि कोशं
३ १ २
मध्यमं युव ॥ १ ॥ ( १०११ ) व्याख्याता ( ५७९ )

अथ द्वितीया-

१ २ ३ २र ३ २ ३ २उ ३ २ ३ १ २ ३ २
आवच्यस्व सुदक्ष चम्वोः सुतो विशां वन्हिर्न विश्पतिः । वृष्टिं
३ १ २ ३ २ ३ २उ ३ १ २ ३ १ २
दिवः पवस्व रीतिमपो जिन्वन् गविष्टये धियः॥२॥[१७] (१०१२)

पदपाठः-आवच्यस्व क्रि० । सुदक्ष सं० । चम्वोः ७ । सुतः १ । विशाम् ६ । वह्निः १ । न अ० । विश्पतिः १ । वृष्टिम् २ । दिवः ५ । पवस्व क्रि० । रीतिम् २ । अपः २=६ । जिन्वन् १ । गविष्टये ४ । धियः २ ॥

अन्वितपदार्थः-( सुदक्ष ) शोभनबल ! सोम ! (चम्वोः) अधिषवणफलकयोः (सुतः) अभिषुतः (विश्पतिः) राजा ( न ) इव ( विशाम् ) प्रजानां ( वन्हिः ) वोढा सन् ( आवच्यस्व ) प्राप्नुहि [ वचेर्गत्यर्थस्य व्यत्ययेन श्यनि रूपम् ] ( गविष्टये ] गामात्मनइच्छते यजमानाय (धियः) कर्माणि ( जिन्वन् ) प्रेरयन् ( अपः ) अपां ( रीतिं ) वृष्टिम् (दिवः) आकाशात् ( पवस्व ) कुरु ॥ ऋग्वेदे तु ९ । १०८ । १० अपां जिन्व इति पाठः ॥२॥

भाषार्थः-(सुदक्ष) शोभनबलवन् ! सोम ! (चम्वोः) अभिषव के फलकों में ( सुतः ) अभिषुत किया हुवा ( विश्पतिः ) राजा (न) सा ( विशाम् ) प्रजाओं का ( वह्निः ) ले चलने वाला होकर ( आवच्यस्व ) प्राप्त हो और ( गविष्टये ) अपने लिये गौ आदि धनार्थी यजमान के लिये ( धियः ) कर्मों को ( जिन्वन् ) प्रेरित करता हुवा ( अपः ) जलों की ( रीतिम् ) वर्षा को

( पवस्व ) का ॥ ऋ० ९ । १०८ । १० का पाठभेद संस्कृतभाष्य में देखिये ॥२॥

अथ तृतीयं तृचस्य-त्रितऋषिः पवमानः सोमो देवता । उष्णिक्छन्दः ॥

तत्र प्रथमा-

२ १र २र३ १ २ ३ २ ३२ ३ १ २ २ ३ १२ ३
प्राणाशिशुर्महीनां हिन्वन्नृतस्य दीधितिम् । विश्वा परि प्रि-
१ २३१२ ३ २
या भुवदध द्विता ॥ १ ॥ ( १०१३ ) व्याख्याता (५१७)

अथ द्वितीया-

१२ ३ १ २ ३ २ १२३ १र २र ३ २
उप त्रितस्य पाष्योऽ३ऽरभक्त यद् गुहा पदम् ।
३ १ २ ३१र २र ३ १२ ३ २
यज्ञस्य सप्त धामभिरध प्रियम् ॥ २ ॥ ( १०१४ )

पदपाठः-उप अ० । त्रितस्य ६ । पाष्योः ७ । अभक्त क्रि० । यत् २ । गुहा ७ । पदम् २ । यज्ञस्य ६ । सप्त, धामभिः ३ । अध अ० । प्रियम् २ ॥

अन्वितपदार्थः-( त्रितस्य ) त्रीन्विद्याशिक्षाधर्मविषया-न्तनोति तस्य विदुष ऋत्विजः [त्रितस्तीर्णतमो मेधयेति निरु० ४ । ६ ] ( गुहा ) गुहायां हविर्धाने वर्त्तमानयोः ( पाष्योः ) पाषाणवद् दृढयोरधिषवणफलकयोः ( पदम् ) सोमाख्यं ( यत् ) (उप-अभक्त) अध्वर्युस्संभजते (अध) । तम् ( यज्ञस्य ) सोम-यागादेः (सप्त) सप्तभिः (धामभिः) धारकैर्गायत्र्यादिच्छन्दोभिः ( प्रियं ) प्रियकरं सोममृत्विजः स्तुवन्ति ॥

ऋग्वेदे ९ । १०२ । २ ऽपि ॥२॥

भाषार्थः-( त्रितस्य ) विद्या शिक्षा धर्मविषयों को विस्तृत करने वाले विद्वान् ऋत्विज् के यहां [निरु० ४ । ६] (गुहा) हविर्धान में वर्त्तमान (पाष्योः) पाषाण के समान कठिन दो२ अधिषवण फलकों में ( यत् पदम् ) जिस सोम पद को (उप अभक्त) अध्वर्यु सामीप्य से सेवित करता है ( अध ) फिर उस ( प्रियम् ) प्यारे सोम को ( सप्त ) सात (धामभिः) धारक गायत्र्यादि छन्दों से प्रशंसित करते हैं ॥ ऋ० ९ । १०२ । २ में भी ॥ २ ॥

अथ तृतीया–

१ २ ३ २ ३ १२ ३१२ २१ ३ १ १ २
त्रीणि त्रितस्य धारया पृष्ठेष्वैरयद्रयिम् । मिमीते
३ १ २ ३ २ ३ १ २
अस्य योजना वि सुक्रतुः ॥३॥ [१८] ( १०१५ )

पदपाठः–त्रीणि १ । त्रितस्य ६ । धारया ३ । पृष्ठेषु ७ । ऐरयत् क्रि० । रयिम् २ । मिमीते क्रि० । अस्य ६ । योजना २ । वि अ० । सुक्रतुः १ ॥

अन्वितपदार्थः–(त्रितस्य) विदुषः यज्ञेऽनुष्ठितया (धारया) सोमधारया (पृष्ठेषु) पृष्ठाख्येषु सामसु (त्रीणि) सवनानि भवन्ति । किञ्च–( अस्य ) सोमस्य ( योजना ) योजनानि, यः(सुक्रतुः) शोभनयज्ञः पुमान् (वि मिमीते), सः ( रयिम् ) धनं धान्यं च ( ऐरयत् ) प्राप्नुयात् ॥

ऋग्वेदे तु ९ । १०२ । ३ ऐरयत् = एरया इति पाठः॥३॥

भावार्थः–( त्रितस्य) विद्वान् की यज्ञ में अनुष्ठित (धारया) सोमरस की धारा से (पृष्ठेषु) पृष्ठसंज्ञक सामों में (त्रीणि) तीन सवन होते हैं । (अस्य ) इस सोम की(योजना)योजनाओं को जो (सुक्रतुः) शोभन कर्म वाला विद्वान् (वि मिमीते) मानपूर्वक अनुष्ठित करता है वह रयिम्)धन धान्य को(ऐरयत्) प्राप्त करेगा ॥ ऋ० ९ । १०२ । ३ का पाठान्तर संस्कृतभाष्य में देखिये ॥३॥

अथ चतुर्थं तृचस्य–रेभसूनू काश्यपौ ऋषी । पवमानः सोमो देवता । अनुष्टुप्छन्दः । तत्र प्रथमा–

१ २ ३ १ २ ३ २ ३ १ २ ३ २
पवस्व वाजसातये पवित्रे धारया सुतः ।
१ २ ३ १ २ ३२ ३ १ २
इन्द्राय सोम विष्णवे देवेभ्यो मधुमत्तरः ॥१॥ (१०१६)

पदपाठः–पवस्व क्रि० । वाजसातये ४ । पवित्रे ७ । धारया ३ । सुतः १ । इन्द्राय ४ । सोम सं० । विष्णवे ४ । देवेभ्यः ४ । मधुमत्तरः १ ॥

अन्वितपदार्थः–(सोम) ! त्वम् (पवित्रे) दशापवित्रे (धारया)

धारापूर्वकं ( सुतः ) अभिषुतः ( मधुमत्तरः ) अतिमाधुर्य्योपेतः ( वाजसातये ) अन्नलाभाय ( इन्द्राय, विष्णवे ) इत्यादिनामकेभ्यः ( देवेभ्यः ) वायुविशेषेभ्यः ( पवस्व ) शुद्धिं संपादय संपादयति वा सोमः ॥ ऋग्वेदे तु ९ । १०० । ६ मधुमत्तमः, वाजसातमः इति पाठौ ॥ १ ॥

भाषार्थः—( सोम ) सोम ! ( पवित्रे ) दशापवित्र पर ( धारया ) धारा से ( सुतः ) अभिषुत किया हुवा ( मधुमत्तरः ) अतिमाधुर्ययुक्त, (वाजसातये ) अन्नोत्पत्ति लाभ के लिये ( इन्द्राय ) इन्द्र, (विष्णवे) विष्णु इत्यादि नामक (देवेभ्यः) वायुविशेषों के लिये (पवस्व) पवित्रता कर वा करता है ॥ ऋ० ९ । १०० । ६ के पाठभेद संस्कृतभाष्य में देखिये ॥ १ ॥

अथ द्वितीया—

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
त्वाꣳरिहन्ति धीतयो हरिं पवित्रे अद्रुहः ।
३ २ ३ २३ ३ २ ३ १ २ ३ १ २
वत्सं जातं न मातरः पवमान विधर्मणि ॥२॥(१०१७)

पदपाठः—त्वाम् २ । रिहन्ति क्रि० । धीतयः १ । हरिम् २ । पवित्रे ७ । अद्रुहः ६ । वत्सं,जातम् २ । न अ० । मातरः १ । पवमान सं० । विधर्मणि ७ ॥

अन्वितपदार्थः—( पवमान ) सोम ! (धीतयः ) अङ्गुलयः ( त्वाम् ) ( हरिं ) सोमम् ( अद्रुहः ) द्रोहरहितस्य ऋत्विजः ( विधर्मणि ) विविधं हविषां धारके यज्ञे ( न ) यथा ( जातं वत्सम् ) तत्कालोत्पन्नं गोवत्सं ( मातरः ) धेनवः ( रिहन्ति) लिहन्ति, तथा ( पवित्रे ) दशापवित्रे स्पृशन्ति प्रेम्णेति भावः ॥ ऋग्वेदे तु ९ । १०० । ७ धीतयः—मातरः, मातरः—धेनवः इति पाठौ ॥ २ ॥

भाषार्थः—( पवमान ) सोम ! (न ) जैसे ( जातम् ) जातमात्र (वत्सम्) बछड़े को ( मातरः ) उस की माता गौवें ( रिहन्ति ) चाटती हैं [ ऐसे ही प्रेम से] ( अद्रुहः ) द्रोहरहित पुरुष के ( विधर्मणि ) विविध द्रव्यों के धा-

धारक यज्ञ में (धीतयः) ऋत्विज् की अङ्गुलियें (हरिम्) हरे (त्वाम्) तुझ सोम को (पवित्रे) दशापवित्र पर स्पर्श करती हैं॥ ऋ० ९। १००। ७ के पाठान्तर संस्कृतभाष्य में देखिये॥ २॥

अथ तृतीया-

१र २र ३ १र २र १ २ ३ १
त्वं द्यां च महिव्रत पृथिवीं चातिजभ्रिषे। प्रतिद्रापि-
२ ३ १ २ ३ २
ममुञ्चथाः पवमान महित्वना॥३॥ [१९] (१०१८)

पदपाठः—त्वम् १। द्याम् २। च अ०। महिव्रत सं०। पृथिवीम् २। च, अति अ०। जभ्रिषे क्रि०। प्रति अ०। द्रापिम् २। अमुञ्चथाः क्रि०। पवमान सं०। महित्वना ३॥

अन्वितपदार्थः-(महिव्रत) महाकर्मन्! (पवमान) सोम! (त्वम् द्यां च पृथिवीं च) (अति जभ्रिषे) अत्यन्तं बिभर्षि (महित्वना) महत्त्वेन (द्रापिम्) कवचम् (प्रत्यमुञ्चथाः) संवरयसि॥ ऋग्वेदे ९। १००। ९ ऽपि॥३॥

भावार्थः-(महिव्रत) बड़े काम वाले! (पवमान) सोम! (त्वम्) तू (द्याम् च) द्युलोक और (पृथिवीं च) पृथिवी लोक का (अति) अत्यन्त (जभ्रिष) धारण पोषण करता है और (महित्वना) बड़प्पन से (द्रापिम्) कवच को (अति-अमुञ्चथाः) ढक सा लेता है॥ ऋ० ९। १००। ९ में भी॥३॥

अथ पञ्चमतृचस्य-मन्युर्वासिष्ठऋषिः। पवमानः सोमो देवता। त्रिष्टुप्छन्दः॥

तत्र प्रथमा-

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ २ ३ २ ३ १ २ २ ३
इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सहइन्वन्मदाय। हन्ति
२ ३ १ २ ३ १र २र ३ २ ३ २ ३ १ २ ३ १ २
रक्षो बाधते पर्यरातिं वरिवस्कृण्वन्वृजनस्य राजा॥१॥ (१०१९)

व्याख्याता (५४०)

अथ तृतीया–

२ ३ १२३ १ २ ३ २ ३१र २र ३ १ २
अध धारया मध्वा पृचानस्तिरो रोम पवते अद्रिदुग्धः ।
२ ३ १ २ ३ १ २ ३ २ ३ २३१ २ ३ १र २र
इन्दुरिन्द्रस्य सख्यं जुषाणो देवो देवस्य मत्सरो मदाय।२।(१०२०)

पदपाठः—अध अ०। धारया ३। मध्वा ३। पृचानः १। तिरः अ०। रोम २। पवते क्रि०। अद्रिदुग्धः ११। इन्दुः १। इन्द्रस्य ६। सख्यम् २। जुषाणः, देवः १। देवस्य ६। मत्सरः १। मदाय ४ ॥.

अन्वितपदार्थः–(अध) अथानन्तरम् (अद्रिदुग्धः) ग्रावभिरभिषुतः (इन्दुः) सोमः (मध्वा) मधुरया (धारया) (पृचानः) संपृक्तः सन् (रोम) रोममयं दशापवित्रम् (तिरः) तिरस्कृत्य व्यवधायकं कृत्वा (पवते) द्रोणकलशे गच्छति। किं च— (इन्द्रस्य) वृष्टिकृतो वायोः (सख्यं) हितं (जुषाणः) सेवमानः (देवः) द्योतमानः (मत्सरः) हृष्टिकारकः सोमः (देवस्य) तस्यैव वृष्टिकृतः (मदाय) हर्षार्थं (पवते) गच्छति ॥

ऋग्वेदे ९। ९७। ११ ऽपि ॥ २ ॥

भावार्थः—(अध) फिर (अद्रिदुग्धः) पत्थरों से अभिषुत (इन्दुः) सोम (मध्वा) मधुर (धारया) धारा से (पृचानः) मिलता हुआ (रोम) दशापवित्र को (तिरः) छिद्र में करके (पवते) द्रोणकलश में जाता और (इन्द्रस्य) वृष्टिकारक वायु का (सख्यम्) हित (जुषाणः) सेवन करता हुआ (देवः) प्रकाशमान (मत्सरः) हृष्टिकारक सोम (देवस्य) उसी वृष्टिकारक देव वायु के (मदाय) वृद्ध्यर्थ (पवते) होम द्वारा जाता है ॥ ऋ० ९।९७। ११ में भी ॥२॥

अथ तृतीया–

३ २ ३ १ २ ३ २ ३ २ ३ २उ ३ १ २ ३र
अभि व्रतानि पवते पुनानो देवो देवान्त्स्वेन रसेन पृञ्चन् ।
२ ३ १ २ ३ १र २र ३ २ ३ १ २ २ २ ३ १ २
इन्दुर्धर्माण्यृतुथा वसानो दश क्षिपो अव्यत सानो अव्ये ॥ ३ ॥

पदपाठः—अभि अ०। व्रतानि २। पवते क्रि०। पुनानः, देवः १। देवान् २। स्वेन, रसेन ३। पृञ्चन् १। इन्दुः १। धर्माणि २। ऋतुथा अ०। वसानः १। दश, क्षिपः १। अव्यत क्रि०। सानो ७। अव्ये ७॥

अन्वितपदार्थः—(धर्माणि) धारकपोषकाणि (व्रतानि) कर्माणि (ऋतुथा) यथर्तु (वसानः) धारयन् (इन्दुः) सोमः (पुनानः) शुद्धिं कुर्वन् (अभि पवते) सर्वतोगच्छति। (देवः) प्रकाशमानः सोमः (स्वेन रसेन) (देवान्) वाय्वादीन् (पृञ्चन्) संपर्चयन् संयोजयन् आस्ते। (दश) दश (क्षिपः) अङ्गुलयः (सानो) सानौ उच्चे (अव्ये) दशापवित्रे (अव्यत) तं गमयन्ति॥ ऋग्वेदे तु ९। १७। १२ व्रतानि=प्रियाणि इत्यन्तरम्॥ ३॥

भावार्थ-(धर्माणि) धारक पोषक (व्रतानि) कर्मों को (ऋतुथा) ऋतु के अनुसार (वसानः) धारता हुआ (इन्दुः) सोम (पुनानः) शुद्धि करता हुआ (अभिपवते) सब ओर जाता और (देवः) प्रकाशमान सोम (स्वेन) अपने (रसेन) रस से (देवान्) वायु आदि देवों को (पृञ्चन्) चिपकाता हुआ है। (दश) १० (क्षिपः) अङ्गुलियें (सानो) ऊंचे (अव्ये) ऊन के दशापवित्र पर (अव्यत) उस को पहुंचाती हैं॥ ऋ० ९। ९७। १२ का पाठभेद संस्कृत भाष्य में देखिये॥ ३॥

अथ सप्तमे खण्डे प्रथम तृचस्य—वसुश्रुत आत्रेय ऋषिः। अग्निर्देवता। पङ्क्तिश्छन्दः॥ तत्र प्रथमा—

१ २ ३ १ २ ३ १ २ २ ३ २ ३ १ २
आ ते अग्न इधीमहि द्युमन्तं देवाजरम्। यद्ध स्या ते पनीयसी
३ २ ३ १ २ ३ १र २र ३ २ ३ १ २
समिद्दीदयति द्यवीषꣳ स्तोतृभ्य आभर॥ १॥ (१०२२)

व्याख्याता (४१९)

अथ द्वितीया—

१ २ २ ३ ३ २ ३ १ २ १ २ ३ २ ३
आ ते अग्न ऋचा हविः शुक्रस्य ज्योतिषस्पते। सुश्चन्द्र दस्म

१ २३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
विश्पते हव्यवाट् तुभ्यं हूयत इषᳬं स्तोतृभ्य आभर॥२॥(१०२३)

पदपाठः—आ अ० । ते ६ । अग्ने सं० । ऋचा ३ । हविः १ । शुक्रस्य ६ । ज्योतिषस्पते, सुश्चन्द्र, दस्म, विश्पते, हव्यवाट् सं० । तुभ्यम् ४ । हूयते क्रि० । इषम् २ । स्तोतृभ्यः ४ । आभर क्रि० ॥

अन्वितपदार्थः—( अग्ने ) पावक ! ( शुक्रस्य ) वीर्यवतः शुक्रस्य वा (ते) तव ( ऋचा ) याज्यानुवाक्यया सह ( तुभ्यम् हविः आ हूयते ) (ज्योतिषस्पते, हव्यवाट् ), (विश्पते) प्रजानां पालक ! (सुश्चन्द्र) सुष्ठ्वाह्लादक ! ( दस्म ) दाहकाग्ने ! (स्तोतृभ्यः) ऋत्विगादिभ्यः (इषम् ) अन्नम् (आभर) ॥ऋग्वेदे तु ५ । ६ । ५ ज्योतिषः—शोचिष इतिपाठः ॥ २ ॥

भावार्थः—( अग्ने ) अग्ने ! ( शुक्रस्य ) वीर्यवान् वा शुक्र ( ते ) तेरे ( ऋचा ) याज्यानुवाक्यादि मन्त्र के साथ ( तुभ्यम् ) तेरे लिये ( हविः ) पुरोडाशादि हव्य ( आ हूयते ) होमा जाता है सो (ज्योतिषस्पते) ज्योति के स्वामिन् ! ( हव्यवाट् ) हव्य पहुंचने वाले ! ( विश्पते ) प्रजापालक ! ( सुश्चन्द्र ) भले प्रकार आह्लादन करने वाले ! ( दस्म ) दाहक ! अग्ने ! ( स्तोतृभ्यः ) ऋत्विगादि के लिये ( इषम् ) अन्न ( आभर ) प्राप्त करा ॥ ऋ० ५ । ६ । ५ का पाठान्तर संस्कृतभाष्य में देखिये ॥ २ ॥

अथ तृतीया—

१र ३ १ २ ३ १ २ ३ २ ३ १ २
ओभे सुश्चन्द्र विश्पते दर्वी श्रीणीष आसनि । उतो न उत्पुपूर्या
३ १२ ३ १२ ३ २ ३ १ २
उक्थेषु शवसस्पत इषᳬंस्तोतृभ्य आभर ॥३॥ [२१] (१०२४)

पदपाठः—आ अ० । उभे २ । सुश्चन्द्र, विश्पते सं० । दर्वी २ । श्रीणीषे क्रि० । आसनि ७ । उतो अ० । नः २। उत्पुपूर्याः क्रि० । उक्थेषु ७ । शवसस्पते सं० । इषम् । स्तोतृभ्यः । आभर ॥

अन्वितपदार्थः- ( सुश्चन्द्र ) शोभनाह्लादक ! अग्ने ! (उभे) द्वे ( दर्वी ) दव्यौं हविःपूर्णे जुहूप्रभृती ( आसनि ) आस्ये ( आश्रीणीषे ) पचसि ( उतो ) अपिच ( नः ) अस्मान् ( उक्थेषु ) यागेषु ( उत्पुपूर्याः ) बलैरुत्पूरय ( शवसस्पते ) बलपते ! (स्तोतृभ्यः इषमाभर) ॥ ऋग्वेदे तु ५।६।९। उभे सुश्चन्द्र सर्पिषः इत्यन्तरं प्रथमे पादे ॥३॥

भाषार्थः—( सुश्चन्द्र ) शोभनाह्लादक ! अग्ने ! ( उभे ) दोनों ( दर्वी ) हव्यभरे जुहू आदि पात्रों को (आसनि) मुख में (आश्रीणीषे) पकाता है उतो और (नः) हम को ( उक्थेषु ) यज्ञों में ( उत्पुपूर्याः) बलों से भर (शवसस्पते) बलपते ! ( स्तोतृभ्यः इषमाभर ) ऋत्विगादि के लिये अन्न प्राप्त करा ॥ ऋ० ५ । ६ । ९ का पाठान्तर संस्कृत भाष्य में देखिये ॥ ३ ॥

अथ द्वितीयतृचस्य-नृमेध ऋषिः। इन्द्रो देवता । उष्णिक्छन्दः । तत्र प्रथमा-

१ २ ३ १ २ २ १ २ ३ २ ३ २ ३ १ २
इन्द्राय साम गायत विप्राय बृहते बृहत् । ब्रह्मकृते
३ १ २ ३ १ २
विपश्चिते पनस्यवे ॥१॥ (१०२५) व्याख्याता ( ३८८ )

अथ द्वितीया-

१र २र ३ १ २ ३ १र २र
त्वमिन्द्राभिभूरसि त्वꣳ सूर्यमरोचयः ।
३ १ २ ३ १ २ ३ १ २
विश्वकर्मा विश्वदेवो महाँ असि ॥ १ ॥ ( १०२६ )

पदपाठः- त्वम् १ । इन्द्र सं० । अभिभूः १ । असि क्रि० । त्वम् । सूर्यम् २ । अरोचयः क्रि० । विश्वकर्मा, विश्वदेवः, महान् १ । असि ॥

अन्वितपदार्थः-(इन्द्र) परमेश्वर! (त्वम्) (अभिभूः) सर्वाभिभावुकः ( असि ) भवसि ( त्वम् सूर्यम् अरोचयः )

प्रकाशयसि । त्वं ( विश्वकर्मा विश्वदेवः महान् असि ) ऋग्वेदे ८ । ९८ । २ ऽपि ॥२॥

भाषार्थः-( इन्द्र ) परमेश्वर ! ( त्वम् ) तू ( अभिभूः ) सब को दबासकने वाला ( असि ) है ( त्वम् ) तू ही ( सूर्यम् ) सूर्य को ( अरोचयः ) प्रकाश देता है । तू ( विश्वकर्मा ) जगत्स्रष्टा, ( विश्वदेवः ) जगत् का देव ( महान् ) सर्वव्यापी ( असि ) है ॥ ऋ० ८ । ९८ । २ में भी ॥ २ ॥

अथ तृतीया-

३ २ ३ १ २ ३ २ १२ ३ २ ३ २
विभ्राजञ्ज्योतिषा स्वाऽ३ऽरगच्छोरोचनं दिवः ।
३ १ २ ३ १ २
देवास्त इन्द्र सख्याय येमिरे ॥३॥ [ २२ ] (१०२७)

पदपाठः-विभ्राजन् १ । ज्योतिषा ३ । स्वः अ० । अगच्छः क्रि० । रोचनम् २ । दिवः ६ । देवाः १ । ते ६ । इन्द्र सं० । सख्याय ४ । येमिरे क्रि० ॥

अन्वितपदार्थः-(इन्द्र) परमेश्वर ! त्वम् (ज्योतिषा) स्वस्वरूपेण ( विभ्राजन् ) जगत्प्रकाशयन् ( दिवः ) द्युलोकस्य ( रोचनम् ) प्रकाशकं ( स्वः ) आनन्दस्वरूपम् (अगच्छः) प्राप्नोषि (देवाः) विद्वांसः ( ते ) तव (सख्याय) सौहार्दाय (येमिरे) प्रयतन्ते ॥ ऋग्वेदे ८।९८।३ऽपि ॥३॥

भाषार्थः- ( इन्द्र ) परमेश्वर ! तू ( ज्योतिषा ) अपने ज्योतिःस्वरूप से ( विभ्राजन् ) जगत् को प्रकाश पहुंचाता हुवा (दिवः) द्युलोक के (रोचनम्) प्रकाशक ( स्वः ) अपने आनन्दस्वरूप को ( अगच्छः ) प्राप्त है ( देवाः ) विद्वान् लोग (ते) तेरी (सख्याय) मित्रता के लिये ( येमिरे ) यत्न करते हैं ॥ ऋ० ८ । ९८ । ३ में भी ॥ ३ ॥

अथ तृतीयतृचस्य-गोतमो राहूगण ऋषिः । इन्द्रो देवता । अनुष्टुप्छन्दः ॥ तत्र प्रथमा-

१२ ३ १ २ ३ १ २ ३ १ २
असावि सोम इन्द्र ते शविष्ठ धृष्णवागहि ।

१ २ ३२३ ३ २ ३ २ ३ १ २
आ त्वा पृणक्तिन्द्रियꣳ रजः सूर्यो न रश्मिभिः ॥१॥(१०२८)

व्याख्याता ( ३४७ )

अथ द्वितीया-

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
आतिष्ठ वृत्रहन्रथं युक्ता ते ब्रह्मणा हरी।
३ २ ३ २ ३ २ ३ १ २ ३ १ २
अर्वाचीनꣳ सु ते मनो ग्रावा कृणोतु वग्नुना ॥२॥ (१०२९)

पदपाठः-आतिष्ठ क्रि०। वृत्रहन् सं०। रथम् २। युक्ता१। ते ४। ब्रह्मणा ३। हरी १। अर्वाचीनम् २। सु अ०। ते ६। मनः २। ग्रावा १। कृणोतु क्रि०। वग्नुना ३॥

अन्वितपदार्थः-( वृत्रहन् ) हे शत्रूणां हन्तः ! ( ते ) त्वदर्थं ( ब्रह्मणा ) यानसमयोचितेश्वरप्रार्थनामन्त्रेण सह ( हरी ) अश्वौ ( युक्ता ) युक्तौ योजितौ स्तः। तं युक्ताश्वं ( रथम् आतिष्ठ )। ( ग्रावा ) सोमाभिषवपाषाणः ( ते ) तव ( मनः ) हृदयम् (वग्नुना) वाचा शब्देन निघं० १।११ (अर्वाचीनं) नूतनं (सुकृणोतु) सुकरोतु ॥ ऋग्वेदे १।८४।३ यजुर्वेदेचाऽपि ८।३३ ॥२॥

भाषार्थः-( वृत्रहन् ) हे शत्रुविनाशक ! ( ते ) आप के लिये (ब्रह्मणा) चढ़ाई के समयोचित ईश्वरप्रार्थनाविषयक मन्त्र से ( हरी ) दो घोड़े ( युक्ता ) जोड़े हैं। उस घोड़े जुड़े ( रथम् ) रथ में ( आतिष्ठ ) बैठिये। ( ग्रावा ) सोमाभिषव करने का पत्थर ( ते ) आप के ( मनः ) हृदय को ( वग्नुना ) शब्द से [ निघं० १।११ ] ( अर्वाचीनम् ) नवीन ( सुकृणोतु ) अच्छे प्रकार करे ॥ ऋ० १।८४।३ तथा यजुः ८।३३ में भी ॥२॥

अथ तृतीया-

२ ३ १२ २२ ३ १ २ १ २ ३ १२
इन्द्रमिद्धरी वहतोऽप्रतिधृष्टशवसम्। ऋषीणाꣳ सुष्टुती-

२र ३ २ ३ १ २
रुप यज्ञं च मानुषाणाम् ॥ ३ ॥ [ २३ ] ( १०३० )

पदपाठः—इन्द्रम् २। इत् अ०। हरी १। वहतः क्रि०। अप्रतिधृष्टशवसम् २। ऋषीणाम् ६। सुष्टुतीः २। उप अ०। यज्ञम् २। च अ०। मानुषाणाम् ६॥

अन्वितपदार्थः—( अप्रतिधृष्टशवसम् ) केनाप्यधर्षित बलम् ( इन्द्रम् ) राजानम् ( इत् ) एव ( हरी ) उक्ताश्वौ (वहतः) यानयुक्तौ प्रापयतः( ऋषीणाम् ) द्रष्टृणां (सुष्टुतीः) शोभनाः स्तुतीः ( मानुषाणाम् ) मनुष्याणां ( यज्ञं च ), ( उप ) इन्द्र उपाप्नोति इति शेषः ॥

ऋग्वेदे तु १। ८४। २ ऋषीणां च स्तुतीः इतिपाठः ॥ यजुर्वेदे ८। ३४ ऽपि ॥ ३ ॥

भाषार्थः—(अप्रतिधृष्टशवसम्) किसी से न दबने वाले बल युक्त (इन्द्रम्) राजा को (इत्) ही ( हरी ) उक्त अश्व ( वहतः) लेचलते हैं। ( ऋषीणाम्) द्रष्टाओं की स्तुतियों ( च ) और ( मानुषाणाम् ) मनुष्यों के ( यज्ञम् ) यज्ञ को भी इन्द्र ही ( उप ) प्राप्त होता है। ऋ० १। ८४। २ यजुः ८। ३४ का पाठभेद संस्कृत भाष्य में देखिये ॥ ३ ॥

इति षष्ठाध्यायस्य सप्तमः खण्डः ॥

## इति तृतीयः प्रपाठकः

इति

श्रीमत्कण्ववंशावतंस पण्डित हज़ारीलाल स्वामिसूनुना हस्तिनापुर पार्श्ववर्ति परीक्षितगढ निवासिना तुलसीराम स्वामिना कृते सामवेदभाष्योत्तरार्चिके

षष्ठोऽध्यायः ॥ ६ ॥

ओ३म्

# अथ सप्तमोऽध्यायः

## अथ चतुर्थः प्रपाठकः

### तत्र

प्रथमखण्डे प्रथमतृचस्य सिकतानिवारी ऋषिगणः, सोमोदेवता ।
जगतीछन्दः । तत्र प्रथमा–

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १
ज्योतिर्यज्ञस्य पवते मधु प्रियं, पिता देवानां जनिता विभू-
२ १ २ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ १ २ ३
वसुः । दधाति रत्नꣳ स्वधयोरपीच्यं, मदिन्तमोमत्सर इन्द्रि-
१र २र
यो रसः ॥ १ ॥ ( १०३१ )

पदपाठः–ज्योतिः १ । यज्ञस्य ६ । पवते क्रि० : मधु, प्रियम् २ । पिता १ । देवानाम् ६ । जनिता १ । विभूवसुः १ । दधाति क्रि० । रत्नम् २ । स्व- धयोः ७ । अपीच्यम् २ । मदिन्तमः, मत्सरः, इन्द्रियः, रसः १ ॥

अन्वितपदार्थः–( यज्ञस्य ) ज्योतिष्टोमादेः (ज्योतिः) दीपकः ( देवानां पिता ) वाय्वादिदेवानां पालकः (ज- निता) तेषां संस्कारजन्मापेक्षयोत्पादकः जनकत्वप्रकार उक्तो मनुना यथा–"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुप- तिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इति । ( विभूवसुः ) बहुधनः ( मदिन्तमः ) अतिशयितहर्षप्रदः ( मत्सरः ) स्वयंहृष्टः ( इन्द्रियः ) इन्द्रेणजुष्टः ( रसः ) सोमरसः ( प्रियं मधु ) प्रीतिकरं माधुर्यं ( पवते ) क्षरति

तथा (स्वधयोः) द्यावापृथिव्योः (अपीच्यं) गूढं (रत्नम्) सारभूतं वस्तुजातं ( दधाति ) यज्ञानुष्ठातृन्धारयति ॥ ऋग्वेदे ९ । ८६ । १० ऽपि ॥ १ ॥

भाषार्थः-( यज्ञस्य ) यज्ञ की ( ज्योतिः ) ज्योति, ( देवानां पिता ) वायुआदि देवों का पालक, ( जनिता ) उन को संस्कारापेक्षया जन्म देने वाला, ( विभूवसुः ) बहुत धनवान्, ( मदिन्तमः ) अतिशय हर्षदायक, ( मत्सरः ) हर्षयुक्त, ( इन्द्रियः ) इन्द्र से सेवित (रसः) सोमरस ( प्रियं मधु) प्यारे माधुर्य को ( पवते ) टपकाता और ( स्वधयोः ) द्युलोक और पृथिवी में ( अपीच्यम् ) गूढ़ ( रत्नम् ) सारवस्तु को (दधाति) याज्ञिकों को धारण कराता है ॥ सोम को उत्पादक इस लिये कहा है कि वह होम में हुत होकर मनु के लेखानुसार वृष्टि,अन्न और प्रजा को उत्पन्न करता है । मनु का श्लोक देखो ऊपर संस्कृत पृष्ठ ११२५ पं० १९॥ में ऋ० ९ । ८६ । १० में भी ॥ १ ॥

अथ द्वितीया-

३ १ २ ३ १ २ ३क २र ३ १ २ ३ २ ३ १ २ ३ २
अभिक्रन्दन्कलशं वाज्यर्षति, पतिर्दिवः शतधारो विचक्षणः ।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
हरिर्मित्रस्य सदनेषु सीदति, मर्मृजानोविभिः सिन्धुभिर्वृषा ॥
॥ २ ॥ ( १०३२ )

पदपाठः-अभिक्रन्दन् १ । कलशम् २ । वाजी १ । अर्षति क्रि० । पतिः १ । दिवः ६ । शतधारः, विचक्षणः, हरिः १ । मित्रस्य ६ । सदनेषु ७ । सीदति क्रि० । मर्मृजानः १ । अविभिः, सिन्धुभिः ३ । वृषा १ ॥

अन्वितपदार्थः-( वाजी ) वेगवान्बलवान्वा,(विचक्षणः ) दृष्टिप्रसादकरः, ( हरिः ) हरितः, ( वृषा ) वृष्टिहेतुः, ( सिन्धुभिः ) स्यन्दनसाधनैः ( अविभिः ) अविरोमोद्भवैर्दशापवित्रैः ( मर्मृजानः ) शोध्यमानः, ( अभिक्रन्दन् ) शब्दं कुर्वन् ( कलशम् ) द्रोणकलशम् (अर्षति)

गच्छति । तथा ( शतधारः ) होमेन असंख्यधारोभूत्वा ( मित्रस्य ) आदित्यस्य ( सदनेषु ) द्युलोके ( सीदति ) उपतिष्ठते तदा ( दिवः ) द्युलोकस्यापि ( पतिः ) पालको-जायते ॥ ऋग्वेदे ९ । ८६ । ११ ऽपि ॥ २ ॥

भाषार्थः—( वाजी ) वेग वा बल वाला, ( विचक्षणः ) दृष्टि को प्रसन्न करने वाला, (हरिः) हरा, (वृषा) वृष्टि करने का हेतु, (सिन्धुभिः अविभिः) टपकाने के साधन दशापवित्रों से ( मर्मृजानः ) शोधा जाता हुवा ( अभि-क्रन्दन् ) शब्द करता हुवा ( कलशम् ) द्रोणकलश में ( अर्षति ) जाता और ( शतधारः ) फिर होम से अनेक धारों वाला होकर ( मित्रस्य ) सूर्य के ( सदनेषु ) द्युलोकों में ( सीदति ) उपस्थित होता है । तब (दिवः) द्युलोक का ( पतिः ) पालक होता है ॥ ऋ० ९ । ८६ । ११ में भी ॥ २ ॥

अथ तृतीया—

२ ३ १ २ ३ १२ ३ १ २ ३ १ २ ३१र २र
अग्रे सिन्धूनां पवमानो अर्ष, स्यग्रे वाचो अग्रियो गोषु
२ ३ १ २ ३१र २र ३ २
गच्छसि । अग्रे वाजस्य भजसे महद्धनꣳ स्वायुधः
३ १ २
सोतृभिः सोम सूयसे ॥ ३ ॥ [ १ ] ( १०३३ )

पदपाठः-अग्रे ७ । सिन्धूनाम् ६ । पवमानः १ । अर्षसि क्रि० । अग्रे । वाचः ६ । अग्रियः १ । गोषु ७ । गच्छसि क्रि० । अग्रे । वाजस्य ६ । भजसे क्रि० । महत्, धनम् २ । स्वायुधः १ । सोतृभिः ३ । सोम सं० । सूयसे क्रि० ॥

अन्वितपदार्थः-सोम ! त्वं ( सिन्धूनाम् ) स्यन्दन स्वभावानामुदकानाम् ( अग्रे ) पुरस्तात् ( पवमानः ) पूयमानःसन् “ ( अर्षसि ) गच्छसि वृष्ट्योदकं जनयितु-माहुतिद्वारान्तरिक्षे गच्छसीत्यर्थः ।” इत्येव सायणः तथा ( वाचः ) माध्यमिकाया अपि ( अग्रियः ) अग्रणीः सन्

गच्छसि तथा (गोषु) रश्मिषु तेषाम् (अग्रे गच्छसि)। तथा (वाजस्य) बलस्य उपयोगभूतं ( महत् धनं ) ( भजसे ) सेवयसे तथा ( स्वायुधः ) सुष्ठुसाधनस्त्वं ( सोतृभिः ) अभिषुण्वद्भिरध्वर्य्वादिभिः ( सूयसे ) अभिपूयसे ॥

ऋग्वेदे तु ९। ८६। १२ अर्षति, गच्छति, महाधनं, सोमसूयसे=पूयते वृषेति पाठभेदाः ॥ ३ ॥

भाषार्थः-सोम तू (सिन्धूनाम्) बादल जलों के (अग्रे) आगे (पवमानः) शोधा हुवा " (अर्षसि) जाता है अर्थात् वृष्टि में जल उत्पन्न करने आहुति द्वारा अन्तरिक्ष में जाता है ॥" यही अर्थ सायणाचार्य ने किया है। तथा ( वाचः ) वाणी का भी ( अग्रियः ) मुखिया होता हुवा और ( गोषु ) किरणों में उन के (अग्रे) आगे जाता है। तथा ( वाजस्य) बल के उपयोगी (महत् धनम्) उत्तम धन का ( भजसे ) सेवन कराता है तथा (स्वायुधः) भले सिलबट्टों वाला ( सोतृभिः ) ऋत्विजों द्वारा ( सूयसे ) अभिषुत किया जाता है ॥

तात्पर्य यह है कि सोम होम से वर्षा और पान से बल, सुस्वर वाणी और धन का उपयोगी है ॥ ऋ० ९। ८६। १२ के पाठभेद संस्कृतभाष्य में देखिये ॥३॥

अथ द्वितीय तृचस्य-कश्यप ऋषिः। सोमो देवता। गायत्री छन्दः॥ तत्र प्रथमा-

१२ ३ २ ३ १ २ ३ १र २र ३ २
असृक्षत प्र वाजिनो गव्या सोमासो अश्वया ।
३ १ २ ३ १र २र
शुक्रासो वीरयाशवः ॥१॥ (१०३४) व्याख्याता (४८२)

अथ द्वितीया—

३ १ २ ३ १ २ ३ १ २ ३ १ २
शुम्भमाना ऋतायुभिर्मृज्यमाना गभस्त्योः ।
१२ ३ १ २ ३ १ २
पवन्ते वारे अव्यये ॥ २ ॥ ( १०३५ )

पदपाठः-शुम्भमानाः १। ऋतायुभिः ३। मृज्यमानाः १। गभस्त्योः ७। पवन्ते क्रि०। वारे, अव्यये ७ ॥

अन्वितपदार्थः-( ऋतायुभिः ) यज्ञेच्छुभिर्ऋत्विग्भिः ( शुम्भमानाः ) शोभितीक्रियमाणाः ( गभस्त्योः ) अङ्गुलिषु ( मृज्यमानाः ) शोध्यमानाः सोमाः ( अव्यये ) अव्यूर्णामये ( वारे ) बालविरचिते दशापवित्रे ( पवन्ते ) पूयन्ते ॥ऋग्वेदे ९ । ६४ । ५ ऽपि ॥ २ ॥

भाषार्थः-( ऋतायुभिः ) यज्ञ चाहने वाले ऋत्विजों से ( शुम्भमानाः ) शोभित किये जाने वाले और ( गभस्त्योः ) अङ्गुलियों में ( मृज्यमानाः ) शोधे जाते हुवे सोम ( अव्यये ) ऊनी ( वारे ) बालों से बने दशापवित्र पर ( पवन्ते ) स्वच्छ किये जाते हैं ॥ ऋ० ९ । ६४ । ५ में भी ॥२॥

अथ तृतीया -

१र २र ३ २ ३ २ ३ १ २ ३ २ ३ १ २

ते विश्वा दाशुषे वसु सोमा दिव्यानि पार्थिवा।

१ २ ३ १र २र

पवन्तामान्तरिक्ष्या ॥ ३ ॥ [२] ( १०३६ )

पदपाठः-ते १ । विश्वा २ । दाशुषे ४ । वसु २ । सोमाः १ । दिव्यानि २ । पार्थिवा २ । पवन्ताम् क्रि० । आन्तरिक्ष्या २ ॥

अन्वितपदार्थः-( ते सोमाः) प्रथममन्त्रानुकूलफलदाः ( दाशुषे ) यजमानाय हूयमानाः सन्तः (विश्वा) सर्वाणि ( दिव्यानि ) दिवि भवानि ( पार्थिवा ) पार्थिवानि ( आन्तरिक्ष्या ) अन्तरिक्षस्थानि च (वसु) वसूनि धनानि गवाश्वप्रभृतीनि ( पवन्ताम् ) सर्वतः क्षरन्तु ॥ ऋग्वेदे ९ । ६४ । ६ ऽपि ॥ ३ ॥

भाषार्थः- ( ते सोमाः ) वे सोम ( दाशुषे ) इस सूक्त की प्रथम ऋचा के अनुकूल यज्ञानुष्ठानी के लिये (विश्वा) सब (दिव्यानि, पार्थिवा, आन्तरिक्ष्या)

तीनों लोकों के ( वसु ) गवाश्वादि धन ( पवन्ताम् ) सर्वतः वर्षावें ॥ ऋ० ९ । ६४ । ६ में भी ॥ ३ ॥

अथ तृतीयदशर्चसूक्तस्य- मेधातिथिर्ऋषिः । सोमो देवता । गायत्री छन्दः ॥

तत्र प्रथमा-

१२ ३१र २र ३ १ २ ३ १ २

पवस्व देववीरति पवित्रꣳ सोम रꣳह्या ।

१ २ ३ १र २र

इन्द्रमिन्दो वृषाविश ॥ १ ॥ ( १०३७ )

पदपाठः-पवस्व क्रि० । देववीः १ । अति अ० । पवित्रम् २ । सोम सं० । रंह्या ३ । इन्द्रम् २ । इन्दो सं० । वृषा १ । आविश क्रि० ॥

अन्वितपदार्थः-(इन्दो) आर्द्र ! ( सोम ! ) (देववीः) देवकामः ( वृषा ) वर्षकस्त्वं ( रंह्या ) वेगेन ( पवित्रम् ) यथा स्यात्तथा ( अतिपवस्व ) अतिक्षर किञ्च ( इन्द्रम् ) वृष्टिकरं वायुम् (आविश) ॥

आर्द्रः सोमोग्नौ हुत्वा वृष्टिकामेन यजमानेन वायौ प्रवेष्टव्यः ॥ ऋग्वेदे ९ । २ । १ ऽपि ॥ १ ॥

भाषार्थः—( इन्दो ) गीले ! ( सोम ) सोम ! ( देववीः ) देवों का चाहा ( वृषा ) वृष्टिकारक तू ( रंह्या ) वेगसे ( पवित्रम् ) पवित्रता के लिये ( अति पवस्व ) वर्ष और ( इन्द्रम् ) वृष्टिकारक वायु में ( आविश ) प्रवेश कर ॥ अर्थात् गीला सोम अग्नि में होम कर वृष्टि चाहने वाले यजमान को वृष्टिकारक वायु में प्रविष्ट कराना चाहिये ॥ ऋ० ९ । २ । १ में भी ॥ १ ॥

अथ द्वितीया—

१ २ ३ २ ३ २ ३ १ २ ३ १

आवच्यस्व महि प्सरो वृषेन्दो द्युम्नवत्तमः ।

१र २र ३ २

आ योनिं धर्णसिः सदः ॥ २ ॥ ( १०३८ )

पदपाठः–आवच्यस्व क्रि० । महि, प्सरः २ । वृषा १ । इन्दो सं० । द्युम्नवत्तमः १ । आ अ० । योनिम् २ । धर्णसिः १ । सदः क्रि० ॥

अन्वितपदार्थः–( इन्दो ) सोम ! ( वृषा ) वृष्टिकरः ( द्युम्नवत्तमः ) अतएव धनधान्यवत्तमः ( धर्णसिः ) अतएव च विश्वस्य धारकस्त्वम् ( महि ) महत् ( प्सरः ) पानीयम् ( अन्धः ) अन्नं च ( आवच्यस्व ) अस्मान्प्रापय किञ्च (योनिं) स्वकीयं स्थानं दिवम् (आसदः) आसीद ॥

सोमो यज्ञे आहुतिं गतो द्युस्थो भूत्वा धनधान्यसमृद्धिकरो जायते इति भावः ॥ ऋग्वेदे ९ । २ । २ ऽपि ॥ २ ॥

भाषार्थः–( इन्दो ) सोम ! ( वृषा ) वृष्टिकारक इसी से ( द्युम्नवत्तमः ) अत्यन्त धन धान्यवान् और इसी से ( धर्णसिः ) विश्व का धारक तू (महि) बहुत ( प्सरः ) जल और ( अन्धः ) अन्न को ( आवच्यस्व ) हमें प्राप्त करा और तू ( योनिम् ) अपने स्थान आकाश में ( आसदः ) विराज ॥

भावार्थ यह है कि यज्ञ में प्रयुक्त आहुति को प्राप्त हुवा सोम आकाशस्थ होकर धनधान्यादि की समृद्धिकारक हो जाता है ॥ ऋ० ९ । २ । २ में भी ॥२॥

अथ तृतीया —

१ २   ३ २उ   ३ १ २ ३ १ २ ३ १ २
अधुक्षत प्रियं मधु धारा सुतस्य वेधसः ।
३ १ २   ३ १ २
अपो वसिष्ट सुक्रतुः ॥ ३ ॥ ( १०३९ )

पदपाठः–अधुक्षत क्रि० । प्रियं, मधु २ । धारा १ । सुतस्य, वेधसः ६ । अपः २ । वसिष्ट क्रि० । सुक्रतुः १ ॥

अन्वितपदार्थः–यस्य (सुतस्य) अभिषुतस्य (वेधसः) अभिलषितवृष्ट्यादिविधातुः ( सोमस्य धारा प्रियं मधु ) ( अधुक्षत ) दुग्धे । सः ( सुक्रतुः ) सुकर्मा सोमः ( अपः )

मेघस्थजलानि (वसिष्ट) आच्छादितानि कुर्यात् ॥ ऋग्वेदे ९ । २ । ३ ऽपि ॥ ३ ॥

भावार्थः—जिस ( सुतस्य ) अभिषुत, ( वेधसः ) वृष्ट्यादिके विधाता, ( सोमस्य ) सोम की ( धारा ) धार ( प्रियं मधु ) प्यारे मधुर रस को ( अधुक्षत ) दुहती है। वह ( सुक्रतुः ) सुकर्मा सोम ( अपः ) मेघस्थ जलों को ( वसिष्ट ) आच्छादित करे ॥ ऋ० ९ । २ । ३ में भी ॥ ३ ॥

अथ चतुर्थी—

३ १ २ ३ १र २र ३ १ २
महान्तं त्वा महीरन्वापो अर्षन्ति सिन्धवः ।
१र २र ३ १ २
यद्गोभिर्वासयिष्यसे ॥ ४ ॥ ( १०४० )

पदपाठः—महान्तम् त्वा २। महीः १। अनु अ०। आपः १। अर्षन्ति क्रि०। सिन्धवः १। यत् १। गोभिः ३। वासयिष्यसे क्रि० ॥

अन्वितपदार्थः—सोम ! ( यत् ) यदा त्वम् ( गोभिः ) किरणैः सह ( वासयिष्यसे ) आच्छादयिष्यसे तदा ( महान्तं ) गुणैः प्रवृद्धं ( त्वा अनु ) त्वामनु ( सिन्धवः महीः ) स्पन्दनशीला महत्यः ( आपः ) वर्षाः ( अर्षन्ति ) प्राप्स्यन्ति ॥

सोमयागेन वृष्टिपर्य्याप्तता जायत इतिभावः ॥ ऋग्वेदे ९ । २ । ४ ऽपि ॥ ४ ॥

भावार्थः—सोम ! तू ( यत् ) जब ( गोभिः ) किरणों के साथ ( वासयिष्यसे ) आच्छादन करेगा तब ( महान्तम् ) गुणों में बड़े ( त्वा ) तुझ को ( अनु ) लक्ष्य करके ( सिन्धवः ) बहने वाली ( महीः ) बड़ी ( आपः ) वर्षायें ( अर्षन्ति ) आवेंगी ॥

अर्थात् सोमयाग से पर्याप्त वर्षा होती है ॥ ऋ० ९ । २ । ४ में भी ॥ ४ ॥

अथ पञ्चमी—

३ २ ३ १ २ ३ २ ३१२ ३ २
समुद्रो अप्सु मामृजे विष्टम्भो धरुणो दिवः ।

१ २ ३१२ ३ २
सोमः पवित्रे अस्मयुः ॥ ५ ॥ (१०४१)

पदपाठः-समुद्रः १। अप्सु ७। मामृजे क्रि०। विष्टम्भः,धरुणः १। दिवः ६। सोमः १। पवित्रे ७। अस्मयुः १॥

अन्वितपदार्थः-( समुद्रः ) समुद्रवन्ति रसा अस्मात्सः ( विष्टम्भः ) आधारः अतएव ( दिवः धरुणः ) दिवोधारकः ( अस्मयुः ) अस्मत्कामः ( सोमः ) ओषधिराजः ( अप्सु ) जलेषु ( मामृजे ) मर्मृज्यते पवित्रैभिषिच्यते ॥ ऋग्वेदे ९।२।५ऽपि ॥ ५ ॥

भावार्थः-( समुद्रः ) रसभरा ( विष्टम्भः ) आधार और इसी से ( दिवः धरुणः द्युलोक का धारक ( अस्मयुः ) हमारा हितकामुक ( सोमः ) सोम ( अप्सु ) वसतीवरीनामक जलों में ( मामृजे ) दशापवित्र पर अभिषिक्त किया जाता है ॥ ऋ० ९।२।५ में भी ॥ ५ ॥

अथ षष्ठी—

१ २ ३ २३ १ २३ २ ३ १र २र ३ २
अचिक्रदद्वृषाहरिर्महान्मित्रो न दर्शतः।
१ २र
सᳩ सूर्येण दिद्युते ॥६॥ (१०४-) व्याख्याता (११७)

अथ सप्तमी—

२ ३ १ २ ३ १ २ ३ १ २
गिरस्त इन्द ओजसा मर्मृज्यन्ते अपस्युवः।
२ ३ १ २ ३ १ २
याभिर्मदाय शुम्भसे ॥ ७ ॥ ( १०४३ )

पदपाठः-गिरः १। ते ६। इन्दो सं०। ओजसा ३। मर्मृज्यन्ते क्रि०। अपस्युवः १। याभिः ३। मदाय ४। शुम्भसे क्रि० ॥

अन्वितपदार्थः-( इन्दो ) सोम ! ( ते ) तव त्वत्कृ-

तेन ( ओजसा ) बलेन ताः (अपस्युवः) कर्मेच्छवः पुरुषार्थपराः ( गिरः ) वाचः ( मर्मृज्यन्ते ) शोध्यन्ते (याभिः) वाग्भिः सह ( मदाय ) हर्षाय (शुम्भसे) शोध्यसे ॥ सोमपानेन ओजोबलं वाक्सौष्ठवं च जायते तदर्थं मनुष्यैः सोमाभिषवोविधेय इत्यर्थः ॥ ऋग्वेदे ९ । २ । ७ ऽपि ॥ ७ ॥

भाषार्थः-(इन्दो) सोम ! ( ते ) तेरे किये ( ओजसा ) बल के साथ वे ( अपस्युवः ) कर्म=पुरुषार्थ चाहने वाली ( गिरः ) वाणियें ( मर्मृज्यन्ते ) शोधी जाती हैं ( याभिः ) जिन वाणियों सहित ( मदाय ) हर्ष के लिये ( शुम्भसे ) शुद्ध किया जाता है ॥ तात्पर्य यह है कि सोमपान से ओज बल, दृष्टि, पुष्टि और वाणी सुधरती है एतदर्थ इस का अभिषव करना चाहिये ॥ ऋ० ९ । २ । ७ में भी ॥ ७ ॥

अथाऽष्टमी-

२ ३ १ २ ३ १ २ ३ १ २
तं त्वा मदाय घृष्वय उ लोककृत्नुमीमहे ।
२ ३ १ २ ३ २
तव प्रशस्तये महे ॥ ८ ॥ ( १०४१ )

पदपाठः-तम्, त्वा २ । मदाय ४ । घृष्वये ४ । उ अ० । लोककृत्नुम् २ । ईमहे क्रि० तव ६ । प्रशस्तये, महे ४ ॥

अन्वितपदार्थः-वयं यजमानाः ( लोककृत्नुं ) लोकोद्दृष्टिस्तत्करं ( त्वा ) त्वां ( तं ) पूर्वोक्तगुणकरं सोमम् (उ) निश्चयेन ( तव ) सोमस्य ( महे प्रशस्तये ) महते प्रशंसनाय तथा (घृष्वये) शत्रूणां घर्षणक्षमाय (मदाय) हर्षाय ( ईमहे ) इच्छामः ॥ पूर्वोक्त वाग्दृष्टिसौकर्यादिलाभाय सोमरसो मनुष्यैरेष्टव्य इति भावः ॥ ऋग्वेदे तु ९ । २ । ८ प्रशस्तयो महीरिति पाठः ॥ ८ ॥

भाषार्थः-हम यजमान लोग (लोककृत्नुम्) दृष्टि के सहायक (तम्) उस पूर्वोक्त वाणी सुधारने वाले बलपराक्रमादिवर्धक (त्वा) तुझ सोम को (उ) निश्चय (तव) तुझ सोम की (महे प्रशस्तये) बड़ी प्रशंसा के लिये तथा (वृत्रध्ने) शत्रुवों को रगड़ डालने में समर्थ (मदाय) हृष्टि पुष्टि के लिये (ईमहे) चाहते हैं॥ अर्थात् मनुष्यों को दृष्टि वाणी बल शत्रुनाश इत्यादि प्रयोजनों के लिये सोम रस की इच्छा करनी चाहिये॥ ऋ० ९। २। ८ के पाठभेद संस्कृत भाष्य में देखिये॥ ८॥

अथ नवमी—

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
गोषा इन्दो नृषा अस्यश्वसा वाजसा उत।
३ २ ३ १ २ ३ २
आत्मा यज्ञस्य पूर्व्यः॥ ९॥ (१०४५)

पदपाठः-गोषाः १। इन्दो सं०। नृषाः १। असि क्रि०। अश्वसाः, वाजसाः १। उत अ०। आत्मा १। यज्ञस्य ६। पूर्व्यः १॥

अन्वितपदार्थः-(इन्दो) सोम! (गोषाः) गवां वेन्द्रियाणां दाता (अश्वसाः) अश्वानां वा प्राणानां दाता (वाजसाः) अन्नस्य वा बलस्य दाता (नृषाः) वीराणां दाता (उत) तथा (यज्ञस्य) ज्योतिष्टोमादेः (पूर्व्यः) पुराणःसनातनः (आत्मा असि)॥ ऋग्वेदे९। २। ९ ऽपि॥९॥

भाषार्थः-(इन्दो) सोम! (गोषाः) गौ वा इन्द्रियों का दाता (अश्वसाः) घोड़े वा प्राणों का दाता (वाजसाः) अन्न वा बल का दाता (नृषाः) वीर पुत्रादि का दाता (उत) और (यज्ञस्य) यज्ञ का (पूर्व्यः) सनातन (आत्मा) आत्मा [रूह] (असि) है॥ ऋ० ९। २। ९ में भी॥ ९॥

अथ दशमी—

३ १ २ ३ १२ २२ ३ १ २
अस्मभ्यमिन्दविन्द्रियं मधोः पवस्व धारया।

३ १ २ ३ १ २
पर्जन्यो वृष्टिमाँ इव ॥ १० ॥ [ ३ ] ( १०४६ )

पदपाठः—अस्मभ्यम् ४ । इन्दो सं० । इन्द्रियम् २ । मधोः ६ पवस्व क्रि० । धारया ३ । पर्जन्यः १ । वृष्टिमान् १ । इव अ० ॥

अन्वितपदार्थः—( इन्दो ) सोम ! ( इन्द्रियम् ) इन्द्रेण जुष्टमिन्द्रियस्य वीर्यस्य वा वर्धकं रसं ( मधोः ) मधुरस्याऽमृतस्य ( धारया वृष्टिमान् पर्जन्य इव ) (अस्मभ्यं) यजमानेभ्यः (पवस्व) क्षर ॥ ऋग्वेदे ९ । २ । १० ऽपि ॥१०॥

भाषार्थः—( इन्दो ) सोम ! ( इन्द्रियम् ) इन्द्र से सेवित वा वीर्यवर्धक रस को ( मधोः मधुराऽमृत की ( धारया ) धार से वृष्टिमान् पर्जन्य इव ) वर्षा वाले बादल सा (अस्मभ्यम्) हम यजमानों के लिये ( पवस्व ) वर्षा ॥ ऋ० ९ । २ । १० में भी ॥ १० ॥

इति षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

अथ तृतीये खण्डे प्रथमस्य दशर्चसूक्तस्य—हिरण्यस्तूप ऋषिः । पवमानः सोमो देवता । १ । ३ । ४ । १० गायत्री २ । ५ । ८ । ९ निचृद्गायत्री ६ । ७ विराड् गायत्री च छन्दः ॥ तत्र प्रथमा—

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
सना च सोम जेषि च पवमान महिश्रवः ।
१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥ १ ॥ ( १०४७ )

पदपाठः—सन क्रि० । च अ० । सोम सं० । जेषि क्रि० । च । पवमान सं० । महिश्रवः सं० । अथ, आ अ० । नः २ । वस्यसः २ । कृधि क्रि० ॥

अन्वितपदार्थः—( महिश्रवः ) महाकीर्त्ते ! ( पवमान, सोम ) वा परमेश्वर ! ( सन च ) देहि च धनादि ( जेषिच ) विजयं च कुरु ( अथ ) तथा ( नः ) अस्मान् ( वस्यसः )

श्रेयसः (कृधि) कुरु ॥ सोमपक्षे दानाद्यनुग्रहसंगतिर्वातपित्ताद्यनुग्रहोक्तिवत् ॥ सर्वमिदं दशर्चं सूक्तमृग्वेदे ९। ४। १-१० केवलमष्टम्यां वाजिन्=रयिमिति पाठभेदेनायातमस्ति ॥ १ ॥

भाषार्थः-(सहिश्रवः) हे महाकीर्त्ते! (पवमान) पवित्र! (सोम) वा परमेश्वर। (सन च) धनादि दान का अनुग्रह करो (जेषि च) और विजय करो (अथ) और (नः) हम को (श्रेयसः) श्रेष्ठ (कृधि) करो ॥ सोम के पक्ष में दानादि के अनुग्रहादि की संगति, वैद्यक के वातपित्तादि के अनुग्रहकथन के समान जानिये ॥ यह पूरा सूक्त ऋ० ९। ४। १-१० में दशों ऋचाओं का आया है केवल ८ वीं में "वाजिन्=रयिम्" इतना पाठभेद है ॥ १ ॥

अथ द्वितीया-

२ ३ २ ३ २ ३ २ १ २ ३ १ २
सना ज्योतिः सना स्वा३ऽ२र्विश्वा च सोम सौभगा।
१ २ ३ १ २
अथा नो वस्यसस्कृधि ॥ २ ॥ (१०४८)

पदपाठः—सन क्रि०। ज्योतिः २। सन। स्वः अ०। विश्वा २। च अ०। सोम सं०। सौभगा २। अथ० ॥

अन्वितपदार्थः-(सोम) वा परमेश्वर! (ज्योतिः) प्रकाशं (सन) देहि (स्वः) सुखं (सन) देहि (विश्वा सौभगा च) सर्वसौभाग्यानि च देहि (अथ नः वस्यसः कृधि) पूर्ववत् ॥ २ ॥

भाषार्थः—(सोम) वा परमेश्वर! (ज्योतिः) प्रकाश (सन) देओ (स्वः) सुख (सन) देओ (च) और (विश्वा) सब (सौभगा) सौभाग्य देओ। (अथ०) इत्यादि पूर्वमन्त्र के तुल्यार्थ जानिये ॥ २ ॥

अथ तृतीया-

२ ३ १ २ ३२३ ३ १ २ ३ १ २
सना दक्षमुत क्रतुमप सोम मृधो जहि।

१ २ ३
अथानो० ॥ ३ ॥ ( १०४९ )

पदपाठः-सन क्रि० । दक्षम् २ । उत अ० । क्रतुम् २ । अप अ० । सोम सं० । मृधः २ । जहि क्रि० । अथानो० ॥

अन्वितपदार्थः-( सोम ) वा परमेश्वर ! त्वं ( दक्षं ) बलं ( सन ) देहि ( उत ) अपिच ( क्रतुं ) कर्म देहि ( मृधः ) शत्रून् ( अपजहि ) नाशय ॥ ३ ॥

भाषार्थः( सोम ) वा परमेश्वर ! ( दक्षम् ) बल ( उत ) और ( क्रतुम् ) कर्म=पुरुषार्थ ( सन ) दीजिये तथा ( मृधः ) शत्रुवों का ( अपजहि ) नाश कीजिये ॥ ३ ॥

अथ चतुर्थी—

१ २ ३ २ ३ २ ३ १ २ ३ १ २
पवीतारः पुनीतन सोममिन्द्राय पातवे ।
१ २ ३
अथानो० ॥ ४ ॥ ( १०५० )

पदपाठः—पवीतारः सं० । पुनीतन क्रि० । सोमम् २ । इन्द्राय ४ । पातवे अ० । अथानो० ॥

अन्वितपदार्थः-( पवीतारः ) हे सोमस्याभिषोतारः, परमेश्वरस्योपासका वा (इन्द्राय) परमेश्वराय वा ( पातवे ) शोषणार्थं स्वीकारार्थं वा ( सोमम् ) कोमलं हृदयं वा ( पुनीतन ) शोधयत ॥ ४ ॥

भाषार्थः-( पवीतारः ) हे सोम के अभिषुत करने वालो ! वा परमेश्वर के उपासको ! तुम (इन्द्राय) वायु विशेष, वा परमेश्वर के लिये (पातवे) शोषणार्थ वा स्वीकारार्थ (सोमम्) सोम वा कोमल हृदय को (पुनीतन) शुद्ध करो ॥ ४ ॥

अथ पञ्चमी—

१र २र ३ १ २ ३ २ ३ २ ३ २ ३ १ २
त्वꣳ सूर्ये न आभज तव क्रत्वा तवोतिभिः ।

१ २ ३
अथानो० ॥ ५ ॥ ( १०५१ )

पदपाठः— त्वम् १ । सूर्ये १ । नः २ । आभज क्रि० । तव ६ । क्रत्वा ३ । तव । ऊतिभिः ३ । अथानो० ॥

अन्वितपदार्थः-सोम ! वा परमेश्वर ! ( त्वं ) ( तव क्रत्वा ) स्वीयस्वाभाविकक्रियया तथा ( तव ऊतिभिः ) स्वकृताभीरक्षाभिश्च ( नः ) अस्मान् (सूर्ये) कर्मण्यलोके ( आभज ) प्रापय ॥ ५ ॥

भावार्थः-सोम ! वा परमेश्वर ! ( त्वम् ) तू (तव) तेरी (क्रत्वा) स्वाभाविकी क्रिया से तथा ( तव ) तेरी की हुई ( ऊतिभिः ) रक्षाओं से ( नः ) हम को ( सूर्ये ) कर्मण्यलोक में ( आभज ) पहुंचादे ॥ ५ ॥

अथ षष्ठी—

२३ २ ३ २३ १ २ ३ १ २
तव क्रत्वा तवोतिभिर्ज्योक् पश्येम सूर्यम् ।
१ २ ३
अथानो० ॥ ६ ॥ ( १०५२ )

पदपाठः—तव । क्रत्वा । तव । ऊतिभिः । ज्योक् अ० । पश्येम क्रि० । सूर्यम् २ ॥ अथानो० ॥

अन्वितपदार्थः-सोम ! वा परमेश्वर ! ( तव क्रत्वा तव ऊतिभिः ), ( ज्योक् ) चिरं ( सूर्यम् ) कर्मण्यलोकं ( पश्येम ) ॥ ६ ॥

भावार्थः-सोम ! वा परमेश्वर ! ( तव क्रत्वा ) तेरी स्वाभाविकी क्रिया से तथा ( तव ऊतिभिः ) तेरी की हुई रक्षाओं से हम ( ज्योक् ) चिरकाल तक ( सूर्यम् ) कर्मण्यलोक को ( पश्येम ) देखें ॥ ६ ॥

अथ सप्तमी—

३क २र ३ १ २ ३ १ २ ३ २
अभ्यर्ष स्वायुध सोम द्विबर्हसꣳ रयिम् ।
१ २ ३
अथानो० ॥ ७ ॥ ( १०५३ )

पदपाठः-अभ्यर्ष क्रि०। स्वायुध, सोम सं०। द्विबर्हसम्, रयिम् २। अथानो०॥

अन्वितपदार्थः-( स्वायुध ) स्वायोधन! ( सोम ) वा परमेश्वर ! ( द्विबर्हसम् ) द्वयोर्द्यावापृथिव्योः स्थानयोः परिवृढं ( रयिम् ) धनम् ( अभ्यर्ष ) अभिगमय ॥ ७ ॥

भाषार्थः- हे ( स्वायुध ) भले धर्मानुकूल युद्ध के साधनभूत ! ( सोम ) सोम ! वा परमेश्वर ! ( द्विबर्हसम् ) दोनों=द्युलोक और पृथिवीलोक स्थानों में चढ़ा बढ़ा ( रयिम् ) धनैश्वर्य ( अभ्यर्ष ) प्राप्त करा ॥ ७ ॥

अथाऽष्टमी—

३ २ ३ २ ३ १ २ ३ १ २ ३ २
अभ्यऽ३ऽर्षानपच्युतो वाजिन्त्समत्सु सासहिः ।
१ २ ३
अथानो० ॥ ८ ॥ ( १०५४ )

पदपाठः-अभ्यर्ष क्रि०। अनपच्युतः १। वाजिन् सं० । समत्सु ७। सासहिः १। अथानो० ॥

अन्वितपदार्थः-( वाजिन् ) बलवन्सोम ! ( अनपच्युतः ) शत्रुभिरनाहतः ( सासहिः ) शत्रूणामभिभविता त्वम् ( अभ्यर्ष ) अस्माकं त्वत्सेविनां (समत्सु) संग्रामेषु सर्वतः प्रसर ॥

अथवा-( वाजिन् ) बलिष्ठतम ! परमेश्वर ! (अनपच्युतः ) अक्षरोऽविनाशी ( सासहिः ) दुष्टदमनस्त्वम्

( समत्सु ) कामादिभिः संग्रामेषु ( अभ्यर्ष ) अस्माकमु-पासकानां हृदयेषु सर्वतः सहायको भव ॥ ८ ॥

भाषार्थः-( वाजिन् ) बलदायक सोम ! (अनपच्युतः) अन्यों से न दबने वाला और (सासहिः) अन्यों को स्वयं दबाने में समर्थ तू ( समत्सु ) संग्रामों में ( अभ्यर्ष ) सर्वतः प्रभाव जमा ॥

अथवा-( वाजिन् ) अनन्तबल ! परमेश्वर ! (अनपच्युतः ) अक्षर अवि-नाशी ( सासहिः ) दुष्टदमन ! ( समत्सु ) कामादि शत्रुओं के साथ संग्रामों में हमारी ( अभ्यर्ष ) सहायता को प्राप्त हूजिये ॥ ८ ॥

अथ नवमी—

२ ३१२ ३ १२ ३ १ २

त्वां यज्ञैरवीवृधन्पवमान विधर्मणि ।

१ २ ३

अथानो० ॥ ९ ॥ ( १०५५ )

पदपाठः-त्वाम् २ । यज्ञैः ३ । अवीवृधन् क्रि० । पवमान सं० । विधर्मणि १ । अथानो० ॥

अन्वितपदार्थः-( पवमान ) पवित्रस्वरूप ! सोम ! वा परमेश्वर ! यजमाना उपासका वा ( विधर्मणि ) कर्म-यज्ञे योगयज्ञे वा ( त्वां ) ( यज्ञैः ) आहुतिभिः स्तुति-भिर्वा ( अवीवृधन् ) वर्धयन्ति स्तुवन्ति वा ॥ ९ ॥

भाषार्थः-( पवमान ) पावनस्वरूप ! सोम वा परमेश्वर ! ( विधर्मणि ) कर्मयज्ञ वा योगयज्ञ में ( त्वाम् ) तुझ को ( यज्ञैः ) आहुतियों वा स्तुतियों से ( अवीवृधन् ) यजमान बढ़ाते वा उपासक स्तुत करते हैं ॥ ९ ॥

अथ दशमी—

३१ २३ २३ २ ३१ २ ३२ ३१२

रयिं नश्चित्रमश्विनमिन्दो विश्वायुमाभर ।

१२ ३ १ २

अथानो वस्यसस्कृधि ॥ १० ॥ [ ४ ] ( १०५६ )

पदपाठः-रयिम् २। नः ४। चित्रम्, अश्विनम् २। इन्दो सं०। विश्वायुम् २। आभर क्रि०। अथानो० ॥

अन्वितपदार्थः-( इन्दो ) सोम! वा परमेश्वर! त्वं ( चित्रं ) नानाविधम् ( अश्विनम् ) प्राणाय हितं ( विश्वायुं ) पूर्णायुष्यं ( रयिं ) धनं ( नः ) अस्मभ्यम् ( आभर ) आहर ॥१०॥

भाषार्थः-( इन्दो ) सोम! वा परमेश्वर! ( चित्रम् ) अनेक प्रकार के ( अश्विनम् ) प्राण को हित और ( विश्वायुम् ) पूर्णायुरूप ( रयिम् ) धन ( आभर ) प्राप्त कराओ ॥ १० ॥

तरत्स मन्दीति चतुर्ऋचस्य द्वितीयसूक्तस्य उचथ्य ऋषिः। सोमो देवता। गायत्री छन्दः ॥तत्र प्रथमा—

२ ३ २ ३ १ २ ३ १ २ ३ १र २र २ ३ २ ३ १
तरत्स मन्दी धावति धारा सुतस्यान्धसः। तरत्स मन्दी
२
धावति ॥ १ ॥ ( १०५७ ) व्याख्याता ( ५०० )

अथ द्वितीया—

३ १ २ ३ १ २ ३ १ २ ३ १ २
उत्सा वेद वसूनां मर्त्तस्य देव्यवसः ॥
२ ३ २ ३ १ २
तरत्स मन्दी धावति ॥ २ ॥ ( १०५८ )

पदपाठः-उत्सा १। वेद क्रि०। वसूनाम् ६। मर्त्तस्य ६। देवी १। अवसः अ०। तरत् १। सः १। मन्दी १। धावति क्रि० ॥

अन्वितपदार्थः-( वसूनां ) धनानाम् ( उत्सा ) उत्सरणशीला प्रदात्री ( देवी ) प्रद्योतमाना [ धारा ] ( मर्त्तस्य ) मनुष्यम् ( अवसः ) रक्षितुं ( वेद ) जानाति ( सः ) ( मन्दी ) हर्षपुष्टिकरः सोमः ( तरत् ) त्वरयन् ( धावति ) गच्छति ॥ ऋग्वेदे ९। ५८। २ ऽपि ॥२॥

भाषार्थः-( वसूनाम् ) धनों की ( उत्सा ) देने वाली (देवी) प्रकाशमाना [ सोमधारा ] ( मर्त्तस्य ) मनुष्य की ( अवसः ) रक्षा करना ( वेद ) जानती है (सः) वह ( मन्दी ) हृष्टिपुष्टिकारक सोम ( तरत् ) त्वरा करता हुवा (धावति) गमन करता है ॥ ऋ० ९ । ९८ । २ में भी ॥ २ ॥

अथ तृतीया—

३ १ २ ३ २ ३ २ ३ १ २

ध्वस्रयोः पुरुषन्त्योरासहस्राणि दद्महे ।

२ ३ २ ३ १ २

तरत्स मन्दी धावति ॥ ३ ॥ (१०५९)

पदपाठः–ध्वस्रयोः, पुरुषन्त्योः ६ । आ अ० । सहस्राणि २ । दद्महे क्रि० ॥

अन्वितपदार्थः– (ध्वस्रयोः) गतिमत्योः (पुरुषन्त्योः) पुरुषार्थवत्योः सोमधारयोः ( सहस्राणि ) असंख्यातानि सुखानि वयमृत्विजः ( आदद्महे ) प्रतिगृह्णीमः ( तर० ) ऋग्वेदे ९ । ९८ । ३ । ऽपि ॥ ३ ॥

भाषार्थः-( ध्वस्रयोः ) चलने वाली ( पुरुषन्त्योः ) पुरुषार्थवती दो सोमधाराओं के ( सहस्राणि ) असंख्य समूहों को ( आदद्महे ) हम ऋत्विज् लोग ग्रहण करते हैं । तरत्० पूर्ववत् ऋ० ॥ ९ । ९८ । ३ में भी ॥ ३ ॥

अथ चतुर्थी—

१र २र ३ १ ३ १ २ ३ १ २ ३ १ २

आ ययोस्त्रिꣳशतं तना सहस्राणि च दद्महे ।

तरत्स मन्दी धावति ॥ ४ ॥ [५] (१०६०)

पदपाठः–आ अ० । ययोः ६ । त्रिंशतम् २ । तना २ । सहस्राणि २ । च अ० । दद्महे क्रि० । तर० ॥

अन्वितपदार्थः–(ययोः) सोमस्योक्तयोर्धारयोः ( त्रिंशतं सहस्राणि च ) ३०००० एतत्संख्योपलक्षितानि बहूनि ( तना ) विस्तृतानि सुखानि ( आ–दद्महे ) प्रतिगृह्णीमः

स मन्दी तरद्धावतीति पूर्ववत् ॥ ऋग्वेदे ९। ९८। ४ ऽपि॥४॥

भाषार्थः-(ययोः) जिन दो सोम की उक्त धाराओं के(त्रिंशतं सहस्राणि च) ३०००० संख्योपलक्षित ( तना ) विस्तृत सुखों को ( आ-दद्महे ) हम ग्रहण करते हैं "वह त्वरा करता सोम गमन करता है ॥ यह पूर्ववत् ॥ ऋ० ९। ९८। ४ में भी ॥ ४ ॥

एते सोमा इति तृचस्य तृतीयसूक्तस्य-जमदग्निर्ऋषिः । सोमो देवता । गायत्री छन्दः ॥ तत्र प्रथमा—

३ १र २र ३ २र २र ३ २

एते सोमा असृक्षत गृणानाः शवसे महे ।

३ १ २ ३ १ २

मदिन्तमस्य धारया ॥ १ ॥ ( १०६१ )

पदपाठः-ऐते, सोमाः १ । असृक्षत क्रि० । गृणानाः १ । शवसे, महे ४ । मदिन्तमस्य ६ । धारया ३ ॥

अन्वितपदार्थः-( मदिन्तमस्य ) हर्षयितृतमस्य सोमस्य ( धारया ) (एते सोमाः) रसाः (गृणानाः) प्रशस्यमानाः सन्तः ( महे ) महते (शवसे) बलाय तत्प्राप्त्यर्थम् (असृक्षत) अग्नौ सृज्यन्ते ॥ ऋग्वेदे तु ९।६२।२२ शवसे= श्रवसे इति पाठः ॥ १ ॥

भाषार्थः-( मदिन्तमस्य ) अत्यन्त हृष्टिपुष्टिकारक सोम की ( धारया ) धारा से ( एते ) ये ( सोमाः ) सोमरस ( गृणानाः ) प्रशंसित किये जाते हुवे ( महे ) बड़े ( शवसे ) बल के लिये ( असृक्षत ) अग्नि में छोड़े जाते हैं॥ ऋ० ९। ६२। २२ का पाठभेद संस्कृतभाष्य में देखिये ॥ १ ॥

अथ द्वितीया—

३ १र २र ३ १ २ ३ १ ३ २ १ २

अभि गव्यानि वीतये नृम्णा पुनानो अर्षसि ।

३ १ २ ३ १ २

सनद्वाजः परिस्रव ॥ २ ॥ ( १०६२ )